# आभार प्रदर्शन

मुनिराज श्रीहर्षविजयजी महाराजना सद्गत सुशिष्य पंन्यासजी श्रीपुष्पविजयजी महाराजनी सदुपदेशथी आ ग्रन्थ श्रीमहेसाणानिवासी स्वर्गस्थ शेठ माणेकलाल त्रिकमदासना पुण्यस्मरणार्थे छपाववामां आव्यो छे तेनो कुल खर्च तेमना लघु बन्धु शेठ उगमलाल त्रिकमदासनी संमतिथी स्वर्गस्थना धर्मपत्नी बाइ नाथी तर्फे श्रीमती तरफथी मळेलो छे आ सत्कार्य माटेनी आवी मोटी उदारता माटे तेमनो अंतःकरणथी उपकार मानवामां आवे छे

Published by Babaldas Nagindas Doshi, Secretary Shri Jain Shreyaskar Mandal–Mahesana.

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 26-28 Kolbhat Lane, Bombay



સ્વર્ગસ્થ શેઠ માણેકલાલ ત્રીકમદાસ પારેખ,

મહેસાણા, ગુજરાત

# अथ चन्द्रप्रभा ( हैमकौमुदी ) ।

श्रीवीतरागाय नमः ।

प्रणम्य श्रीमदर्हन्तं, सुबोधां प्रक्रियां ब्रुवे ।
चन्द्रप्रभाभिधां सिद्धहेमचन्द्रानुसारिणीम् ॥ १ ॥
श्रीहेमचन्द्राचार्य्याय नमः स्वाचार्य्याय सिद्धये ।
यत्प्रभावान्मनीषा मे न स्खलेत्कुत्रचिद्विधौ ॥ २ ॥

## अर्हम् ॥१।१।१॥

अर्हमित्यक्षरं परमेश्वरवाचकं शास्त्रादौ प्रणिधेयम् ।

## सिद्धिः स्याद्वादात् ॥१।१।२॥

नित्यानित्याद्यनेकधर्माणामेकवस्तुनि स्वीकारः स्याद्वादः । ततः प्रकृताना[illegible]नां सिद्धिर्निष्पत्तिर्ज्ञेया । एकस्यैव ह्रस्वदीर्घादिविधानं नानाकारकसंयोगः [illegible]नाधिकरण्यादिकं च स्याद्वादं विना न घटते ।

## लोकात् ॥१।१।३॥

इहानुक्तं ( यत् ) संज्ञान्यायवर्णाम्नायादि तदन्येभ्यो वैयाकरणादिभ्यो [illegible]म् । अतः परेभ्य एव वर्णसमाम्नायो वेद्यः । तत्र–

## औदन्ताः स्वराः ॥१।१।४॥

अकाराद्या औकारपर्य्यन्ता वर्णाः स्वरसंज्ञाः स्युः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ।

## एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥१।१।५॥

मात्रा वर्णोच्चारणसमयविशेषः । एकद्वित्र्युच्चारणमात्राः स्वरा ह्रस्वदीर्घप्लुतसंज्ञाः स्युः । अ इ उ ऋ ऌ ह्रस्वाः । आ ई ऊ ॠ ॡ ए ऐ ओ औ दीर्घाः । [illegible]ा एकमात्राः । द्विमात्रा दीर्घाः । अ ३ इ ३ उ ३ इत्याद्यास्त्रिमात्राः प्लुताः । [illegible]एकमात्रकमर्द्धमात्रकमिति अर्धमात्रिकयोर्व्यञ्जनयोः समुदायैकमात्रत्वे [illegible]संज्ञाया अभावादमतक्ष्य इत्यत्र तोऽस्तो न भवति ।

## अनवर्णा नामी ॥१।१।६॥

अवर्णरहिता स्वरा नामिसंज्ञाः स्युः। इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ

## ॡदन्ताः समानाः ॥१।१।७॥

अकाराद्या ॡकारान्ताः स्वराः समानसंज्ञाः स्युः। अ आ इ ई ऋ ॠ ऌ ॡ।

## ए ऐ ओ औ सन्ध्यक्षरम् ॥१।१।८॥

## अं अः अनुस्वारविसर्गौ ॥१।१।९॥

अकारावुच्चारणार्थौ। अं इति नासिक्योच्चार्यः। अः इति कण्ठ्यमावनुस्वारविसर्गसंज्ञौ स्याताम्।

## कादिर्व्यञ्जनम् ॥१।१।१०॥

क आदिर्यस्य स कादिः। कादिर्वर्णो हकारपर्यन्तो व्यञ्जनसंज्ञः। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ य र ल व। श ष स ह। कस्य आदिः कादिरित्यपि विग्रहः। तेन विसर्गश्च गृहीतः। तावपि व्यञ्जनसंज्ञौ स्याताम्।

## अपञ्चमान्तस्थो धुट् ॥१।१।११॥

पञ्चमान्तस्थावर्जः कादिर्वर्णो धुट्संज्ञः स्यात्। क ख ग घ। झ। ट ठ ड ढ। त थ द ध। प फ ब भ। श ष स ह।

## पञ्चको वर्गः ॥१।१।१२॥

कादिषु यो य पञ्चवर्णपरिमाणः प्रसिद्धः स वर्गसंज्ञः स्यात्। क ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म।

## यरलवा अन्तस्थाः ॥१।१।१५॥

स्पष्टम्। ता सानुनासिका निरनुनासिकाश्च भेदा।

## अं अः ᳵक ᳶप शषसाः शिट् ॥१।१।१६॥

अनुस्वारो विसर्गो वज्राकृतिर्गजकुम्भाकृतिश्च वर्णाः शषसाश्च शिट्संज्ञाः
स्युः। अकारककारपकारा उच्चारणार्थाः।

## तुल्यस्यानास्यप्रयत्नः स्वः ॥१।१।१७॥

यत्र पुद्गलस्कन्धस्य वर्णभावापत्तिस्तत्स्थानम् उरःकण्ठादि, आस्ये प्रयत्नः
आन्तरः संरम्भः। तुल्यौ वर्णान्तरेण सदृशौ स्थानास्यप्रयत्नौ यस्य स वर्णस्तं
प्रति स्वसंज्ञः स्यात्। तत्र स्थानानि यथा—अवर्णविसर्गकवर्गहकाराः कण्ठ्याः।
सर्वमुखस्थानोऽवर्णः, हविसर्गावुरस्यौ, कवर्गो जिह्वामूल इत्यन्ये। इवर्णचवर्ग
यशास्तालव्याः। उवर्णपवर्गोपध्मानीया ओष्ठ्याः। ऋवर्णटवर्गरषा मूर्धन्याः।
लृवर्णतवर्गलसा दन्त्याः। ए ऐ (कण्ठ) तालव्यौ। ओ औ ओ(कण्ठो)ष्ठ्यौ। वो
दन्तोष्ठ्यः। जिह्वामूलीयो जिह्व्यः। नासिक्योऽनुस्वारः। ङ ञ ण न माः स्वस्था
नासिकास्थानाः॥

अथास्यप्रयत्नः॥

स्पृष्टं करणं वर्ग्याणाम्। ईषत्स्पृष्टं करणं यरलवानाम्। ईषद्विवृतं करणं
शषसहानाम्। विवृतं करणं स्वराणाम्। तत्र तावदचोऽष्टादश भेदाः। उदात्तानुदात्तस्व
रितभेदात्। उच्चैरुपलभ्यमान उदात्तः। नीचैरनुदात्तः। समवृत्त्या स्वरितः।
त्रयोऽपि सानुनासिकनिरनुनासिकभेदात् षोढा। मुखेन नासिकया सहोच्चार्य
माणः सानुनासिकः, तदन्यो निरनुनासिकः। एते षड् भेदा ह्रस्वस्य। एवं
दीर्घप्लुतयोः। इत्यष्टादश भेदा अवर्णस्य परस्परं स्वाः। एवमिवर्णास्तावन्तः
स्वाः। उवर्णाः स्वाः। ऋवर्णाः स्वाः। लृवर्णाः स्वाः। लृवर्णस्य दीर्घा न सन्तीति
केचित्। प्रयोगादर्शनात्। सन्ध्यक्षराणां ह्रस्वा न सन्तीति तानि प्रत्येकं द्वादश
भेदानि। तत्र एकारास्तालव्या विवृततराः स्वाः। ऐकारास्तालव्या अतिविवृततराः
स्वाः। ओकारा ओष्ठ्या विवृततराः स्वाः। औकारा ओष्ठ्या अतिविवृततराः
स्वाः। वर्ग्याः पञ्च पञ्च परस्परं स्वाः। यलवानामनुनासिकोऽननुनासिकश्च द्वौ
भेदौ मिथः स्वौ। रेफशषसहानां स्वतुल्यस्थानास्यप्रयत्नस्याभावान्न स्वसंज्ञा। सूत्रे
आस्यग्रहणं बाह्यप्रयत्ननिषेधार्थम्। ते हि आसन्नः (७।४।१२०) इत्यत्रैवोपयो
गिनः। न पुनः स्वसंज्ञायाम्। के पुनस्ते? विवारसंवारौ, श्वासनादौ, घोषवद
घोषवत्ता, अल्पप्राणमहाप्राणता, उदात्तोऽनुदात्तः स्वरितश्चेत्येकादश। तत्र
वर्ग्याणां प्रथमद्वितीयाः ᳵ कᳵ पविसर्गशषसाश्चेत्येषां विवारः श्वासोऽघो
षश्चेति बाह्यप्रयत्नत्रयम्। वर्गाणां तृतीयचतुर्थपञ्चमान्तस्था हकारोऽनुस्वारश्चेत्येषां

सवारो नादो घोषश्चेति प्रयत्नः। वर्ग्याणां प्रथमतृतीयपञ्चमा इतरे सर्वे महाप्राणाः। एषां बाह्यत्व वर्णनिष्पत्तिकालात्पूर्वं वायुप्रयोगेनोत्पद्यमानत्वात्। स्पृष्टतादयस्तु स्थानास्यप्रयत्नव्यापारेण वर्णोत्पत्तिकाल एव सहकारिण इति तेषामान्तरत्वम्। अत्र केऽपि वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे यमो नाम पूर्वसदृशो वर्णः प्रसिद्ध्यतीत्याहुः। पलिक्क्नी चख्ख्नतु अग्ग्निः घ्घ्नन्तीत्यादि क्रमेण कखगघेभ्यः परे तत्सदृशा यमाः। तेऽपि विचारादिप्रयत्नाः। स्थानग्रहणं किम्? कचटतपानां तुल्यास्यप्रयत्नानामपि भिन्नस्थानानां स्वत्वं नास्ति। तेन तर्ह्यौ तर्हुंभित्यत्र धुटो धुटि स्वे वा (१।३।४८) इति पकारस्य तकारे न लोपः। आस्यप्रयत्नग्रहणं किम्? चवर्गयशानां तुल्यस्थानानामपि भिन्नास्यप्रयत्नानां न स्वत्वम्। तेन अरूकछ्य्योततीत्यत्र धुटो धुटि स्वे वा (१।३।४८) इति शकारस्य चकारे न लोपः। तपरो वर्णस्तन्मात्रस्य ग्राहकः। अतोति रोरुः (१।१।१९)।

## वृद्धिरारैदौत् ॥३।३।१॥

आकार आर् ऐकार औकारश्च प्रत्येकं वृद्धिसंज्ञाः स्युः।

## गुणोऽरेदोत् ॥३।३।२॥

अर् एत् ओत् एते प्रत्येकं गुणसंज्ञाः स्युः।

## क्रियार्थो धातुः ॥३।३।३॥

इति क्रिया प्रवृत्तिर्व्यापार इति यावत्। पूर्वापरीभूता साध्यमानलक्षणा, सा एवार्थोऽभिधेयं यस्य स शब्दो धातुसंज्ञः स्यात्।

## न प्रादिरप्रत्ययः ॥३।३।४॥

प्रादिर्वक्ष्यमाणगणः। स धातुर्धातोरवयवो न स्यात्। न प्रयुक्तस्य ततः पर एव धातुर्भवेत्। अप्रत्ययः—न चेत्ततः परः प्रत्ययः स्यात्।

## चादयोऽसत्त्वे ॥१।१।३१॥

सत्त्व लिङ्गसंख्यावद् द्रव्यम्, इदन्तदित्यादिसर्वनामव्यपदेश्यम्, विशेष्यमिति यावत्। ततोऽन्यत्र वर्तमानाश्चादयोऽव्ययसंज्ञाः स्युः।

## धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च ॥३।१।१॥

धातोः सम्बन्धी तदर्थद्योती प्रादिरुपसर्गसंज्ञः स्यात्। तस्माच्च धा-
...उपते, न परेण न व्यवहितः। पूजार्थौ स्वती

र्थमर्पयित्वा । प्रादिर्गतिसंज्ञोऽपि क्रियाप्रयोगे । प्रादयश्चादावन्तर्गणरूपा निपाताः । प्र परा अप सम् अनु अव निस् दुस् एतौ रान्तावपि । वि आङ् नि प्रति परि अधि अपि सु उद् अति अभि । प्रवेत्यप्यय विभाषायाम् । स्व रूप शब्दस्या शब्दसंज्ञायाम् । शब्दस्य स्व रूप संज्ञि स्यात् शब्दशास्त्रे या संज्ञा तां विमुच्य ।

## विशेषणमन्तः ॥७।४।११३॥

विशेषण विशेष्यसमुदायस्यान्त' अवयव' स्यात् । अतः स्यमोत् (१।४।५७) अत्रात इत्युक्तेऽकारान्तसमुदायो व्यादीयते । विराम' शब्दावसानम् । वर्णानां प्रतिविना कथन संहितासंज्ञम् ।

## स्यौजसमौशस्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसि-भ्याम्भ्यस्ङसोसाम्ङ्योस्सुपा त्रयी त्रयी प्रथमादिः ॥१।१।१८॥

स्यादीनां प्रत्ययानां त्रयी त्रयी यथासंख्य प्रथमा द्वितीया-तृतीया-चतुर्थी पञ्चमी-षष्ठी-सप्तमीसंज्ञा स्यात् ।

## स्यादिर्विभक्तिः ॥१।१।१९॥

स्यादयस्त्यादयश्च प्रत्यया' सुपत्यामहिपर्यन्ता विभक्तिसंज्ञा' स्यु' ।

## तदन्त पदम् ॥१।१।२०॥

स्याद्यन्तं त्याद्यन्त च शब्दरूपं पदसंज्ञ स्यात् । स्वरामन्तरितो व्यञ्जनसमुदाय' संयोग' । 'दीर्घो विसर्गानुस्वारयुक्संयोगपरो गुरुः । असंयोगपरो ह्रस्वो विसर्गाद्युज्झितो लघुः ॥ १ ॥'

## सविशेषणमाख्यात वाक्यम् ॥१।१।२६॥

त्याद्यन्त पदमाख्यातम् । विशेषणै' प्रयुज्यमानैरितरैर्वा सहित प्रयुज्यमा नमन्यद्वाऽऽख्यात वाक्यसंज्ञं स्यात् । धर्मो वो रक्षतु । धर्मो मो रक्षतु इत्यादि ।

## अप्रयोगीत् ॥१।१।३७॥

इह शास्त्र उपदिश्यमानो वर्णस्तत्समुदायो वा कार्यार्थमुपादितो यो लौकिके शब्दप्रयोगे न दृश्यते स एवापगच्छतीति इत्संज्ञ' स्यात् । प्रासस्य वर्णस्य त त्समुदायस्य चाऽदर्शनमित्यर्थलोपसंज्ञ' स्यात् ।

## अनन्तः पञ्चम्याः प्रत्ययः ॥१।१।३८॥

पञ्चम्यर्थाद्विधीयमानः शब्दः प्रत्ययसंज्ञः स्यात् । अन्तशब्दोच्चारणेन यो विधीयते । इति संज्ञाप्रक्रिया ॥

अथ परिभाषाप्रकरणम् ।

प्राज्ञीमयस्तमोभेदी, कमलोल्लाससिद्धिदः ।
श्रीनाभेयश्चिरं जीयान्मूलराजो जिनेश्वरः ॥ १ ॥

नामिनो गुणवृद्धी । गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र नामिन इति षष्ठ्युपस्थेयम् । स्वरस्य ह्रस्वदीर्घप्लुताः ।

## आसन्नः ॥७।४।१२०॥

इहासमानासन्नप्रसङ्गे यथास्वं स्थानार्थप्रमाणादिभिरासन्न एव विधिः स्यात्

## सप्तम्या पूर्वस्य ॥७।४।१०५॥

सप्तम्या निर्दिष्टे यत्कार्यमुच्यते तत्पूर्वस्याऽनन्तरस्य स्थाने स्यात् ।

## पञ्चम्या निर्दिष्टे परस्य ॥७।४।१०४॥

## षष्ठ्याऽन्त्यस्य ॥७।४।१०६॥

षष्ठीनिर्देशेन यत्कार्यमुच्यते तत्तस्यान्त्यवर्णस्य स्थाने स्यात् ।

## अनेकवर्णः सर्वस्य ॥७।४।१०७॥

अनेकवर्ण आदेशः षष्ठ्या निर्दिष्टेऽपि सर्वस्य स्यात् ।

## प्रत्ययस्य ॥७।४।१०८॥

प्रत्ययस्य स्थाने विधीयमान आदेशः सर्वस्य स्यात् ।

## प्रत्ययः प्रकृत्यादेः ॥७।४।११५॥

यस्मात् यः प्रत्ययो विधीयते सा तस्य प्रकृतिः । प्रत्ययः प्रकृत्यादेः समुदायस्य विशेषणं स्यात् नोनाधिकस्य । परान्नित्यं, नित्यादन्तरङ्गम्, अन्तरङ्गाच्चानवकाशं बलीयः उत्तरोत्तरतया । असिद्धं बहिरङ्गमन्तरङ्गे । नानिष्टार्था शास्त्रप्रवृत्तिः । इति परिभाषाविशेषः ॥

अथ स्वरसन्धिप्रकरणम्।

## समानानां तेन दीर्घः ॥१।२।१॥

समानवर्णानां तेन-सजातीयेन परेण समानेन सहितानां दीर्घः स्यात्। आसन्नः, द्वयोः पूर्वपरयोः स्थाने एको दीर्घः स्यादिति सूत्रार्थः। लोकात्संहिता। व्यञ्जनमस्वरं परेण संयोज्यमित्यर्थः। वृषभ अग्रे अजितो इति स्थिते वृषभा जितो इति जातम्। एवं दधि इदं दधीदम्। मनु उदय मनूदयः। पितृ ऋषभ पितृषभ। लृ लृकार लृकारः। तव आस्यं तवास्यम्। श्रद्धा आगता श्रद्धाऽऽगता। मुनि ईश मुनीश। श्री इष्टा श्रीष्टा।

## ऋलृति ह्रस्वो वा ॥१।२।२॥

समानानामृकारे लृकारे च परे ह्रस्वो वा स्यात्। महा ऋषि महऋषिः। कन्या लृकार कन्यलृकारः। पक्षे महर्षिः। कन्यल्कारः। ह्रस्वविधानेन कार्यान्तरं न स्यादिति ह्रस्वस्यापि ह्रस्वः। वाल ऋश्य। पक्षे वालर्श्यः। नव ऋषिः। नवर्षिः। कश्चित्तु ह्रस्वत्वाभावपक्षे सन्धिमेव न मनुते। तेन खट्वा ऋश्य इत्यप्याह।

## ऋस्तयोः ॥१।२।५॥

लृकारऋकारयोः स्थाने यथासंख्यं परेण ऋता लृता च सहितयोर्ऋकारो द्विमात्र आदेशः स्यात्। लृ ऋषभ ऋषभः। होतृ लृकार होतृकारः।

## लृत ऋलृ ऋलृभ्यां वा ॥१।२।३॥

अत्र पूर्वलृकारस्य परेण ऋकारेण सह ऋ इत्यादेशोऽपि विकल्पेन स्यात्। स च रेफद्वयात्मकः। ऋकारस्वरयुक्तश्च। एवं द्विमात्रः। द्वाभ्यां रेफाभ्यामेका मात्रा, द्वितीया ऋकारस्येति। एवं पूर्वलृकारस्य परेण लृकारेण सह वा लृ इत्यादेशोऽपि। द्वौ लकारौ। तयोरेका मात्रा, एका लृकारस्वरस्य इति द्विमात्रिकता ज्ञेया। स्वरव्यञ्जनसमुदायरूपावेतौ।

## ऋतो वा तौ च ॥१।२।४॥

पूर्वऋकारस्यापि परेण ऋता सह ऋ इत्यय, परेण लृता सह लृ इत्यय वा देशो ज्ञेयः। ऋता-पितृषभ पितृषभः पितृऋषभः। लृता-होतृलृकार होतृकारः होतृलृकारः इत्यादि।

## अवर्णस्येवर्णादिनैदोदरल् ॥१।२।६॥

अवर्णस्य स्थाने इवर्ण-उवर्ण-ऋवर्ण-लृवर्णे परे सह यथासंख्यमेत् ओत् अर् अल् इत्येत आदेशाः स्युः। जिन ईश जिनेशः। देव इष्ट देवेष्टः। माला

ह्रस्व' मालेव्य'। ऋणाय ऋतं काळोकम्। महाऋद्धि' महर्द्धिः। अत्र ह्रीवर्ते (१।१।११)त्यादिना पक्षे द्वित्वे महर्द्धिः।

## धुटो धुटि स्वे वा ॥१।३।४८॥

व्यञ्जनात्परस्य धुट' स्वे धुटि परे लुग्वा स्यात्। एवं द्वित्वाभावे एकधम् एकधम्। द्वित्वे लोपे च तथैव। द्वित्वे द्विधम् एकधम्। एकत्वेऽपि लोपे केवलैकम मिति त्रैरूप्यं ज्ञेयम्। महर्द्धि', महर्द्धिः, महर्षि'। तथल्कारः तथल्कार'।

## अन्नवर्गस्यान्तस्थातः ॥१।३।३३॥

अन्तस्थातःपरस्य नकारवर्जितस्य वर्गस्याद्य्रे रूपे वा स्याताम्। तवल्कार'।

## ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सत-रस्यार् ॥१।२।७॥

प्रादीनां सप्तानामवर्णस्य ऋणे परे परेण ऋता सहाऽऽर् स्यात्। प्र ऋणं प्रार्णम्। दश ऋण' दशार्णो देश'। ऋण ऋणम् ऋणार्णम्। वसनऋणं वसनार्णम्। एवं कम्बलार्णम्। वत्सरार्णम्। वत्सतरार्णम्। पक्षे ऋलृति ह्रस्वो वा (१।२।२)। प्र ऋणं, दश ऋणमित्यादि।

## ऋते तृतीयासमासे ॥१।२।८॥

ऋतशब्दे परेऽवर्णस्य स्थाने ऋता सहाऽऽर् स्यात्। तौ चेन्निमित्तनिमित्ति भावेकत्र तृतीयासमासे भवतः। शीतेन ऋत' शीतार्तः। दुःखेन ऋतः दुःखार्तः। तृतीयेति किम्? परमर्त'। ऋतेन कृत' ऋतकृत' परमऋासौ ऋतकृतश्च परमर्त कृत'। अत्र निमित्तनिमित्तिभावेकत्र तृतीयासमासे न स्तस्तेन न भवति।

## ऋत्यारुपसर्गस्य ॥१।२।९॥

उपसर्गस्यावर्णस्य स्थाने ऋकारादौ धातौ परे ऋकारेण सहार् स्यात्। स चापवादः। प्र ऋच्छति प्रार्च्छति। परा ऋध्नोति परार्ध्नोति। अत्र ऋलृति ह्रस्वो वा (१।२।२) इति न ह्रस्व'।

## नाम्नि वा ॥१।२।१०॥

उपसर्गस्यावर्णस्य ऋकारादौ नामावयवे धातौ परे परेण ऋकारेण सहार् वा स्यात्। प्र ऋषभीयति इति स्थिते प्रार्षभीयति, प्रर्षभीयति। ऌकारेणापि। उप ऌकारीयति उपार्कारीयति उपल्कारीयति।

## ऌत्याल् वा ॥ १।२।११ ॥

उपसर्गस्यावर्णस्य लृकारादौ नामधातौ परे परेण लृता सहाल् वा स्यात्। उप लृकारीयति उपाल्कारीयति, उपल्कारीयति।

## ऐदौत्सन्ध्यक्षरैः ॥ १।२।१२ ॥

अवर्णस्य सन्ध्यक्षरैः परैः सह ऐत् औत् इत्यादेशौ यथासङ्ख्यं स्याताम्। तव एषा तवैषा। तव ऐन्द्री तवैन्द्री। तव ओकः तवौकः। तव औपगव तवौपगव।

## ऊटा ॥ १।२।१३ ॥

अवर्णस्योटा सहौकारः स्यात्, आसन्नः। धौ अमे ऊतः धौतः। लावयति धावयतीति क्विपि णिलोपे अनुनासिके च्छ्वः शूट्॥ ४।१।१०८ ॥ इत्यूटि लौः धौः

## प्रस्यैषैष्योढोढ्यूहे स्वरेण ॥ १।२।१४ ॥

प्रशब्दस्यावर्णस्य एष एष्य ऊढ ऊढि ऊह इत्येतेषु परेण स्वरेण सह ऐ औ स्याताम्। प्र एषः प्रैषः। प्र एष्यः प्रैष्यः। प्र ऊढः प्रौढः। प्र ऊढिः प्रौढिः। प्र ऊहः प्रौहः। अर्थवद्ग्रहणे नानर्थकस्येति प्रोढवानित्यत्रोकार एव। ईषे ईष्ये च प्रेषः प्रेष्यः इत्येकार एव।

## स्वैरस्वैर्यक्षौहिण्याम् ॥ १।२।१५ ॥

स्वैर स्वैरिन् अक्षौहिणी इत्येतेषु अवर्णस्य परेण स्वरेण सह ऐत् औत् स्याताम्। स्वस्य ईरः स्वैरः। घञ्। स्व ईरोऽस्मिति स्वैरमास्यताम्। स्वैरिणी। अक्षौहिणी।

## अनियोगे लुगेवे ॥ १।२।१६ ॥

नियोगोऽवधारणम्। तदभावोऽनियोगः। तद्विषये एवेत्यव्यये परेऽवर्णस्य लुक् स्यात्। इह एव इहेव। नियोगे तु इहैव तिष्ठ मा गा दूरे। शाक अन्धुः शाकन्धुः, कुल अटा कुलटा, पतत् अञ्जलिः पतञ्जलिः, सीमन् अन्तः सीमन्तः केशविन्यासे, हल ईषा हलीषा, मनस् ईषा मनीषेत्यादि सर्वं पृषोदरादित्वात्सिद्धम्।

## वौष्ठौतौ समासे ॥ १।२।१७ ॥

ओष्ठशब्दे ओतुशब्दे च परेऽवर्णस्य लुग्वा स्यात् तौ चेदिभिन्नसनिमित्ति नावेकत्र समासे स्तः। बिम्ब ओष्ठी बिम्बोष्ठी। पक्षे बिम्बौष्ठी। बिम्बोष्ठः। बिम्बौष्ठः। स्थूल ओतुः स्थूलोतुः। स्थूलौतुः। समास इति किम्? हे राजपुत्रौष्ठं पश्य।

## ओमाङि ॥ १।२।१८ ॥

अवर्णस्य ओमि आङादेशे च लुक्स्यात्। अद्य ओम् अद्योम्। आङि—आ

ऊढा ओढा। अद्य ओढा अद्योढा। आकि दीर्घत्वेन सिद्धे लुग्विधानमनर्थकं स्यादिति आकिस्याकारेदोतो गृह्यते। आ इहि एहि, शिव एहि शिवेहि।

## उपसर्गस्यानिणेधेदोति ॥ १।२।१९ ॥

उपसर्गस्यावर्णस्य इण् एधवर्जिते एकारादौ ओकारादौ च धातौ परे लुक् स्यात्। प्र एलयति प्रेलयति। प्र ओषति प्रोषति। इणेधवर्जिते किम्? उप एति उपैति। प्र एधते प्रैधते।

## वा नाम्नि ॥ १।२।२० ॥

नामावयव एकारादावोकारादौ च धातौ परे उपसर्गावर्णस्य लुग्वा स्यात्। उप एडकीयति उपेडकीयति। पक्षे उपैडकीयति। प्र ओषधीयते प्रोषधीयते। पक्षे प्रौषधीयते।

## इवर्णादेरस्वे स्वरे यवरलम् ॥ १।२।२१ ॥

इवर्णोवर्णऋवर्णऌवर्णानामस्वे स्वरे परे यवरल इत्येते आदेशाः स्युः संहितायां विषये। दधि अत्र इति स्थिते स्थानासन्नत्वादिकारस्य यकारः।

## अदीर्घाद्विरामैकव्यञ्जने ॥ १।३।३२ ॥

अदीर्घात्स्वरात्परस्य रहस्वरवर्जितस्य वर्णस्य स्थाने विरामेऽसंयुक्तव्यञ्जने च परेऽनु द्वे रूपे वा स्याताम्। इति धकारस्य द्वित्वम्।

## स्थानीवाऽवर्णविधौ ॥ ७।४।१०९ ॥

आदेशः स्थानिवत्स्यादवर्णविधौ न चेत्कार्यं वर्णाश्रयं स्यात्। एवं चेह यकारे स्थानिवद्भावेन स्वरत्वात् धकारस्य द्वित्वं न स्यात्, द्वित्वे स्वरवर्जनादिति न चिन्त्यम्। वर्णाश्रयत्वेन स्थानिवद्भावनिषेधात्।

## स्वरस्य परे प्राग्विधौ ॥ ७।४।११० ॥

परनिमित्तः स्वरादेशः स्थानिवत्स्यात् व्यवहितेऽव्यवहिते च पूर्वस्य विधौ कर्तव्ये। वर्णार्थमिदम्। अनेन यकारस्य स्थानिवद्भावे प्राप्तेऽपि—

## न सन्धिङीयक्विद्विदीर्घाऽसद्विधावस्क्लुकि ॥ ७।४।१११ ॥

सन्धिविधौ, ङीविधौ, यविधौ, क्विविधौ, द्विशब्दे भावप्रधाननिर्देशाद्द्वित्वविधौ, दीर्घविधौ, संयोगस्यादौ स्कोर्लुक् (२।१।८८) इति सकारककारलुग्वर्जितेऽसद्विधौ, स्वरस्यादेशः परनिमित्तो न स्थानिवत् स्यात्। इति निषेधः।

# तृतीयस्तृतीयचतुर्थे ॥ १।३।४९ ॥

घुटः स्थाने तृतीये चतुर्थे च परे आसन्नस्तृतीयः स्यात्। इति धस्य दः।

# पदस्य ॥ २।१।८९ ॥

पदान्ते वर्तमानस्य संयोगस्य लुगन्तादेशः स्यात्। स च परस्यादिविधौ च पूर्वस्मिन्नसन् द्रष्टव्यः। इति यलोपे प्राप्ते असिद्धं बहिरङ्गमन्तरङ्गे इति यकारस्य परनिमित्तस्य बहिरङ्गस्याऽसिद्धत्वान्न यकारलोपः।

# ततोऽस्याः ॥ १।३।३४ ॥

ततः अच्वर्गात्परस्याः अस्याः—अन्तस्थायाः स्थाने द्वे वा स्याताम्। तेन धकारे यकारे च द्वित्वविकल्पाच्चातूरूप्यम्। दध्यत्र, दद्ध्यत्र, दध्य्यत्र, दद्ध्य्यत्र। अत्रैवर्णादेरिति पञ्चमीव्याख्याने दधियत्र। एषु तकारद्वित्वे बहु रूपाणि। एवं मुनि अर्थः मुन्यर्थः, मधु इदं मध्विदम्, पितृ अंश पित्रंशम्, लृ आकृतिः लाकृतिः।

# पुत्रस्यादिन्पुत्रादिन्याक्रोशे ॥ १।३।३८ ॥

आदिन्शब्दे पुत्रादिन्शब्दे च परे पुत्रशब्दस्य तकारस्याक्रोशविषये द्वे रूपे न स्तः। पुत्रादिनी त्वमसि पापे। पुत्रपुत्रादिनी भव। आक्रोशे किम्? तत्त्वकथने द्वित्वं वा स्यादेव। पुत्रादिनी सर्पिणी पुत्त्रादिनी सर्पिणी। पुत्रहती पुत्त्रहती। पुत्रजग्धी पुत्त्रजग्धी। संयुक्तव्यञ्जनेऽपीच्छन्त्येके। इन्द्रः इन्न्द्रः। चन्द्रः चन्न्द्रः। सर्वत्र न द्वित्वमित्यन्ये। अर्कः। ब्रह्मा। अदीर्घादिति किम्? दात्रम्। पात्रम्। अन्वित्यधिकारात् त्वक् त्वक्क्, त्वग्, त्वग्ग्, इत्यादौ कत्वे गत्वे वा कृते पश्चाद्द्वित्वम्। हरि अर्थः इति स्थिते यकारे कृते।

# र्होदर्हस्वरस्यानु न वा ॥ १।३।३१ ॥

स्वरात्पराभ्यां रेफहकाराभ्यां परस्य रहस्वरवर्जितस्य वर्णस्य स्थाने अनु द्वे रूपे वा स्याताम्। हर्य्यर्थः। नहि अस्ति नह्यस्ति। व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा ॥ १।३।४७ ॥ व्यञ्जनात्परस्य पञ्चमस्यान्तस्थायाश्च सरूपे वर्णे परे लुग्वा स्यात्। हर्यर्थः। अदितेरयमादित्य्यः स्थालीपाकः आदित्य इति वा। लोपपक्षे द्वित्वाभावपक्षे चैकयकारं रूपं समानमेव। उदाहरणफलं तु आदित्यो देवताऽस्येति विग्रहे अणि त्र्यणपवादे च दित्यदित्यादित्यपत्युत्तरपदाञ्ञ्यः (६।१।१५) इति ञ्ये आदित्य्यम् आदित्यं वा हविः। सरूप इति किम्? माहात्म्यम्।

## एदैतोऽयाय् ॥ १।२।२३ ॥

एकारैकारयोः स्थाने स्वरे परेऽय् आय् इत्येतावादेशौ स्याताम्। यथासंख्यमनुदेशः समानानाम्। ने अन नयनम्। नै अक नायकः। निर्विशेषणं स्वरपदम् तेन हरये इत्यादौ खेऽपि स्यात्।

## ओदौतोऽवाव् ॥ १।२।२४ ॥

ओदौतोः स्वरे परेऽवावौ स्याताम्। लो अन लवनम्। लौ अकः लावकः।

## य्यक्ये ॥ १।२।२५ ॥

ओदौतोः स्थाने क्यवर्जयकारादौ प्रत्यये परेऽव् आव् च स्यात्। गो यति गव्यति। गो यम् गव्यम्। नौ यति नाव्यति। नौ यम् नाव्यम्। प्रत्ययकथनात् इह न भवति गोयूतिः। क्रोशद्वयसंज्ञायां तु गव्यूतिरिति पृषोदरादित्वात्।

## क्षय्यजय्यौ शक्तौ ॥ ४।३।९० ॥

निपात्यौ क्षि जि इत्येतयोः। क्षेतुं शक्यं क्षय्यम्। जेतुं शक्यं जय्यम्। अन्यत्र क्षेयं पापं, जेयं मनः।

## क्रय्यः क्रयार्थे ॥ ४।३।९१ ॥

क्रय्यं, क्रयाय पण्ये प्रसारितं वस्तु। क्रेयमन्यत्र।

## ऋतो रस्तद्धिते ॥ १।२।२६ ॥

ऋत ऋकारस्य यकारादौ तद्धिते परे रादेशः स्यात्। पितरि साधु पित्र्यम्।

## स्वरे वा ॥ १।३।२४ ॥

अवर्णभोभगोअघोभ्यः परयोः पदान्तस्थयोर्यकारवकारयोः स्वरे परे लुग्वा स्यात्, स चासन्धिः। पटो इह पटविह पट इह। ते आहुः तयाहुः त आहुः। तस्मै इदं तस्मायिदं तस्मा इदम्। वृक्षौ इह वृक्षाविह वृक्षा इह।

## इतावतो लुक् ॥ ७।२।१४६ ॥

अव्यक्तानुकरणे अनेकस्वरस्य योऽत् तस्य इतौ परे लुक् स्यात्। पटत् अग्रे इति पटिति।

## न द्वित्वे ॥ ७।२।१४७ ॥

वीप्सायामनुकरणशब्दस्य द्वित्वेऽदितस्य न लुक्स्यात्।

## धुटस्तृतीयः ॥ २।१।७६ ॥

पदान्ते धुटां तृतीयः स्यात्। पटत्पटविति।

## तो वा ॥ ७।२।१४८ ॥

द्विस्त्वेऽप्यत्र अनित्यत्वयपेऽकार स्थस्य केवलस्य तकारस्य वा लुक् स्यात्। पातत्पटेति, पटत्पटविति वा।

## एदोतः पदान्तेऽस्य लुक् ॥ १।२।२७ ॥

पदान्ते स्थितावेकारावोकाराच्च परस्याकारस्य लुक् स्यात्। ते अत्र तेऽत्र। पटो अत्र पटोऽत्र।

## गोर्नाम्न्यवोऽक्षे ॥ १।२।२८ ॥

गोरोकारस्य पदान्ते वर्तमानस्य अक्षे परे नाम्नि गम्ये अव इत्ययमकारान्त आदेशः स्यात्। गो अक्ष गवाक्षः, वातायनः। अन्यत्र गो अक्षाणि गोऽक्षाणि।

## इन्द्रे ॥ १।२।३० ॥

गोरोतोऽवादेश इन्द्रे परे। गो इन्द्रः गवेन्द्रः।

## स्वरे वाऽनक्षे ॥ १।२।२९ ॥

गोरोकारस्य पदान्ते अव इत्ययमादेशो वा स्यात् अनक्षे स्वरे। गो ईश गवेश। गवीश। गो अग्रम् गवाग्रम्।

## वात्यसन्धिः ॥ १।२।३१ ॥

गोरोकारस्य पदान्ते वर्तमानस्याऽकारे परेऽसन्धिर्वा स्यात्। गो अग्रम्। गोऽग्रम् ॥

इति श्रीचन्द्रप्रभायां प्रक्रियायां स्वरसन्धिः।

अथाऽसन्धिप्रकरणम्।

सर्वदा विजयामन्ती महामेकपलक्षणः।
श्रीहेमद्युतिमालीयात्जितो जितपाण्डव ॥ १ ॥

## प्लुतोऽनितौ ॥ १।२।३२ ॥

इतिशब्दवर्जिते स्वरे प्लुतोऽसन्धिः स्यात्। सन्धिकार्यभाग् न स्यादित्यर्थः। एहि देवदत्त ३ अत्र तव कार्यम्। जिनदत्त ३ इदमानय। अनिताविति किम्? सुश्लोक ३ इति सुश्लोकेति।

## ह्रस्वोऽपदे वा ॥ १।२।२२ ॥

इवर्णादीनामस्वे स्वरे परे ह्रस्वो वा स्यात्, अपदे न चेत्तौ निमित्तनिमित्तिनावेकत्र पदे भवत । नदी एषा नदि एषा । दधि अत्र दधि अत्र । इह ह्रस्वस्यापि ह्रस्व कार्य्यान्तरनिवृत्त्यर्थम् । चक्री अत्र चक्रि अत्र । पक्षे नद्येषा, दध्यत्र, चक्र्यत्र । अपद इति किम् ? नद्यः । नद्यर्थं, वाप्यश्व, इत्यादावन्तर्वर्त्तिविभक्त्यपेक्षया पदभेदेऽपि समासे सत्यैकपद्यम् ।

## अस्त्रीशूद्रे प्रत्यभिवादे भोगोत्रनाम्नो वा ॥७।४।१०१॥

यदभिवाद्यमानो गुरुः कुशलानुयोगेनाऽऽशिषा वा युक्त वाक्यं प्रयुङ्क्ते स प्रत्यभिवादस्तस्मिन्नस्त्रीशूद्रविषये वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरो भोस्शब्दस्य गोत्रस्य नाम्नो वाऽऽमन्त्र्यस्य सम्बन्धी प्लुतो वा स्यात् । अभिवादये देवदत्तोऽहं भो इत्युक्ते गुरुः प्रत्याह, आयुष्मानेधि भोः ३, आयुष्मानेधि भो वा । आयुष्मानेधि देवदत्त ३, आयुष्मानेधि देवदत्तेति वा । गोत्रेऽपि—अभिवादये गार्ग्यगोत्रोऽहमित्युक्ते, गुरुः भो कुशल्यसि गार्ग्य ३, गार्ग्येति वा माह । राजन्यविशोरपि गोत्रत्वमस्त्येव । अभिवादयेऽहमिन्द्रवर्मा इत्युक्ते भो आयुष्मानेधी इन्द्रवर्म ३न् । पक्षे आयुष्मानेधीन्द्रवर्मन् । आयुष्मानेधी न्द्रपालित ३, आयुष्मानेधीन्द्रपालितेति वा । स्त्रीशूद्रवर्जनं किम् ? अभिवादये गार्ग्यहमित्युक्ते भो आयुष्मती भव गार्गि । अभिवादये तुषजकोऽहमित्युक्ते भो आयुष्मानसि तुषजक । मात्र प्लुतः । शूद्रप्रत्यभिवादात् । नाम्नि गोत्रे वाऽनुप्रयुज्यमाने एव प्लुतो नान्यत्रेति केचित् । तन्मते आयुष्मानेधीयत्र न प्लुत । नाम्नो गोत्रस्य वाऽप्रयोगात् ।

## हेहैष्वेषामेव ॥ ७।४।१०० ॥

दूरादामन्त्र्यस्य सम्बन्धिनोर्हेहयोर्वाक्ये यत्रतत्रस्थयोरन्त्यस्वर प्लुतो वा स्यात् । हे ३ देव । देव है ३ ।

## दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत् ॥७।४।९९॥

यत्र सहजमयत्नात् विशेषेण प्रयत्ना स्यात्तद्दूरम् । वाक्यस्य स्वरेष्वन्त्य स्वरो दूरादामन्त्र्यपदस्य सम्बन्धी गुरुर्वाऽन अन्त्योऽपि ऋकारवर्जित स्वरस्तथा लृकार एको दूरादामन्त्र्यस्य सम्बन्धी स प्लुतो वा स्यात् । आगच्छ भो द ३ वदत्त, देवद ३ त्त, देवदत्त ३ इत्य कुरु वा सक्तून् पिब । दूरादिति किम् ? शृणु देवदत्त । अत्र न दूरस्यामन्त्रणम् । आमन्त्र्यस्येति किम् ? आगच्छतु देवदत्त । आमन्त्र्य विशेषणे न प्लुत । आगच्छ भो कपिलक माणवक । अत्र विशेषणे माणवक

शब्दे न प्लुतः। गुरुरिति किम् ? अनन्त्यस्य लघोर्मा भूत्। एक इति किम् ? एकशब्दे यौगपद्येन प्लुतद्वय न स्यात्। अनन्त्योऽपीति किम् ? अन्त्यस्यैव मा भूत्। लृकारग्रहणमनृदिति प्रतिषेधनिवृत्त्यर्थम्। अथ ऋकारस्य प्रतिषेधे लृकारस्य कः प्रसङ्गः ? उच्यते, इदमेव ज्ञापकमृवर्णग्रहणे लृवर्णस्यापि ग्रहः स्यात्। तेनाप्तीद्धृपविस्यान्तौ ऋवर्णकार्य्यं लृवर्णस्यापि सिद्धम्। अनृदिति किम् ? कृष्णमित्रे ३ त्र यद्वा कृष्णमित्र ३। अत्र कृ इत्यस्य न प्लुतः।

# इ ३ वा ॥ १।२।३३ ॥

इ ३ इति प्लुतः स्वरे परे वाऽसन्धिः स्यात्। इतौ प्लुतो न प्राप्तः अन्यत्र प्राप्तः इत्युभयत्र विकल्पः। लुनीहि ३ इति लुनीहीति। चिनुहि ३ इदम्। चिनुहीदम्।

# ईदूदेद्द्विवचनम् ॥ १।२।३४ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं स्वरे परेऽसन्धिः स्यात्। मुनी इह। भानू एतौ। माले इमे। पचेते इति। एषां प्लुतानामिती परेऽप्यसन्धिः। अग्नी ३ इति वायू ३ इति। तव अग्ने ई कामौ इत्यत्र पूर्वेण सन्धिः स्यादेव। परकार्य्ये एवासन्धिः। तवे आसाते।

# अदो मुमी ॥ १।२।३५ ॥

अदस्सम्बन्धिनमौ मुमी इत्येतावसन्धी स्यातां स्वरे परे। अमुमुईषः। अमी अश्वाः। अदसिति किम् ? अम्यत्र रोगिवाचकोऽयम्।

# चादिः स्वरोऽनाङ् ॥ १।२।३६ ॥

आङ्वर्जश्चादिरव्ययः स्वरः स्वरे परेऽसन्धिः स्यात्। अ अपेहि। आ एवं मन्यसे। आ एव नु तत्। इ इन्द्रं पश्य। अनाङिति किम् ? आ ईषदुष्णम् ओष्णम्। आ इहि। एहि आ उदकान्तादोदकान्तात्। आ आर्य्येभ्य आऽऽर्य्येभ्यो यशो गतं गौतमस्य। 'ईषदर्थे क्रियायोगे, मर्य्यादाभिविधौ च यः'। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।

# ओदन्तः ॥ १।२।३७ ॥

ओकारान्तश्चादिः स्वरेऽसन्धिः स्यात्। अहो अत्र। मिथो अत्र मिथोऽत्र। नाप चादिः।

# सौनवेतौ ॥ १।२।३८ ॥

सिनिमित्तक ओदन्त इतौ परऽसन्धिर्वा स्यात्। पटो इति। पटविति। पट इति।

## ऊँचोञ् ॥ १।२।३९ ॥

उञ्प्रत्ययादिरितौ परे वाऽसन्धिः स्यात्। असन्धिपक्षे च ऊँ इत्ययं-रूपो दीर्घोऽनुनासिको वा स्यात्। उ इति ऊँ इति विति। पक्षे विरूप्य सिद्धम्।

## अवर्गात् स्वरे वोऽसन् ॥ १।२।४० ॥

अकारवर्जितवर्गेभ्यः परस्य उञः स्वरे परे वो वा स्यात्, स चासन्—अन्वृतम्। किम्वुक्तं किमुक्तम्। वस्याऽसत्त्वान्नानुस्वारः।

## अ इ उ वर्णस्यान्तेऽनुनासिकोऽनीदादेः ॥ १।२।४१ ॥

अवर्णस्येवर्णस्योवर्णस्य चान्ते विरामे वर्तमानस्यानुनासिक आदेशो वा स्यात्, अनीदादेः—अचेदयमीदूदेद्द्विवचनम् (१।२।३४) मित्यादिसूत्रप्रसङ्गो न स्यात्। सामँ साम। दधिँ दधि। मधुँ मधु। दधिँ अत्र दधि अत्र। वृक्षेणँ अत्र, वृक्षेण अत्र। विरामस्त्वात्र सन्धिः। अनीदादेरिति किम्? अमी। वायू। अमू। अमी। किन्नु। विष्णोः सम्बोधने ओँ इति। पाटलिपुत्रावाँ इति। न सन्धिः ॥ १।३।५२ ॥ उक्तो वक्ष्यमाणश्च सन्धिर्विरामे न भवति। दधि अत्र। ते आहुः। तत् सुमाति। संहितायां तु सन्धिरेव ॥

इति प्रकृतिभावः।

### अथ व्यञ्जनसन्धिः।

सेनाङ्गमिव पुण्णम् सुष्णमुष्णांशुवत्तमः।
यन्मयं सिद्धये मेऽस्तु श्रीहेमर्षिभास्करः ॥ १ ॥

## तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ ॥ १।३।६० ॥

तवर्गस्य स्थाने शकारेण चवर्गेण च योगे चवर्गः तथा षकारेण टवर्गेण च योगे यथासंख्यं टवर्गः स्यात्। तद् शेते, दस्य जत्वे, तस्य वक्ष्यमाणे प्रथमत्वे तच् शेते। भवाञ् शेते। तद् चरति तच्चरति। तद् जयति तज्जयति। पूर्वे चवर्गयोगे याच् ना याच्ञा। यज् नः यज्ञः। पूर्वे शकारे प्रतिषेधो वक्ष्यते। पूर्वेण षकारेण पेष् ता पेष्टा। पूष् नः पूष्णः। तद् टीकते, दस्य डत्वे, तस्यापि टत्वे, तट्टीकते। पूर्वेण टवर्गेण ईड् त ईट्टे। अथ तज्जयतीत्यादौ तवर्गस्य चवर्गे कृते चजः कगम् ( २।१।८६ ) इति न स्यात्। असिद्धं बहिरङ्गमन्तरङ्गे इति।

## सस्य शषौ ॥ १।३।६१ ॥

सकारस्य स्थाने शकारचवर्गयोगे शकारः स्यात्, तथा षकारटवर्गयोगे षकारः स्यात्। वृस् चति वृश्चति। मस् जति मज्जति। षकारेण [illegible] अमे

सु इति स्थिते सो रुः ( २।१।७२ ) इति सस्य रु । तस्य रेफस्य शषसे शषसं वा (१।३।६) इति सत्वे नाम्यन्तस्थे (२।३।१५) अनेन सुपः षत्वे ततोऽनेन पूर्वसस्य षत्वम् । सर्पिष्षु । टवर्गेण षाषट्टपि । षण्मणिष ।

## न शात् ॥१।३।६२॥

शकारात्परस्य तवर्गस्य चवर्गो न स्यात् । अश्नाति । विश्नः ।

## पदान्ताट्टवर्गादनाम्नगरीनवतेः ॥१।३।६३॥

पदान्ते वर्तमानाट्टवर्गात्परस्य नाम्नगरीनवतिवर्जितस्य तवर्गस्य सकारस्य च यदुक्तं तन्न स्यात् । किमुक्तम् ? तवर्गस्य टवर्गः, सकारस्य षकारः । षड् नयनम्, मधुलिड् तरति । षड् सन्तः । पदान्तात्किम् ? ईट्टे । अनाम्नगरीनवतेरिति किम् ? षण्णाम् । षण्णगरी । षण्णवतिः ।

## षि तवर्गस्य ॥१।३।६४॥

पदान्ते वर्तमानस्य तवर्गस्य षकारे परे टवर्गो न स्यात् । तत् षोडा । भवान् षष्ठः ।

## धुटस्तृतीयः ॥२।१।७६॥

धुटां पदान्ते वर्तमानानां तृतीयः स्यात् । वाक् ईशः वागीशः । चित् रूपः चिद्रूपः ।

## तृतीयस्य पञ्चमे ॥१।३।१॥

वर्गतृतीयस्य पदान्ते वर्तमानस्य पञ्चमे परे स्वान्यासन्नोऽनुनासिको वा स्यात् । ङ ञ ण न मा अनुनासिकाः । वेति पदान्ते इति अनुनासिक इति चानुवर्तते । एवमन्यत्रापि सापेक्षं पदं सूत्रान्तरादनुवर्तनीयम् । वाग् मनः वाङ्मनः । तद् नेत्रं तन्नेत्रम् ।

## प्रत्यये च ॥१।३।२॥

पदान्ते वर्तमानस्य तृतीयस्य पञ्चमादौ प्रत्यये नित्यमनुनासिकः स्यात् । वाग् मयम् वाङ्मयम् । षण्णाम् । ककुद्मन्त इत्यत्र यवादिगणे दस्य निपातः ।

## लि लौ ॥१।३।६५॥

पदान्ते तवर्गस्य लकारे परे आसन्नतया लकारौ स्याताम् । निरनुनासिकस्य स्थाने निरनुनासिकः । सानुनासिकस्य स्थाने सानुनासिकः । तद् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति ।

## उदः स्थास्तम्भः सः ॥१।३।४४॥

उद्' परयोः स्थास्तम्भ इत्येतयो' सकारस्य लुक् स्यात् । उत्थानम् । उत्तम्भनम् । उत् ऊर्ध्वं स्थानमस्य तदुत्स्थानं एव । नात्र सलुक् । उदो धातुविशेषणात् । उत्स्कन्दतीति उत्कन्दो रोगविशेषः । तत्र पृषोदरादित्वात् सिद्धः सलुक् ॥

## ततो हश्चतुर्थः ॥१।३।३॥

ततस्तृतीयात्पदान्ते वर्तमानात्परस्य हकारस्य पूर्वसवर्णश्चतुर्थो वा स्यात् । वाग् हीनः । वाग्घीनः । अज् हली अज्झली । तद् हितम् तद्धितम् ।

## प्रथमादधुटि शश्छः ॥१।३।४॥

पदान्ते वर्तमानात्प्रथमात्परस्य शकारस्याधुटि परे छो वा स्यात् । वाक् शूर' वाक्छूर' । तद् श्लोकेन, दस्य चवर्गस्येन जकारे कृते—

## अघोषे प्रथमोऽशिटः ॥१।३।५०॥

शिड्वर्जितस्य धुट' स्थानेऽघोषे परे प्रथम' स्यात् । तच्छ्लोकेन । प्रथमादिति किम् ? प्राङ् शूरः । अधुटीति किम् ? वाक् श्च्योतति ।

## तौ मुमो व्यञ्जने स्वौ ॥१।३।१४॥

मोऽनुस्वार' पदान्ते व्यञ्जने परे । त्वम् पचसि त्वं पचसि । त्वम् तरसि त्वं तरसि । पक्षे मकारस्यानुनासिकोऽपि परस्य स' । त्वम्पचसि त्वन्तरसि । मकारस्य लाक्षणिकत्वात् मोऽप्रधान इत्यादिना न सकार' । पदान्ते किम् ? गम्यते । मु इत्यागमस्यापदान्तेऽनुस्वारः स्यादनुनासिको वा । चम् क्रम्यते चंक्रम्यते पक्षे चङ्क्रम्यते । एवं मकारस्यानुस्वारे संयन्ता । अनुनासिके सय्यँन्ता । त्वं लोक' त्वँल्लोकः । कं च कँश्चा ।

## शिड्हेऽनुस्वारः ॥१।३।४०॥

अपदान्ते म्नां मकारनकाराणां स्थाने शिटि हे च परेऽनुस्वारोऽनु स्यात् । यशान् सि यशांसि । म्नामिति बहुवचनात् बृंहणमित्यत्र णस्य बृंहा इत्यादौ ञस्य च बाधित्वाऽनेनानुस्वार एव स्यात् । शिड्हे इति किम् ? मन्यते । मनु इत्येव । पिण्ढि शिण्ढि इत्यादौ पिषशिषोर्हौ तस्य धित्वे षस्य डत्वे च शिड्भावात् अप्रत्ययस्य नकारस्यानुस्वारो न स्यात् ।

## म्नां धुड्वर्गेऽन्त्योऽपदान्ते ॥१।३।३९॥

अपिनि यमन । अपदान्ते म्नां मकारनकाराणां धुड्वर्गे परे तस्यैव

स्वोऽन्त्योऽनु स्यात्। गम् अभे ता गन्ता। शाम् तः शान्तः। शन् किता शङ्किता। अन् चिता अञ्चिता। म्नामिति पञ्चमत्वमास्कुर्वन्ति कृपन्तीत्यादौ नकारस्य णत्वं बाधित्वाऽनेन पुनर्नकाररूपो वर्गान्त्य एव। क्रान्त्वा म्नां स्वेष्टत्व नकारे कृते णत्व-बाधाय पुनर्नकारः। पर्जन्यवल्लक्षणप्रवृत्तेः। केचित्त्वपदान्ते म्नामनुस्वारमिच्छन्ति लाघवात्।

## सम्राट् ॥१।३।१६॥

निपातोऽयम्।

## मनयवलपरे हे ॥१।३।१५॥

पदान्ते मकारस्थानेऽनुस्वारानुनासिकौ वा स्याताम्, मनयवलाः परे यस्मा दीदृशो हकारे परे। किम् ह्मलयति किंह्मलयति किम् ह्मलयति। किम् ह्नुते किं ह्नुते किन्ह्नुते। किम् ह्यः किं ह्यः कियँ ह्यः। किम् ह्वलयति किं ह्वलयति किवँ ह्वलयति। किम् ह्लादयति किं ह्लादयति किलँ ह्लादयति।

## ङ्णोः कटावन्तौ शिटि न वा ॥१।३।१७॥

पदान्ते ङकारणकारयोः शिटि परे यथासंख्यं कट इत्येतावन्तौ वा स्याताम्। प्राङ् शेते प्राङ्क्शेते प्राङ्क्छेते। पक्षे यथास्थितम्। सुगण् शेते। सुगण्ट् शेते सुगण्ट् छेते। पक्षे यथास्थितम्।

## शिट्याद्यस्य द्वितीयो वा ॥१।३।५९॥

स्पष्टम्। प्राङ् अभे षष्ठः कान्ते प्राङ्क् षष्ठः प्राङ्ख् षष्ठः। सुगण्ट् षष्ठः सुगण्ठ्षष्ठः। सम्राट्सु सम्राट्त्सु।

## ड्नः सः त्सोऽश्चः ॥१।३।१८॥

पदान्ते डकारान्नकाराच्च परस्य सकारस्य तकारादिः सकारादेशो वा स्यात्। अश्चः-श्चावयवश्चेत्सकारो न स्यात्। षड् सीदन्ति षड्त्सीदन्ति। डकारनिर्देशाद्-टत्वं न स्यात्। केचिट्टत्वमप्याहुः। षट्त्सीदन्ति। भवान्साधुः भवान्त्साधुः। अश्च इति किम्? षड्श्च्योतन्ति। श्चुतेः सकारोपदेशाच्छकारस्य सकारोपदिष्ट कार्यं विज्ञायते। तेन मधु श्च्योततीति क्विप्। मधुश्चुतमाचष्टे इति णावन्त्यस्व रादिलोपे, पुनः क्विपि णिलोपे प्रथमायां सौ तल्लुकि च पलोपे संयोगस्यादौ स्कोर्लुगिति सलोपे चस्य कत्वे मधुगिति सिद्धम्।

## नः शि ञ् ॥१।३।१९॥

पदान्ते नकारस्य शे परे ञ् इत्ययमादेशो वा स्याच्छ्ञ्च। भवान् अभ्रे शूरः, भवाञ् शूरः। प्रथमात्पुटी (१।३।४) ति छत्वे भवाञ्छूरः। झुटो झुटीति चलोपे भवाञ् छूरः। पक्षे भवान् शूर इति। ञशा ञषण ञच्छो ञशो रूपचतुष्टयम्। आदेशाच्छत्वलोपानां विकल्पकरणादिह ॥१॥ आदेशापवादाय नकारस्य करणम्।

## ह्रस्वात् ङणनो द्वे ॥१।३।२७॥

ह्रस्वात्परेषां ङणनानां पदान्ते स्वरे परे द्वे रूपे स्याताम्। कुङ् आस्ते कुङ्ङास्ते। सुगण् इह सुगण्णिह। पचन् आस्ते पचन्नास्ते। कुर्वन् आस्ते कुर्वन्नास्ते। परिहृतस्य द्वित्वस्यासिद्धत्वाण्णत्वं न। ङणानय इत्यादौ स्वरूपनिर्देशादमत इत्यादौ तु अनभिधानपक्षाय द्वित्वम्।

## स्सटि समः ॥१।३।१२॥

समित्येतस्य स्सटि परे सकारोऽन्तादेशः स्यात्। अनुस्वारानुनासिकौ च पूर्वस्य। सँस्स्कर्ता। संस्स्कर्ता।

## लुक् ॥१।३।१३॥

समित्येतस्य स्सटि परे लुक् स्यात्। पूर्वयोगात्सानुस्वारानुनासिकौ। स स्कर्ता। मतान्तरे तु तावपि स्याताम्। ततो द्विसकारं रूपद्वयम्। एकसकारमपि रूपद्वयम्। तथा दीर्घाद्विरामेके (१।३।३७) इत्यादिना सकारद्वित्वे त्रिसकारकं रूपद्वयम्। सयुक्तव्यञ्जनेऽपीच्छन्तीति मतान्तरप्रमाणात्। औत् अन्तो यस्मिन् स औदन्त, औकारसामीप्यमात्रात् इति अनुस्वारस्याऽनुस्वारस्यापि स्वरत्वात्। तत एक द्वित्रिसकारवतां रूपाणां सानुनासिकानां रूपाणां त्रिकः प्रथमद्वितीयस्वे (१।३।३५)ति कद्वित्वे षट् रूपाणि। एवं सानुस्वाराणामपि षट्। कृत्यादिः कादि रितिभ्यामभ्यामेऽनुस्वारस्य व्यञ्जनत्वाऽत्रीयादि(१।३।१९)ति द्वित्वे द्वादश रूपाणि। एवमष्टादशानां रूपाणां तकारद्वित्वे वचनान्तरेण पुनर्द्वित्वे एकत्र द्वित्र त्रित मिति रूपाणि चतुष्प्रभावात्। अ इ उ वर्णस्यान्ते (१।४।४१) इत्यादिनाऽनुनासिकऽष्टणतरूपाणि।

## पुमोऽशिख्यघोषेऽख्यागि रः ॥१।३।९॥

पुमित्येतस्य रोऽन्तादेशः स्यात् शिटख्यावर्जितेऽधुट्परेऽघोषे परे, अनुस्वारानुनासिकौ च पूर्वस्य।

## पुंसः ॥२।३।३॥

पुंस्शब्दसम्बन्धिनो रेफस्य कखपफेषु सः स्यात्। पुम् कोकिलः पुंस्कोकिलः पुँस्कोकिलः। पुम् पुत्रः पुंस्पुत्रः पुँस्पुत्रः। अशिटीति किम्? पुंक्षीरः। अघोष इति किम्? पुंदासः। अघुट्परे इति किम्? पुम्भीरम्। अख्यागीति किम्? पुंख्यानम्।

## नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याघुट् परे ॥१।३।८॥

पदान्ते नकारस्य प्रशान्वर्जितस्याऽघुट्परेषु चटतेषु छठथेषु वा परेषु यथासंख्यं श ष स इत्येते आदेशाः स्युः। अनुस्वारानुनासिकौ च पूर्वस्य—अनुस्वार आगमोऽनुनासिकश्चादेशः पूर्वस्य क्रमेण स्याताम्। भवान् चरति भवांश्चरति भवाँश्चरति। भवान् टीकते भवांष्टीकते भवाँष्टीकते। भवान् तरति भवांस्तरति भवाँस्तरति। अप्रशानिति किम्? प्रशान् चरति। अघुट्परे इति किम्? भवा त्सरुकः त्वष्ट्रमुष्टिः।

## नॄनः पेषु वा ॥१।३।१०॥

नॄनः पकारे रोऽन्तादेशो वा स्यात्। अनुस्वारानुनासिकौ च पूर्वस्य।

## रः कखपफयोः ≍क≍पौ ॥१।३।५॥

पदान्ते रेफस्य कखे पफे च परे यथासंख्यं ≍क ≍प आदेशौ वा स्याताम्। नॄ≍पाहि। नॄँ≍पाहि। नॄः पाहि नॄँः पाहि नॄम्पाहि। पेष्वित्यत्र बहुवचनं न्यासार्थं तेनाघुट्पर इति निवृत्तम्। तेन नॄ प्सातीत्यत्रापि भवति।

## द्विः कानः कानि सः ॥१।३।११॥

कान् शब्दस्य द्विरुक्तस्य कानि परे सः स्यात्, तत्पक्षेऽनुस्वारानुनासिकौ च पूर्वस्य। काँस्कान् कांस्कान्। द्विरिति किम्? कान् कान् पश्यति। अत्रेदं किं प्रश्नेऽपत्तु क्षेपे। रुत्वाधिकारेणैव सिद्धे सकारकरणं षत्वबाधनार्थम्।

## भ्रातुष्पुत्रकस्कादयः ॥२।३।१४॥

एते शब्दा रेफस्थाने यथायथं कृतषत्वसत्वाः साधवः स्युः। भ्रातुष्पुत्रः। सर्पिष्कुण्डिका। धनुष्पात्रम्। कस्कः। कौतस्कुतः। भास्करः इत्यादयः। आकृतिगणोऽयम्।

## स्वरेभ्यः ॥१।३।३०॥

स्वरात्परस्य छस्य पदान्तेऽपदान्ते च द्वे रूपे स्तः। इच्छति। ह्रीच्छति। तव च्छत्रम्।

## अनाङ्माङो दीर्घाद्वा छः ॥१।३।२८॥

आङ्माङ्वर्जितपदसम्बन्धिनो दीर्घात्परस्य पदान्ते छस्य द्वे रूपे वा स्याताम्। कन्याच्छत्रम् कन्याछत्रम्। अनाङ्माङिति किम्? आच्छाया। माच्छिदत्।

## प्लुताद्वा ॥१।३।२९॥

पदान्ते वर्तमानाद्दीर्घस्थानात्प्लुतात्परस्य छकारस्य द्वे रूपे वा स्याताम्। आगच्छ भो इन्द्रभूते३ च्छत्रमानय। आगच्छ भो इन्द्रभूते३ छत्रमानय। दीर्घविशेषे। आगच्छ भो देवदत्त३ छत्रमानय।

## चटते सद्वितीये ॥१।३।७॥

पदान्तरेफस्य चटतेषु सद्वितीयेषु परेषु यथासंख्यं श ष स इत्येते आदेशाः स्युः। कर् अग्रे चरति कश्चरति। कर् छादयति कश्छादयति। कर् टीकते कष्टीकते। कर् ठः कष्ठः। कर् तरति कस्तरति। कर् थुडति कस्थुडति।

## शिट्यघोषात् ॥१।३।५५॥

अघोषात्परे शिटि पदान्ते रेफस्य विसर्ग एव नियमात्स्यात्। तेन सत्व ×क×पा न स्युः। कर् त्सरुः कः त्सरुः। वासः क्षौमम्। सर्पिः प्सातम्।

## व्यत्यये लुग्वा ॥१।३।५६॥

शिटः परोऽघोष इति व्यत्ययः। तस्मिन् सति पदान्ते वर्तमानस्य रेफस्य लुग्वा स्यात्। कर् ष्ठीवति कष्ठीवति कः ष्ठीवति।

## शषसे शषसं वा ॥१।३।६॥

पदान्ते रेफस्य शषसेषु परेषु शषसा वा स्युः। कर् शेते कश्शेते। कर् षण्डः कष्षण्डः। कर् साधुः कस्साधुः। पक्षे–

## र: पदान्ते विसर्गस्तयोः ॥१।३।५३॥

पदान्ते रेफस्य विसर्गः स्यात्। तयोः–विरामाघोषयोः परयोः। कः शेते। कः षण्डः। कः साधुः।

## रः कखपफयोः ≍क≍पौ ॥१।३।५॥

स्पष्टम् । कर् करोति क×करोति । कर् खनति क×खनति । कर् पचति क≍पचति । कर् फलति क≍फलति । पक्षे विसर्गः । कः करोति । कः खनति । कः पचति । कः फलति ।

## प्रत्यये ॥२।३।६॥

अनव्ययस्य यो रेफस्तस्य प्रत्ययविषयेषु कखपफेषु सः स्यात् । पयस्पाशम् । पयस्कल्पम् । पयस्कम् । अनव्ययस्येति किम् ? प्रातः कल्पम् । प्रात×कल्पम् । पाशावयस्त्वचिता ।

## रोः काम्ये ॥२।३।७॥

अनव्ययस्य रेफस्य रोरेव काम्यप्रत्यये परे सः स्यात् । पयस्काम्यति । रोरिति किम् ? गीः काम्यति । अहः काम्यति ।

## नामिनस्तयोः षः ॥२।३।८॥

'प्रत्यये' 'रोः काम्ये' इत्येतत्प्रागुक्तसूत्रद्वयविषये नामिन उत्तरस्य रेफस्य षः स्यात् । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । तयोरिति किम् ? मुनिः करोति मुनि×करोति । गीः काम्यति गी×काम्यति ।

## नमस्पुरसो गतेः कखपफि रः सः ॥२।३।९॥

नमस्पुरसोर्गतिसंज्ञयो रेफस्य कखपफेषु सः स्यात् । नमस्कृत्य । पुरस्कृत्य । साक्षात्प्रादिस्वाश्विकल्पात्गतिसंज्ञा । अन्यत्र नमः करोति । नमःशब्दमुच्चारयतीत्यर्थः । पुरोऽस्तमव्यय( १।१।७ ) मितिनित्यं गतिसंज्ञा । तेन पुरस्करोति । अगतित्वे पुरः करोति नगराणि विपसे ।

## निर्दुर्बहिराविष्प्रादुश्चतुराम् ॥२।३।१०॥

एषां रेफस्य कखपफेषु परेषु षः स्यात् । निष्कृतम् । दुष्कृतम् । बहिष्कृतम् । आविष्कृतम् । प्रादुष्कृतम् । चतुष्कण्टकम् । नैष्कुल्यमित्यादि । एकदेशविकृतमनन्यवत् ।

## सुचो वा ॥२।३।१०॥

सुजन्तानां रेफस्य षः स्यात् कखपफेषु । द्विष्करोति । द्विः करोति ।

## तिरसो वा ॥२।३।१२॥

गतिसंज्ञायां तिरसो रेफस्य कखपफेषु सो वा स्यात् । तिरस्कृत्य । तिरःकृत्य ।

## वेसुसोऽपेक्षायाम् ॥२।३।११॥

इसुसुप्रत्ययान्तस्य यो रेफस्तस्य कखपफेषु परेषु षो वा स्यात्। स्यामिनि मित्तपदे चेत् परस्परापेक्षे स्याताम्। सर्पिः करोति सर्पिष्करोति। धनुः करोति धनुष्करोति। मुहुरित्यव्युत्पन्नमव्ययम्। तेन मुहुः पठति अत्र न षत्वम्। अपेक्षायामिति किम्? तिष्ठतु सर्पिः पिब त्वमुदकम्। इसा साहचर्यादुस इणादिकस्य ग्रहणं तेन चक्षुष्कुलामि इत्यादौ जिह्वामूलीयो न षत्वम्।

## नैकार्थेऽक्रिये ॥२।३।१२॥

न विद्यते क्रिया प्रवृत्तिनिमित्तं यस्य तस्मिन्नेकार्थे–समानाधिकरणे पदे कखपफे तस्मिन् परे इसुसन्तस्य रेफस्य षो न भवति। पूर्वस्यापवादः। सर्पिः कालकम्। यजुः पीतकम्। एकार्थे इति किम्? सर्पिष्कुम्भे। धनुष्पुरुषस्य। अक्रिय इति किम्? सर्पिष्क्रियतेऽत्र।

## समासेऽसमस्तस्य ॥२।३।१३॥

पूर्वेणासमस्तस्येसुसुप्रत्ययान्तस्य सम्बन्धिनो रेफस्य कखपफे परे षो नित्यं स्यात्। समासे–तौ चनिमित्तनिमित्तिनावेकत्र समासे भवतः। सर्पिष्कुम्भः। सर्पिष्पानम्। धनुष्खण्डम्। असमस्तस्येति किम्? परमसर्पिःकुण्डम्। अत्र पूर्वेण सर्पिःपदं समस्तं, तेन विसर्गः।

## अतः कृकमिकसकुम्भकुशाकर्णिपात्रेऽनव्ययस्य ॥२।३।५॥

अकारात्परस्यानव्ययस्य रेफस्य कृकम्यादिस्थेषु कखपफेषु परेषु सः स्यात् एकत्र समासे निमित्तनिमित्तिनोर्भावे। अयस्कृतम्। यशस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्कुशा। अयस्कर्णी। अयस्पात्रम्। नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् अयस्कुम्भी, अयस्पात्री। अत इति किम्? गीःकारः। अनव्ययस्येति किम्? स्वःकामः। समासे किम्? यशः करोति।

## शिरोऽधसः पदे समासैक्ये ॥२।३।४॥

एतयो रफस्य पदशब्दे परे सः स्यात् समासैक्ये। शिरस्पदम्। अधस्पदम्। समासे किम्? शिरः पदम्। ऐक्य इति किम्? परमशिरःपदम्। परमाधःपदम्।

इति व्यञ्जनसन्धिः ॥

# अथ रेफसन्धिः ।

सदा संवरषाद्धम्या य सिद्धिकमलाऽऽभयत् ।
श्रीसिद्धान्तमुपो लोके सरस्थेप तदन्तुलम् ॥ १ ॥

स्यौजसमौशसित्यादिना सि प्रत्यये देवस् अर्च्य इति स्थिते ।

## सोरुः ॥२।१।७२॥

पदान्ते सकारस्य रुरादेशः स्यात् ।

## सजुषः ॥२।१।७३॥

स्पष्टम् । उकारोऽरो सुपिर इत्यत्र विशेषणार्थः । देवर् अर्च्य ।

## अतोति रोरुः ॥१।३।२०॥

पदान्तेऽकारात्परस्य रोरकारे परे उकारः स्यात् । अवर्णस्येति ओत् । एदोत पदान्तेऽस्य लुक् । देवोऽर्च्य । अत इति किम् ? अग्निरत्र । देवा अत्र । सुभोत ? यत्रन्वसि । अतीति किम् ? क इह । सर्वज्ञ आस्ते । पय अ ? भिदत्र ।

## घोषवति ॥१।३।२१॥

अत परस्य पदान्ते रोः स्थाने घोषवति परे उकारः स्यात् । जिनो जयति । अहोभ्याम् । घोषवतीति किम् ? कः करोति । अत इति किम् । मुनिर्गच्छति । सुभोत ? देहि । रोरित्युप पामेह मातरत्र । भ्रातर्गच्छ । देवास् इह इति स्थिते रुत्वम् ।

## रोर्यः ॥१।३।२६॥

अवर्णभोभगोअघोभ्य परस्य पदान्ते वर्तमानस्य रोः स्थाने स्वरे परे यकार आदेशः स्यात् । ततः स्वरे वा इति यलोपे देवा इह । पक्षे देवायिह । भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते ।

## अस्पष्टावर्णात्त्वनुञि वा ॥१।३।२५॥

अवर्णभोभगोअघोभ्यः परयोः पदान्ते वकारयकारयोः स्थाने अस्पष्टौ ईषत्स्पष्टतरौ प्रयासस्वेवकारयकारौ स्वरे परे स्याताम् । भो यँत्र । भगो यँत्र । अघो यँत्र । जिह्वामोपाममध्यमूलानां शैथिल्यं पदुच्चारणे सोऽस्पष्टः । पक्षे यलोपे भो अत्र । भगो अत्र । अघो अत्र । अवर्णात्तु परयोर्भ्योरुन्वर्जिते स्वरे परेऽस्पष्टौ वा स्याताम् । पटवँिह । पटविह । पट इह । असावँिन्दुः । असाविन्दुः । असा इन्दुः । कयँिह । कयिह । क इह ।

## व्योः ॥१।३।२३॥

अवर्णात्परयोः पदान्ते वर्तमानयोर्वकारयकारयोर्घोषवति परे लुग् भवति। स चाऽसन्धिः । वृक्षव् गच्छति इति स्थिते वृक्ष गच्छति। घोषवतीति किम्? वृक्षव् करोति। अवर्णादित्येव। तरुव् गच्छति। पदान्त इत्येव। भव्यम्। देवा-याहु। देवायाहु। देवा याहुः। भोस् प्रभृतिभ्यो निस्यमस्पष्टाघेव। तेन द्विरूप्य मेव। अञि परेऽपि द्विरूप्यम्। पट व। पटवु। यपलोपास्पष्टयोरभावात्। केचित्तु ह्स्वानस्य यकारस्य लोपमेवोञिपरे मन्यन्ते। तन्मते क उ आगतः। भो उ एहि। भगो व एहि। अघो व याहि। अपरे तु भोभगोअघोभ्य स्वरे परे नित्यं लोप-मेवेच्छन्ति।

## अवर्णभोभगोऽघोर्लुगसन्धिः ॥१।३।२२॥

अवर्णाद्भोभगोऽघोभ्यश्च परस्य रोर्घोषवति परे लुक् स्यात् स चासन्धि । स न्धेर्निमित्तं न स्यात्। देवा यान्ति। अकारात्तु परस्य घोषवतीत्यनेनोत्वमेव। भो गच्छसि। भगो यासि। अघो हससि।

## रोलुप्यरि ॥२।७।७५॥

अहन्शब्दस्य स्यादेर्लुपि सत्यरेफे परे पदान्ते रोऽन्तादेशः स्यात्। कला-पयादः। अहरेति। अहर्पीते। अहर्गण। दीर्घोहाश्चासौ मासश्च दीर्घाहर्मास। लुपीति किम्? हे दीर्घोहोऽत्र। इह सेर्दीर्घङ्यादिस्यादिना लुक्। न पुनरनतो लुपिति लुप्। अरीति किम्? अहोरात्र। अहो रूपम्। अहो रथेन।

## अह्नः ॥२।१।७४॥

अहन्शब्दस्य पदान्ते रत्वप्रत्ययादेश स्यात् स चासन् परे स्यादिविधौ च पूर्वस्मिन्। दीर्घाण्यहानि यस्मिन् दीर्घाहा निदाघ। अत्र रुत्वस्यासत्त्वा न्तलक्षणो नदीर्घ। अवर्णभोभगो इत्यादिना रुलोप। अहोभ्याम्। अहस्सु। पदान्तत्वं त्वत्र।

## नामसिदय्व्यञ्जने ॥१।१।२१॥

सिति प्रत्यये यकारवर्जिते व्यञ्जनादौ च परे पूर्वं नाम पदसंज्ञ स्यात्।

## न क्ये ॥१।१।२२॥

क्यन् क्यङ् क्यष्स्वां क्येन ग्रहणम्। नकारान्तं नाम क्ये प्रत्यये परे पदसंज्ञ स्यात्।

## वाहर्पत्यादय. ॥१।३।५८॥

एते निपाताः । अहर्पतिः । अहर्गणः । अहःपतिः । अहᳲपतिः । आकृतिगणोऽयम् । तेन गीर्पतिः । गीःपतिः । गीᳲपतिः ।

## रोरेलुग्दीर्घश्चादिदुतः ॥१।३।४८॥

रेफस्य रेफे परेऽनुलुक् स्यात् । अत इत उतश्च पूर्वस्य दीर्घः । पुनर् रमते पुना रमते । अग्निर् रथेन अग्नी रथेन । अग्निर्लोम अहोरूपम् । अत्र पूर्वमेव रोत्वे रेफाभावाल्लुग्दीर्घाभावः सिद्धः ।

## ढस्तड्ढे ॥१।३।४२॥

ढकारस्य तन्निमित्ते ढे परेऽनुलुक् स्यात् । अदिदुतां दीर्घः । लिढ् ढम् लीढम् । तड्ढे इति किम्? मधुलिड्ढौकते । अग्निर्लोम । लेढा । मोढा । अत्र गुणे कृते पश्चात् ढलोपः । अन्यथा पूर्वमेव ढलोपे दीर्घे च लीढा मूढा इत्यनिष्टरूपापत्तिः ।

## तदः सेः स्वरे पादार्था ॥१।३।४५॥

तदः परस्य सेः स्वरे परे लुक् स्यात्सा चेत्पादार्था पादपूरणी स्यात् । सैष दाशरथी रामः । पादार्थेति किम्? स एष भरतो राजा ।

## एतदश्च व्यञ्जनेऽनग्नञ्समासे ॥१।३।४६॥

एतदस्तदश्च परस्य सेर्लुक् स्यात् । व्यञ्जने परेऽक्प्रत्यये नञ्समासे च न स्यात् । एषस् दत्ते एष दत्ते । सस् दत्ते स दत्ते । परमैषस् करोति परमैष करोति । परम सस् कुरुते परम स कुरुते । अनग्नञ्समासे इति किम्? एषकः करोति । सको याति । अनेषो याति । असो याति । व्यञ्जन इति किम्? एषोऽत्र सोऽह मजे श्रीप्रभम् ।

इति रेफसन्धिः सम्पूर्णः ।

---

अथ स्वरान्ताः पुल्लिङ्गाः ।

श्रीपद्मनाभार्हतो मेघजन्मनो वचसो रसः ।
मङ्गलायाऽस्तु जातस्य साङ्गरूप्या जयश्रिये ॥ १ ॥

## अधातुविभक्तिवाक्यमर्थवन्नाम ॥१।१।२७॥

अर्थोऽभिधेयः स्वार्थो द्रव्य लिङ्गं सख्या शक्तिरिति चोक्तश्च समुदयादिः । तद्वच्छब्दरूपं धातुविभक्त्यन्तवाक्यवर्जितं नामसंज्ञं स्यात् । देवः । मुनिः । साधुः ।

शुक्ल । धातुविभक्तिवर्जम् किम्? अहन् । वृक्षान् । अयजन् । अत्र नामसंज्ञाऽभावात् नोऽम्नह इति नकारलोपो न । विभक्त्यन्तवर्जनात् आप्ङीप्प्रभृति प्रत्ययान्तानां नामसंज्ञा स्यात् । माला । गौरी । तद्धितप्रत्ययान्त: । औपगवः । आक्षिकः । कृत्प्रत्ययान्त: । कर्ता । कारक: । वाक्य क्रियाकारकपदसमुदाय: । साधुर्धर्मं ब्रूते इति । तद्वर्जनादर्थवत्समुदायस्य समासादेर्नामसंज्ञा स्यादेव । चित्रगु: । राजपुरुष: । ईषत्समासो गुडो यद्गुडा द्राक्षा । अर्थवदिति किम्? वनम् । धनम् । मान्तस्यार्थवत्त्वेऽपि मा भूत् । अनुकरणशब्दस्यार्थवत्त्वे सति सविभक्तिकत्वेऽपि नामत्वम् । पचतिमाह । च' समुच्चये । मेर्विदा' । यदाऽर्थवत्त्वं न विवक्ष्यते तदा नामसंज्ञा न स्यात् । गवित्ययमाह ।

## शिर्घुट् ॥१।१।२८॥

जस्शसोरादेशा: शिर्घुट्संज्ञ: स्यात् ।

## पुंस्त्रियोः स्यमौजस् ॥१।१।२९॥

औरिति प्रथमाद्वितीयाद्विवचनयोरविशेषेण ग्रहणम् । सि औ जस् अम् औ इत्येते प्रत्यया: पुंसि स्त्रियां च घुट्संज्ञा: स्युः । आमन्त्र्ये विहित प्रथमैकवचन विहाय शेषघुट् इति ।

## स्वरादयोऽव्ययम् ॥१।१।३०॥

एते शब्दा वाचका इति नामत्वेऽव्ययसंज्ञा: स्यु ।

## परः ॥७।४।११८॥

य: प्रत्यय: स प्रकृते: पर एव स्यात् ।

## स्पर्धे ॥७।४।११९॥

द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोरेकत्रानेकत्र चोपनिपात: स्पर्धः । तत्र य: सूत्रपाठे पर: स एव विधिः स्यात् । शासोता इत्यादेरवकाशो देवानि त्यादौ । नपुंसकस्य शिरित्यादेस्तु महान्तीत्यादौ । इह तु मम मासे धनानि । अत्र परत्वाच्छिरेव । देवम् इति स्थिते—सो रु: । र: पदान्ते विसर्गस्तयो: । देव: । नात्र प्रथमैकद्विपदी इति वक्ष्यमाणसूत्राद्वस्तुद्वित्व देव औरिति द्विवचन प्रार्थम् । देवौरस व्यसरेः ।

## समानामर्थेनैकशेष: ॥३।१।११८॥

अर्थेन समानां समानार्थानां शब्दानां सहोक्तौ गम्यमानायामेकः शिष्य तेऽर्थाद्वन्ये निवर्तन्ते ।

## स्यादावसंख्येयः ॥३।१।११९॥

सरूपार्थं वचनम्। सर्वस्मिन् स्यादौ विभक्तौ समाना तुल्यरूपाणां सहोक्तौ गम्यायामेकः शिष्यते सङ्ख्येयवाचिशब्दरूपं वर्जयित्वा। देवश्च देवश्चेति एकशेषे देवौ। बहुत्वे बहुवचनम्॥ देव जस् इतिस्थिते जकारो जसः (इत्यादौ) विशेषणार्थः।

## अत आः स्यादौ जस्भ्याम्ये ॥१।४।१॥

स्यादौ जसि भ्यामि यकारे च परेऽकारस्याकारः स्यात्।

## लुगस्यादेत्यपदे ॥

अपदादावकारे एकारे च परेऽकारस्य लुक् स्यात्। इत्यस्य बाधायाऽऽकारकरणम्। दीर्घत्वे देवाः। देव अम् इति स्थिते—

## समानादमोतः ॥१।४।४६॥

समानात्परस्यामोऽकारस्य लुक् स्यात्। देवम्। देवौ।

## शसोऽतासश्च नः पुंसि ॥१।४।४९॥

शसः सम्बन्धिनाऽऽकारेण सह प्रकृतेः समानस्यासन्नो दीर्घः स्यात्। तत्संनियोगे च पुंल्लिङ्गविषये शसः सकारस्य नकारः स्यात्। देवान्।

## टाङसोरिनस्यौ ॥१।४।५॥

अकारात्परयोष्टाङसोः स्याद्योर्यथासङ्ख्यमिनस्यावादेशौ स्याताम्। देवेन। देवाभ्याम्।

## भिस ऐस् ॥१।४।२॥

अकारात्परस्य स्यादेर्भिस ऐस् स्यात्। अनेकवर्णः सर्वस्य। देवैः। ऐस्करणं सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न्यायस्यानित्यत्वज्ञापकम्। तेनातिजरसैः।

## ङेङस्योर्यातौ ॥१।४।६॥

अकारात्परयोर्ङे ङसीत्येतयोर्यथासङ्ख्यं यात् इत्यादेशौ स्तः। देवाय। देवाभ्याम्।

## एद्बहुस्भोसि ॥१।४।४॥

बहुर्थविषये सकारादौ भकारादावोसि च स्यादौ परेऽकारस्यैकार आदेशः स्यात्। देवेभ्यः। देवात्। देवाभ्याम्। देवेभ्यः। देवस्य। देवयोः। देव आम् इति स्थिते—

सादिपूर्व्ये इत्यर्थः । अन्यार्थोऽन्तरशब्दो देवदत् । एष स्वशब्दो सर्वादित्वे ज्ञाया-
दय आत्मेर इत्यस्ये कृते ज्ञेयाः । त्रियुष्मकुपस्वभवः स्यापादयो न सम्भवन्ति इति ।
सर्वविभक्त्यादिप्रयोजनम् । प्रियसर्वाय । अतिसर्वाय । सम्बन्ध्यापेक्षायां देवदत् ।
गौणभावात् । स्वकतिपतृक इत्यादावन्तरइत्यात्पूर्वमेवाव्ययेऽक । एवं मकत्ति
दृकः । भवतित्यस्योकारो व्यर्थः । भवती । गणपाठोऽप्यकप्रत्ययार्थः । एकश-
ब्दो नित्यमेकवचनान्तः । संख्यार्थ इत्येके । मतान्तरेऽन्यार्थोऽप्येकशब्दः । कस्यापि
संज्ञायां सर्वादिर्न । सर्वो नाम कश्चित्तस्मै सर्वाय । इति सर्वादिविवेकः ।

## नवभ्यः पूर्वेभ्य इस्मात्स्मिन्वा ॥२।४।१६॥

पूर्वादिभ्यो नवभ्यो यथासाम ये इस्मात्स्मिन्नादेशा अकारास्ते वा स्युः ।
पूर्वे । पूर्वाः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परे । पराः । स्वे स्वाः ।
आत्मीया आत्मानो वा । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।

## तृतीयान्तात् पूर्वावर योगे ॥२।४।१३॥

पूर्व अवर इत्येतौ सर्वादी तृतीयान्तात्परौ योगे सम्बन्धे सति सर्वादी
न स्तः । मासेन पूर्वाय मासपूर्वाय । समासार्थवाक्येऽपि न सर्वादित्वम् ।
मासेन पूर्वाय ।

## न सर्वादिः ॥२।४।१२॥

द्वन्द्वे समासे न सर्वादित्वम् । दक्षिणोत्तरपूर्वाणाम् । कतरकतमकाः ।
अकोऽसर्वादित्वात्कप्रत्यय एव । तेन द्वन्द्वे चेति जसि न विकल्पः । स्वार्थिक-
प्रत्ययान्तानां निषेधाद्वा ।

## द्वन्द्वे वा ॥२।४।११॥

द्वन्द्वे समासेऽकारान्तस्य सर्वादेः सम्बन्धिनो जस इर्वा स्यात् । कतरकतमे ।
कतरकतमाः ।

## नेमार्धप्रथमचरमतयाल्पकतिपयस्य वा ॥

नेमादीनि नामानि । तयायौ प्रत्ययौ । तेषामकारान्तानां जस इर्वा स्यात् ।
नेमे । नेमाः । शेषं सर्ववत् । अर्धे । अर्धाः । एवं प्रथमचरमयोरपि । द्वितये ।
द्वितयाः । त्रितये । त्रितयाः । द्वये । द्वयाः । त्रये । त्रयाः । अथ तपि रसणे
अपि गतौ अनयोरपि अकारान्तशब्दावपि । पर व्याख्यानतो विशेषप्रतिपत्ति
र्नहि सन्देहादलक्षणमिति न्यायात्तद्धितस्यैव ग्रहः । द्वयेषामित्यत्र प्रयोगात् ।

---

१ अत-दोषे ईदृशम्-इति पाठः

व्याकरणान्तर ङ्यमीपत्नीत्यर्थान्तरेण। परमनेमे। परमनेमाः। अर्भकाः इत्ये कमेव।

## तीयं ङित्कार्य्ये वा ॥१।४।१४॥

तीयप्रत्ययान्त शब्दरूप किलां ङेङसिङसुङीनां कार्य्ये कर्त्तव्ये वा सर्वादि स्यात्। द्वितीयस्मै। द्वितीयाय। तृतीयस्मै। तृतीयाय। एव ङस्यादौ ङिति सर्ववत्। पक्षे देववत्। स्त्रीलिङ्गेऽपि द्वितीयस्यै। द्वितीयायै। इत्यादि। अर्थवद्ग्रहणे नानर्थकस्येति पटुजातीयाय। द्वितीयकाय। नात्राऽक्। किन्तु कप्रत्यय एव। ङित्कार्य्यं विना सर्वादित्वनिषेधात्।

## जराया जरस्वा ॥२।१।३॥

जराशब्दस्य स्वसम्बन्धिनि अन्यसम्बन्धिनि वा स्वरादौ स्यादौ वा जरसादेशः स्यात्। अनेकवर्णत्वात्सर्वादेशो प्राप्ते निर्दिश्यमानस्यादेशा इति। एकदेशविकृतमनन्यवत्। निर्जरसौ। निर्जरसः। निर्जरसम्। इनादीन् बाधित्वा परसूत्रात्वरस्। निर्जरसा। निर्जरसे। एतादेशोमेव सिद्धौ ऐस्करणसाफल्यात्। निर्जरसे। निर्जरसः २। निर्जरसोः २। निर्जरसाम्। निर्जरसि। अत्र शेष पक्षे च देववत्।

## दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतोद्-त्पन्नसहृदसन्यूषन्नुदन्दोषन्यकञ्छकन्वा ॥२।१।१०१॥

दन्तादीना यथासंख्य शसादौ दत् पद् इत्यादय आदेशा वा स्युः। दन्त। दन्तौ। दन्ताः। दन्तम्। दन्तौ। दन्तान्। दतः। दता। दन्तेन। दते। दन्ताय। दतः। दन्तात्। दता। दन्तस्य। दतोः। दन्तयोः। दताम्। दन्तानाम्। दति। दन्ते। भ्यसुमादावपि। दद्भ्याम्। दन्ताभ्याम्। दद्भिः। दन्तैः। इत्यादि ज्ञेयम्। पादः। पादौ। पादाः। पादम्। पादौ। पदः। पादान्। पदा। पादेन। पद्भ्याम्। पादाभ्याम् इत्यादि।

## मासनिशासनस्य शसादौ लुग्वा ॥२।१।१००॥

एषां शसादौ स्यादौ परे लुगन्तादेशो वा स्यात्। मासः। मासा। मास्भ्यामिति स्थिते सोरुः। अवर्णभोभगोऽघोरिति लुकि माभ्याम्। मासिः। मास्सु। केचित्तु माद्भ्याम्। मास्सु इत्याहुः। धुटस्तृतीय इति सकारस्य दकारकरणात्। पक्षे देववत्। यूषशब्दे यूषन्नादेशोऽनोऽस्येति वक्ष्यमाणेनाऽकारलोपे यूष्णः। यूषभ्याम्। यूषभिः। ससम्येकवचने ईङौ वेति वक्ष्यमाणेनाऽकारलोपविकल्पेन यूष्णि, यूषणि। पक्षे स्यमौजस्सु च देववत्।

## सख्यासायवेरह्नस्याहन् ङौ ॥१।४।५०॥

संख्यावाचिशब्देभ्यः सायशब्दाद्विशब्दाच्च परस्याह्नशब्दस्य ङौ परेऽहनित्यादेशो वा स्यात् । द्वयोरह्नोर्भवः द्व्यह्नः । अस्य सप्तम्येकवचने द्व्यहनि । ईङौ वेति अकारलुग्विकल्पात् द्व्यह्नि । पक्षे लोप च देववत् । एवं त्र्यह्नि । त्र्यहनि । त्र्यह्ने इत्यपि । सायाह्नि । सायाहनि । सायाह्ने । व्यह्नि । व्यहनि । व्यह्ने । इत्यदन्ताः । विश्वपाः । ऐदौत्सन्ध्यक्षरैः । विश्वपौ । समानानामिति दीर्घः । विश्वपाः । विश्वपाम् । विश्वपौ । शसि ।

## लुगातोऽनापः ॥२।१।१००॥

आब्वर्जितस्याकारस्य ङी स्यादिधुट्स्वरे परे लुक् स्यात् । विश्वपः । विश्वपा । विश्वपे । विश्वपाभ्याम् । इत्यादि । एवं हाहाशब्दः । तस्यापि शसि हाहः । हाहा । हाहे । हाहः २ हाहोः २ हाहाम् । हाहि । हाहासु । हे हाहाः । इत्यादन्ताः । मुनिः ।

## इदुतोः स्त्रेरीदूत् ॥१।४।२१॥

स्त्रिशब्दवर्जितस्येदन्तस्योदन्तस्य चौता सह यथासंख्यमीदूतावित्यादेशौ स्याताम् । मुनी ।

## जस्येदोत् ॥१।४।२२॥

इदन्तस्योदन्तस्य च जसि परे एत् ओत् इत्यादेशौ स्तः । मुनयः । मुनिम् । मुनी । मुनीन् ।

## टः पुंसि ना ॥१।४।२४॥

इदुदन्तात्परस्य टस्तृतीयैकवचनस्य ना इत्यादेशः स्यात् । मुनिना । मुनिभ्याम् ३ । मुनिभिः ।

## ङित्यदिति ॥१।४।२३॥

अदितिङिति स्यादौ परे इदन्तस्योदन्तस्य चैदौतावादेशौ स्तः । मुनये । मुने अस् इति स्थिते—

## एदोद्भ्यां ङसिङसो रः ॥१।४।३५॥

एदोद्भ्यां परयोर्ङसिङसोः स्थाने रेफः स्यात् । अकार उच्चारणार्थः । मुनेः २ । मुन्योः २ ।

## ङिर्डौ ॥१।४।२५॥

इदुदन्तात्परो ङिर्डौ स्यात् ।

## डित्यन्त्यस्वरादेः ॥२।१।११४॥

स्वराणां सन्निविष्टानां मध्ये योऽन्त्यः स्वरस्तदादेः शब्दस्वरूपस्य डिति परे लुक् स्यात्। मुनौ। मुनिषु।

## ह्रस्वस्य गुणः ॥१।४।४१॥

आमन्त्र्येऽर्थे वर्तमानस्य सिना सह ह्रस्वान्तस्य स्वरस्यैव गुणः स्यात्। आसन्नः। हे मुने। हे मुनी। हे मुनयः। अतिक्रान्तः स्त्रियमतिस्त्रिः पुरुषः। स्त्रिया इति वक्ष्यमाणेनेयादेशो अतिस्त्रियौ। जसि अतिस्त्रयः। अत्रेरिति ज्ञापकात्परेणापि इयादेशेनेत्कार्यं न बाध्यते। वाम् शसीति अतिस्त्रिम् अतिस्त्रियम् नरं पश्य। अतिस्त्रियौ। अतिस्त्रियः। अतिस्त्रीन् नरान् पश्य। अतिस्त्रिणा। अतिस्त्रिभ्याम्। अतिस्त्रिभिः। अतिस्त्रये। अतिस्त्रेः २। अतिस्त्रियाः २। अतिस्त्रीणाम्। अतिस्त्रौ। अतिस्त्रिषु। हे अतिस्त्रे। 'ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया। इयादेशोऽपि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥१॥' इकारान्तः सखिशब्दः।

## ऋदुशनस्पुरुदंसोऽनेहसश्च सेर्डाः ॥१।४।८४॥

सखिशब्दादिकारान्तादृदन्तादिभ्यश्च परस्य सेर्डा इत्यादेशः स्यात्। अन्त्यस्वरादिलोपे सखा। किंसखा। प्रियसखा।

## सख्युरितोऽशावैत् ॥१।४।८३॥

इदन्तस्य सखिशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा शिवर्जिते शेषे घुटि परे ऐकारोऽन्तादेशः स्यात्। सखायौ। सखायः। सखायम्। सखायौ। सखीन्। सुसखायौ। प्रियसखायौ। किंसखायौ। परमसखायौ इत्यादावपि। तृतीयैकवचने—

## न नाङिदेत् ॥१।४।२१॥

केवलसखिपतेः परस्य टावचनस्य नादेशो ङिति परे एकारश्चोक्तः स न स्यात्। इवर्णादेरिति यत्वे सख्या। सखिभ्याम्। सखिभिः। सख्ये।

## खितिखीतीय उर् ॥१।४।३६॥

खितिखीतीसम्बन्धिन इवर्णस्यामीयवकारात्परयोर्ङसिङसोः स्थाने उर् इत्यादेशः स्यात्। सख्युः। अत्र खिकथनात् सखिशब्दस्तिकथनात्पतिशब्दः। खीतीदीर्घकथनात्सखायमिच्छतीति क्यनि क्विपि यलोपे सखीशब्द ईकारान्तः। पतिमिच्छतीति क्यनि क्विपि यलोपे पतीरीकारान्तो ग्राह्यः। तस्यापि ङसिङसोः सख्युः पत्युरित्येव। तत्र योऽनेकस्वरस्येति यकारः। सख्योः। सखि ङि इत्यत्र—

## केवलसखिपतेरौः ॥१।४।२६॥

केवलसखिपतिभ्यामिदन्ताभ्यां परो ङिरौ स्यात् । सख्यौ । एव पत्यौ । प्रियसख्यौ । सुसख्यौ । अतिसख्यौ । बहुसखौ । नरपतावित्यादौ कि(?)रेव केवलत्वाभावात् । तेन सुसखिना सुसख्ये इत्यादि । य इति किम् ? यत्र यत्व तत्रै पोट् । तत्नातिसख्येः अतिपत्ये इत्यत्र न । पतिः । पती । पतयः । पतिम् । पती । पतीन् । सखिवदग्रे । पत्या । पत्ये । पत्युः । पत्यो २ । पतिषु । हे पते । सखी प्रतिक्रान्तोऽतिसखिः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् । राजन् सख्येरिति सूत्रेण नाट् समासान्तः । गोश्चान्ते ह्रस्व इत्यादिना ह्रस्वत्वे लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्मुनिवत् । कति शब्दो बहुवचनान्तः ।

## डत्यतु सख्यावत् ॥१।१।३८॥

डतिप्रत्ययान्तमतुप्रत्ययान्तं नाम सख्यावत्स्यात् । सख्या एकत्र्यादिका । तत्कार्य्यं भजतीत्यर्थः ।

## डतिष्णः सख्याया लुप् ॥१।४।५४॥

डतिप्रत्ययान्तस्य षकारनकारान्तायाः सख्यायाश्च सम्बन्धिनोर्जस्शसो लुप् स्यात् । कति । कति । कतिभिः । कतिभ्यः । प्रियकतिर्मुनिवत् । लुगित्येव सिद्धौ लुप् स्यानिवद्भावनिषेधार्थं ।

## लुप्यय्वृल्लेनत् ॥१।४।११२॥

परस्य प्रत्ययस्य लुपि सत्यां लुप्भूतपरनिमित्तकं पूर्वस्य कार्य्यं न स्यात् । य्वृत्करणमेनत्करणं लकारं च वर्जयित्वा । 'सन्ता सख्या डतिर्युष्मदस्मच्च स्युर लिङ्गकाः ।' इतिवचनात्रिषु सख्याः ।

## त्रेस्त्रयः ॥१।४।३४॥

आमः सम्बन्धिनस्त्रिशब्दस्य त्रय इत्यादेशः स्यात् । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे न । अतित्रीणाम् । प्रियत्रीणाम् । केचित्तु गौणत्वेऽपि प्रियत्रयाणामिति मन्यन्ते । त्रिशब्दो बहुवचनान्त एव । द्विशब्दो द्विवचनान्तः ।

## आद्वेरः ॥२।१।४१॥

द्विशब्दमभिव्याप्य त्यदादीनाम् अन्त्यस्य तत्सम्बन्धिनि स्यादौ तसादौ तद्धिते च प्रत्यये परेऽकारः स्यात् । द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । संज्ञायां गौणत्वे च नाकारः । द्विनाम कश्चित् । द्विः । द्वी । द्वयः । अतिद्विः । मुनिवत् । प्रायान्ये परमद्वौ । उदुम्बर भवपलमोदुलोमिः । बाह्वादिभ्यो गोत्रे इतीञ् । औडुलोमी । बहुत्व—

## लोम्नोपत्येषु ॥६।१।२३॥

लोमन्शब्दात्प्रमाण् जितीयेऽर्थेऽपत्यलक्षणे अःप्रत्ययः स्यात्। अपत्येष्विति बहुवचनाद्बहुत्वे अः। अन्यत्रैअन्तत्वादिकारान्तवद्रूपाणि। उडुलोमाः। उडुलोमान्। उडुलोमैः। एवं शरलोमैः। एवमन्येऽपीदन्ता रविकविप्रमुखा मुनिवत्साध्याः। उकारान्ता अपि साधुभानुविष्णुप्रभृतयो मुनिशब्दसाधनसूत्रैरेव साहचर्यात्साध्याः। भानुः। भानू। भानवः। भानुम्। भानू। भानून्। भानुना। भानुभ्याम्। भानुभिः। भानवे। भानुभ्याम्। भानुभ्यः। भानोः २। भान्वोः २। भानूनाम्। भानौ। भानुषु। हे भानो। हे भानू। हे भानवः। ईकारान्तो वातं प्रमिमीते इत्युणादौ वातप्रमीः। वातप्रम्यौ। वातप्रम्यः। हे वातप्रमीः। समानादमोऽतः। वातप्रमीम्। वातप्रम्यौ। वातप्रमीन्। वातप्रम्या। वातप्रम्ये। वातप्रम्यः २। वातप्रम्योः २। वातप्रम्याम्। दीर्घत्वाच्च नाम्। ङौ समानानामिति दीर्घः। वातप्रमी। वातप्रमीषु। एवं पपी ययी प्रभृतयः। पपीः सूर्यः। ययीर्मार्गः। क्वियन्ते तु अमि शसि ङौ च विशेषः। वातप्रम्यम्। वातप्रम्यः। वातप्रम्यि। क्विब्वृत्तेरसुधियस्त्री इति वक्ष्यमाणयत्वम्। बहव्यः श्रेयस्यो यस्य स बहुश्रेयसी नरः। दीर्घङ्याबिति वक्ष्यमाणं सेर्लुक्। बहुश्रेयस्यौ नरौ। बहुश्रेयस्यो नराः। आमन्त्र्ये नित्यविद्विरिति ह्रस्वत्वे हे बहुश्रेयसि नर। शसि बहुश्रेयसीन्। बहुश्रेयस्या नरेण। स्त्रिस्तु ङीदूत इति वक्ष्यमाणादैदासादयो नित्यम्। बहुश्रेयस्यै। बहुश्रेयस्याः २। बहुश्रेयसीनां नराणाम्। बहुश्रेयस्यां नरे। शेषमौणादिकवातप्रमीवत्। कुमारीवाचरतीति क्विपि। कुमारी ब्राह्मणः।

## योऽनेकस्वरस्य ॥२।१।५६॥

अनेकस्वरस्य धातोरिवर्णस्य प्रत्ययस्वरे परे यकारः स्यात्। इति यत्वे कुमार्यौ। कुमार्यः। कुमार्यै ब्राह्मणाय। खरकुटीव खरकुटी तस्मै खरकुट्यै ब्राह्मणायेत्यादि ज्ञेयम्। अतिलक्ष्मीशब्देऽङ्यन्तत्वान्न सेर्लुक्। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्।

## धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ॥२।१।५०॥

धातुसम्बन्धिन इवर्णस्योवर्णस्य च स्वरादौ प्रत्यये परे क्रमादिय् उव् इत्यादेशौ स्याताम्। नीः। नियौ। नियः।

## निय आम् ॥१।४।५१॥

नियः परस्य ङेः सप्तम्येकवचनस्याम् स्यात्। नियाम्।

## सयोगात् ॥२।१।५२॥

धातोरिवर्णोवर्णस्य धातोः संयोगात्परस्य प्रत्ययस्वरे इयुवौ स्तः। य्वोरप

वात्। सुश्री। सुश्रियौ। सुश्रियः। सुश्रियम्। सुश्रियौ। सुश्रियः। सुश्रिया। सुश्रीभ्याम्। सुश्रीभिः। वेयुवोऽस्त्रिया इतिवक्ष्यमाणस्येन विकल्पादैदासाद्यः। तेन सुश्रियै। सुश्रिये। सुश्रियाः २। सुश्रियः २। सुश्रियोः २।

## आमो नाम्वा ॥१।४।३१॥

इयुवोः सम्बन्धिनौ यौ स्त्रीदूतौ तदन्तान्नाम्नः परस्य तदन्तसम्बन्धिन आमो नाम् वा स्यात्। सुश्रियाम्। सुश्रीणाम्। सुश्रियि। सुश्रियाम्। सुश्रीषु। हेसुश्रीः। हे सुश्रियौ। हे सुश्रियः। एव स्वयम्भूः। सुधी। सुधियौ। सुधियः। सुष्ठु ध्यायन्तीतिविग्रहे सुधियाम्। शोभना धीर्येषामितिविग्रहे सुधीनाम्। सुधियाम्। एव यवक्रियौ। शुद्धधियौ। परमधियौ। दुःस्थिता धीर्ययोस्तौ दुर्धियौ इति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिसंज्ञा इति वचनात्। सखायमिच्छतीति सखीयति। ततः क्विप्। अल्लोप-यलोपौ। अल्लोपस्य स्थानिवत्त्वाद्योऽनेकस्वरस्येति यकारे प्राप्ते क्वौ लुप्तं न स्थानिवत्। सखी। सख्यौ शसि यत्वम्। सख्यः। ङौ सख्यि। सह खेन वर्तते इति सखस्तमिच्छतीति सखी। सुखमिच्छतीति सुखी। पक्षे सख्यौ। सुखी। स्तितिसीतीय उद् इत्यत्र दीर्घस्यापि ग्रहणात् सख्युः। सुख्युः। लूनमिच्छतीति लूनी। लून्यौ। क्षाममिच्छतीति क्षामी। एषां ङसिङसोर्यत्वे—

## क्तादेशोऽपि ॥२।१।६॥

क्तयुक्ततकारस्य स्थाने आदेशः क्तादेशः स षकारादन्यत्र परे कार्ये स्यादिविधौ च कर्तव्येऽसन् ज्ञेयः। इति सत्वनत्वयोरसत्त्वात् स्तितिसीत्यादिना उत्। लून्युः। क्षाम्युः। प्रस्तीम्युः। शुष्की। पक्की। अनयोर्ङसिङसोरपि संयोगादिति शुष्क्यः। पक्यः।

## क्विब्वृत्तेरसुधियस्तौ ॥२।१।२८॥

क्विबन्तेनैव या वृत्तिः समासस्तस्याः सुधीवर्जितायाः सम्बन्धिनो धातोरिवर्णोवर्णस्य स्थाने स्वरादौ स्यादौ प्रत्यये परे तौ प्रागुक्तौ यकारवकारौ स्याताम्। उन्नी। उन्न्यौ। उन्न्यः। ग्रामण्यौ। ग्रामण्यः। सेनान्यौ। सेनान्यः। निय आम्। नियाम्। उन्न्याम्। ग्रामण्याम्। सेनान्याम्। परमं नयतीति परमन्यौ। परमन्यः। परमश्चासौ नीश्चेति विग्रहे परमनियौ परमनियः। सुधवर्जनात् प्रधीः। प्रध्यौ। प्रध्यः। प्रध्या। प्रध्यै। प्रध्याः। प्रधीनाम् प्रध्याम्। प्रध्योः। प्रधीषु। हे प्रधीः। हे प्रध्यौ। हे प्रध्यः। इतीदन्ताः। हूहूः। हूह्वौ। हूह्वः। हूहूम्। हूह्वौ। हूहून्। हूह्वा। हूह्वे। हूह्वः २। हूह्वोः २। हूहूनाम्। हूह्वि। अतिचमूः। अतिचम्वा इत्यादि वामभ्रीवत्। ह्रस्वकरणात् हे अतिचमु। स्त्रियां अतिचम्वै। अतिचम्वाः

२। अतिचमूनाम्। अतिचम्व्याम्। सुलू। सुल्वौ। सुल्वः। खलपू। खलप्वौ। खलप्वः। एषु स्यादुत्पत्ते प्रागेव क्विबन्तेन समासः।

## दृन्पुनर्वर्षाकारैर्भुवः ॥२।१।५९॥

एभिः सह या क्विब्विसिस्तस्या भुवो धातोरुवर्णस्य स्यादौ स्वरादौ प्रत्यये परे वः स्यात्। दृन् हिंसन् भवतीति दृन्भूः। क्विबन्तः। सविषः कीटः। दृन्भ्वौ। दृन्भ्वः। खलपूवत्। औणादिकड्प्रत्यये तु दृन्भ्वौ। दृन्भ्वः। इत्यादि हूहूवत्। पुनर्भूर्द्विरूढा स्त्री। पुनर्भ्वौ। पुनर्भ्वः। वर्षाभूरोपधिविशेषो दर्दुरश्च। वर्षाभ्वौ। वर्षाभ्वः। कारे भवति कारभूः। कारभ्वौ। कारभ्वः। करशब्देऽपि करभ्वौ। करभ्वः। काराशब्देऽपि। काराभ्वौ। काराभ्वः। एतानिभिरेव भुव इति नियमार्थं सूत्रम्। तेनैतैरेव भुवो वो नान्यैरिति सिद्धम्। स्वयम्भुवौ। स्वयम्भुवः। वस्लू। वस्ल्वौ। वलीवत्। कटभूः। सयोगपूर्वकत्वात् स्वयम्भूवत्। दृशोर्भवति दृग्भूः। स्वयम्भूवत्। काराभूरपि स्वयम्भूवदिति कश्चित्।

## स्यादौ वः ॥२।१।५७॥

अनेकस्वरस्य धातोरुवर्णस्य स्यादौ स्वरे प्रत्यये वकारः स्यात्। वसुमिच्छतीति क्यनि क्विपि वसूः। वस्वौ। वस्वः। स्यादाविति किम्? लुलुवतुः। इत्यूवन्तः। पितृशब्दे सेर्डा। पिता।

## अड्डौं च ॥१।४।३९॥

ऋतः स्थाने डौ घुटि च परेऽरित्यादेशः। पितरौ। पितरः। पितरम्। पितरौ। पितॄन्। पित्रा। पितृभ्याम्। पितृभिः। पित्रे।

## ऋतो डुर् ॥१।४।३८॥

ऋतः परयोर्ङसिङसोर्डुर् स्यात्। पितुः २। पित्रोः २। पितॄणाम्। पितरि। पितृषु। ह्रस्वस्य गुणः। हे पितः। हे पितरौ। हे पितरः।

## मातुर्मातः पुत्रेऽर्हे सिनाऽमन्त्र्ये ॥१।४।४०॥

मातृशब्दस्य आमन्त्र्ये पुत्रे प्रशंसायां गम्यमानायां सिना सह मात इत्यकारान्त आदेशः स्यात्। हे गार्गिमात।

## तृ स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ॥१।४।३८॥

तृ इति तृन्तृचोर्ग्रहणम्। तदन्तस्य स्वस्रादिशब्दानां च ऋतः स्थाने तदन्तस्यम्भित्यमि घुटि परे आर् स्यात्। कर्तृशब्दः। कर्तारौ कटस्य। कर्तारः। कर्तारम्। कर्तारौ। कर्तॄन्। कर्त्रा। कर्तृभ्याम्। कर्तृभिः। कर्त्रे। कर्तुः २। कर्त्रोः २। कर्तृ-

णाम् । कर्तरि । कर्तृषु । हे कर्तः । नप्तारौ । नष्टारौ । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । अतिकर्तारौ । तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणात् नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां तृशब्दस्य ग्रहणं न स्यादिति तेषां पृथग् ग्रहणम् । व्युत्पत्तिपक्षे तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम् । तेन मान्धे पामौणादिकानां पितृभ्रात्रादीनाम् । ना । नरौ । नरः । हे नः । नृभ्याम् । नृभिः । ङे० । नृ० २ ।

## नुर्वा ॥१।४।४८॥

नृशब्दस्य नामिपरे वा दीर्घः स्यात् । नृणाम् । नृणाम् । नरि । नृषु ।

## क्रुशस्तुनस्तृच पुंसि ॥१।४।९७॥

क्रुशः परो यस्तुन् प्रत्ययस्तस्य घोषे घुटि परे तृजादेशः स्यात् पुंसि । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । अतिक्रोष्टा । प्रियक्रोष्टा । असिद्धं बहिरङ्गमन्तरङ्गे इति न अभिव्यक्तिः इति कश्च । यासि क्रोष्टूनित्येव । घोष इति किम् ? हे क्रोष्टो ।

## टादौ स्वरे वा ॥१।४।९२॥

टादौ स्वरे परे क्रुशः परस्य तुनस्तृजादेशो वा स्यात्पुंसि । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः २ । क्रोष्ट्रोः २ । क्रोष्टरि । क्रोष्टौ । नामि क्रोष्टूनामित्येव । नित्यत्वात् पूर्वं नामादेशे स्वराभावात् । भिस्भ्यां भ्यस्सु उकारान्तवद्रूपाणि । इति तदन्ताः । कृ तॄ गॄ एषां धातूनामनुकरणे प्रकृतिवदनुकरणमिति विकल्पेनातिदेशात् कर्ता किरतीर इतीरित्यादेशो कीः । किरौ । किरः । तीः । तिरौ । तिरः । गीः । गिरौ । गिरः । इत्यादिगीर्वत् । पक्षे कृः । क्रौ । क्रः । कृम् । क्रौ । कृन् । क्रा । क्रे । इत्यादि । इति ऋदन्ताः । विवृत्त शब्दे इत्यस्यानुकरणे लकारो पदिष्ट कार्य्यं लृकारेऽपि विज्ञायते इति लेखः । विवृता । विवृती । विवृतः । स्याभिप्रत्यासत्त्या ऋदृशो वेत्यरादेशोऽप्यकिति । कश्चित्त्वोस्तु स्तो दुर् । विवृलु । इत्यादि । इति लृदन्ताः । अतिरे । अतिरयौ । अतिरयः । अतिरयम् । हे अतिरे । अवेतः स्यमोर्लुक् । हे अतिरयौ ।

## आ रायो व्यञ्जने ॥२।१।५॥

रैशब्दस्य तदन्तस्सम्बन्धिनि व्यञ्जनादौ स्यादौ परे आकारः स्यात् । राः । रायौ । रायः । हे राः । राभ्याम् । राभिः । राभ्यः । रासु । एव सुराः ।

## ओत औं घुटि ॥१।४।७४॥

ओकारस्य ओत एव विहिते घुटि परे औः स्यात् । गौः । गावौ । गावः । विहितविशेषणाद्विभक्तिः । सुनातेर्डिवि गुणे सौः । सावौ । सावः । हे गौः । हे अगौः ।

## आअम् शसोऽता ॥१।४।७५॥

ओकारस्याम् शसोरकारेण सहाकारः स्यात् । गाम् । गाः पश्य । गवा । गवे । गोः २ । गवोः २ । गवाम् । गवि । गोषु । ग्लौः । ग्लावौ । ग्लावः । इत्यादौ स्वरे परे आवादेशः । ग्लौभ्याम् । ग्लौभिः । ग्लौषु । हे ग्लौः ।

इति स्वरान्ताः पुंलिङ्गाः ॥

---

## अथ स्वरान्ताः स्त्रीलिङ्गाः ।

सदालिसेवितः पापैः परीतः प्राप्तसौरभः ।
राजहंससमियो जीयाज्जिनः पद्मसमः प्रभुः ॥ १ ॥

पद्माद् इति स्थिते—

## दीर्घङ्याब्व्यञ्जनात्सेः ॥१।४।४५॥

दीर्घाभ्यां ङ्याब्भ्यां व्यञ्जनाच्च परस्य सेर्लुक् स्यात् । पद्मा । माला ।

## औता ॥१।४।२०॥

आबन्तस्य सम्बन्धिनौकारेण सहावन्तस्यैव एकारः स्यात् । पद्मे । माले । ईषत्समासे बहुव्रीहौ बहुसदे मत्स्यकौ । जसि पद्माः । मालाः । पद्माम् । मालाम् । पद्मे । माले । शसि पद्माः । मालाः पश्य ।

## टौस्येत् ॥१।४।१९॥

आबन्तस्य सम्बन्धिनोष्टौसोः परयोरेकारः स्यात् । पद्मया । मालया । पद्माभ्याम् । मालाभ्याम् । पद्माभिः । मालाभिः ।

## आपो ङितां यै यास् यास् याम् ॥१।४।१७॥

आबन्तस्य ङितां ङे ङसिङस्ङीनां यै यास् यास् यामित्यादेशाः क्रमेण स्युः । पद्मायै । मालायै । पद्मायाः । मालायाः । पद्मयोः २ । मालयोः २ । पद्मानाम् । मालानाम् । पद्मायाम् । मालायाम् । पद्मासु । मालासु ।

## एदापः ॥१।४।४२॥

आमन्त्रणेऽर्थे आबन्तस्य सिना सहैकारः स्यात् । हे पद्मे । हे माले ।

## नित्यदिद्विस्वराम्बार्थस्य ह्रस्वः ॥१।४।४३॥

नित्यं येभ्यः शब्देभ्यः परेषां ङितां दैदासादामः स्युस्ते नित्यदितस्तेषां द्विस्वराणामम्बार्थानामाबन्तानामामन्त्रणेऽर्थे सिना सह ह्रस्वः स्यात् । हे स्त्रि । हे अतिस्त्रि । हे देवि । हे गौरि । हे लक्ष्मि । हे करभोरु । हे श्वश्रु । हे वधु । हे

यर्पीम्नु । हे पुमर्मु । हे अतिलक्ष्मि । हे अम्ब । हे अक्क । हे अल्ल । हे अड्ड । हे अनम्ब । हे परमाम्ब । हे प्रियाम्ब । तिविति किम् ? हे वातप्रमीः । हे हूहू । हे ग्रामणीः । हे खलपूः । निरग्रहणादिह न हे श्रीः । हे ह्रीः । हे भ्रूः । हे भ्रूः । कथ सुभ्रु । हे भीरु । स्त्रीपर्य्यायत्वात्कृकि कृते भविष्यति । द्विस्वर इति किम् ? हे अम्बाडे । हे अम्बाले । हे अम्बिके ।

# सर्वादेर्डस्पूर्वाः ॥१।४।१८॥

सर्वादेराबन्तस्य ङितां यै यास् यास् यामस्से डस्पूर्वाः स्युः । सर्वस्यै । सर्वस्याः सर्वस्याः । सर्वस्याम् । परमसर्वस्यै । इतमः स्त्रियाम् अम्यै इत्यादि । द्वितीयस्यै । द्वितीयायै । नाम्न प्रियसर्वायै । गौणत्वात् । कथं दक्षिणपूर्वस्यै इति । दक्षिणा चासौ पूर्वा चेति कर्मधारयात् । दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दिक् दक्षिणपूर्वा तस्यै दक्षिणपूर्वायै इत्येव । जरा । जरसौ । जरसः । जरसम् । जरसौ । जरसः । जरसा । जरसे । जरसः २ । जरसोः २ । जरसाम् । जरसि । पक्षे व्यञ्जनादौ च पद्मावत् । जरामतिक्रान्ता स्त्री अतिजरा । निमकेराया व्यञ्च यामास जरस् । नासिकाशब्दे शसादौ नसः । नसा । नोभ्याम् । नोभिः । नसे इत्यादि । पक्षे सुटि च पद्मावत् । निशाशब्दे निशः । निशा । निशुभ्यामि त्यत्र धुटस्तृतीय इति जकारे कृते निज्भ्याम् । सुपि जकारस्य प्रथमत्वे तस्य शषा-विति सुपः सकारस्य षकारे प्रथमात्षुटीति षस्य कत्वे निच्षु । जकारस्य परे गत्वे प्राप्ते असत्वात् चजः कगमिति न गत्वम् । कश्चित् यजसृजेत्यादिना षस्य-मापेन पक्षे षस्य तृतीयत्वेन डत्वे निड्भ्याम् । निड्भिः । सुपि ङः स स्सोऽन्त्र इति तकार टत्वे शिट्याद्यस्य द्वितीयो वेति टकारतकारयोष्ठकारथकारौ । न पदा न्ताट्टवर्गादित्यादिना टवर्गत्वमपि न । तेन निट्त्सु । निट्सु इत्यादि । पृतना शब्दे पृत् शसादौ पृतनायां इति मते पृतः । पृता । पृद्भ्याम् । पक्षे सुटि च पद्मा वत् । तीर्थपा विश्वपावत् । मतिर्बुद्धि बुद्धिवत् । स्त्रीलिङ्गाच्छसो नत्वं नेति मतीः । मत्या । मतिभ्याम् । मतिभिः ।

# स्त्रिया ङिता वा दै दास् दास् दाम् ॥१।४।२८॥

स्त्रीलिङ्गादिदन्तादुदन्ताच्छब्दात्परेषां तत्तत्सम्बन्धिनाम् स्यादेर्ङितां ङे ङसि ङस् ङीनां स्थाने क्रमात् दै दास् दास् दाम् एते आदेशा वा स्युः । विकल्प सूत्रमिदम् । मत्यै । मतये । मत्याः २ । मतेः २ । मत्याम् । मतौ । कन्या पतिर्यस्य पत्या वा कन्यापती कन्यापतये पुरुषाय स्त्रियै वा । प्रियबुद्ध्यै । प्रियबुद्धये स्त्रियै नराय वा । एषु समासार्थस्य पुरुषत्वेऽपि पत्यादिशब्दानां स्त्रीत्वमस्ति । केचित् प्रियबुद्ध्ये प्रियधेन्वै पुरुषायेत्यत्राद्भुतं विति आदेशाः । कश्चित्पुरुषविशे षणे अतिशकट्यै प्रियधेन्वै पुरुषायेत्येव स्यादित्याह । तन्मतेऽतिशकटयेऽतिधेनवे स्त्रियै इत्येव न पुनर्विकल्पः । आमन्त्र्ये हे मते, हे बुद्धे । एव स्तुतिभ्रुत्यादयः ।

## त्रिचतुरस्तिसृचतसृ स्यादौ ॥२।१।१॥

स्त्रियां त्रिचतुरोस्तदन्तस्सम्बन्धिनि स्यादौ विभक्तौ तिसृचतसृइत्यादेशौ क्रमात् स्तः।

## ऋतोरः स्वरेऽनि ॥२।१।२॥

तिसृचतसृसम्बन्धिन ऋकारस्य तदन्तस्सम्बन्धिनि स्यादौ स्वरे परतो रादेशः स्यात्। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः २। तिसृणाम्। तिसृषु। प्रियास्तिस्रो यस्य प्रियतिसा पुरुषः। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रम्। प्रियतिस्रा। प्रियास्त्रयः पुरुषा यस्याः, यद्वा प्रियाणि त्रीणि गृहाणि यस्याः सा प्रियत्रिः स्त्री। अव्ययस्य त्रिशब्दस्य पुंसि नपुंसके च पूर्ववदेव रूपाणि। आमि प्रियत्रीणाम्। प्रियत्रयाणामित्यन्ये। अनीति किम्? प्रियतिसृणी कुले इत्यत्र रादेशस्य परत्वान्नोऽन्तः पूर्वं न स्यात्। रकारकरणात्। शासेतिदीर्घत्वम् अनौ चेत्यृतो डुर् इत्येतेषामपवादः। प्रियतिस्री। प्रियतिस्रः। प्रियतिस्रि इत्यादि। आद्धेर् इत्यकारस्य वक्ष्यमाणेन आदितिसूत्रेणाप्। द्वे। द्वे। द्वाभ्याम् ३। द्वयोः २। देवी। देव्यौ। देव्यः। देवीम्। देव्यौ। देवीः। देव्या। देवीभ्याम्। देवीभिः।

## स्त्रीदूतः १।४।२९॥

नित्यस्त्रीलिङ्गादीकारान्तादूकारान्ताच्च परेषां तदन्तस्सम्बन्धिनां स्यादेर्ङितां स्थाने यथासंख्यं दास् दास् दाम् इत्यादेशाः स्युः। देव्यै। देव्याः। देवीनाम्। देव्याम्। देव्योः। देवीषु। हे देवि। एवं नदी। नद्यौ। नद्यः। नद्यै। नद्याः २। नद्याम्। लक्ष्मीशब्देऽप्यन्तस्यात्र सेर्लुक्। लक्ष्मीः। शेषं देवीवत्। अतिलक्ष्म्यै। अतिलक्ष्म्यै। अतिलक्ष्म्यै स्त्रियै पुरुषाय वा। कुमारीमाचरतीति क्यनि क्विपि यलोपे कुमारी तस्यै कुमार्ग्यै स्त्रियै नराय वा। नरकुटीव नरकुटी तस्यै नरकुट्यै स्त्रियै पुरुषाय वा। स्त्रिया इत्यनुवर्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थम्। तेनेह न भवति ग्रामण्ये खलप्वे स्त्रियै। ईदूत इति किम्? मात्रे। दुहित्रे। धुद्वये। धेनवे। अतिकुमारये इत्यत्र ईदूत इति वर्णविधित्वेन स्थानिवद्भावो नास्तीति न दिदादेशाः।

## स्त्रियाः ॥२।१।५४॥

स्त्रीशब्दस्य स्वरादौ प्रत्यये परे इय् स्यात्। स्त्री। स्त्रियौ। स्त्रियः।

## वाम् शसि ॥२।१।५५॥

स्त्रीशब्दस्यामि शसि च परे वेयादेशः स्यात्। स्त्रियम्। स्त्रीम्। स्त्रियः। स्त्रीः। अतिस्त्रिम्। अतिस्त्रियम् नरम्। अतिस्त्रियः। अतिस्त्रीन्नरान्। क्यनाद्यन्तस्य धातुत्वात् धातोरिवर्णोवर्णस्येयुवितीति नित्यमियादेशः। स्त्रीवाचरतीति स्त्री ब्राह्मणः। तं स्त्रियम्। तान् स्त्रियः। स्त्रिया। स्त्रीभ्याम्। स्त्रीभिः। स्त्रियै।

स्त्रियः २। स्त्रियोः २। स्त्रीणामित्यत्राऽस्त्रिया इतिनिर्देशेनेयुवादेशाभावे स्त्रीदूता-
मितेन कार्येण बाधकल्पनात् पूर्वं नाम्। स्त्रीषु। हे स्त्रि। स्त्रीशब्दो न धातुरि
तिसंयोगाद्वित्यनेन नेय्। स्त्रियमतिक्रान्ता स्त्री अतिस्त्रिः। पुंवत्। शसि च
तिस्त्रीः। अतिस्त्रियः। किन्तु स्त्रियां ङितां वेति विकल्पः। अतिस्त्रियै। अतिस्त्रये।
अतिस्त्रियाः २। अतिस्त्रेः २। आमि अतिस्त्रीणामित्येव। अतिस्त्रियाम्। अतिस्त्रौ।
श्रीः। श्रियौ। श्रियः।

## वेयुवोऽस्त्रियाः ॥१।४।३०॥

इयुवोः स्थानिनौ यौ स्त्रीदूतौ ताभ्यां परेषां तदन्तसम्बन्धिनां स्यादेर्ङितां स्थाने क्रमात् दै दास् दास् दाम् इत्येते आदेशा वा स्युः स्त्रीशब्दं वर्जयित्वा। श्रियै। श्रिये। श्रियाः। श्रियः। श्रीणाम्। श्रियाम्। अतिश्रियै। अतिश्रिये स्त्रियै नराय वा। प्रधुश्रियै प्रधुश्रिये स्त्रियै नराय वा। प्रधीशब्दस्य तु केषाञ्चिन्मते लक्ष्मीवद्रूपम्। पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात्। लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटानुसारिमते पुंवद्रूपम्। प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत्। अमि शसि च प्रध्यम्। प्रध्यः। इति च विशेषः। सुष्ठु धीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे सुधीः श्रीवत्। मतान्तरे पुंवत्। सुष्ठु शोभना वा धीः सुधीः श्रीवदेव। ग्रामणीः पुंवत्। ग्रामनयनं खलपवनं वा पुंधर्मं पदोत्सर्गात्। केवलस्यैव स्त्रिया विशेषणात्। उकारान्तो रज्जुशब्दो मतिवत्। एवं तनुधेनुमञ्जुलाः।

## स्त्रियाम् ॥१।४।९३॥

स्त्रियां वर्तमानस्य क्रुशः परस्य तुनस्तृजादेशः स्यात् निर्निमित्तः। क्रोष्टृ इति जाते वक्ष्यमाण ऋदन्तत्वात् ङीप्रत्ययः। क्रोष्ट्री। क्रोष्ट्र्यौ। क्रोष्ट्र्यः। इति देवीवत्। भ्रूः। भ्रुवौ। भ्रुवः।

## भ्रूश्नोः ॥२।१।५३॥

भ्रू श्नु इत्यनयोरुवर्णस्य संयोगात्परस्य स्वरादौ प्रत्यये परे उव् स्यात्। भ्रूः। भ्रुवौ। भ्रुवः। हे सुभ्रु। इति माद्यकमूरूक्तत्वात् हे करभोरु इत्यादिवत्। भ्रुवै। भ्रुवे। भ्रुवाः २। भ्रुवः २। भ्रूणाम्। भ्रुवाम्। भ्रुवि। भ्रुवाम्। खलपूः पुंवत्। पुनर्भूः। दृन् इति वक्ष्येन परेणोवबाधात्। हे पुनर्भु। पुनर्भ्वम्। पुनर्भ्वौ। पुनर्भ्वः।

## कवर्गैकस्वरवति ॥२।३।७६॥

पूर्वपदस्थाद्रषृवर्णात् परस्य कवर्गवति एकस्वरवति च उत्तरपदे सति उत्तरपदस्थनागमस्य स्यादेश्च नकारस्य णः स्यात्। परोऽपि नकारो नामादेशेन बाध्यते पुनर्भूणाम्। वर्षाभ्वाम्। भेक्यां पुनर्भवायां स्त्री इतिवचनात् हे वर्षाभु। भेक्यां पुनर्भवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति वाचः। भेकजातौ नित्यस्त्रीत्वाभावात् हे

वर्षाभूः । कैयटमते पुनर्भूवर्षाभ्वां तु हे वर्षाभु । वर्षाभ्वौ । वर्षाभ्वः । स्वयम्भूः पुंवत् । वधूजम्ब्वादयो देवीवत् । स्त्रियां नृतोऽस्वस्रादेर्डीरिति वक्ष्यमाणत्वात्स्वस्रादिभ्यो न ङीप्रत्ययः । 'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः' ॥ १ ॥' स्वसा । स्वसृ इत्यादिना स्वसारौ । स्वसारः । माता पितृवत् । मासि मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ।

इति स्वरान्ताः स्त्रीलिङ्गाः ॥

---

## अथ स्वरान्ता नपुंसकलिङ्गाः ।

सुपार्श्वः शाश्वतो भासान् विश्वेषां पक्षपोषणः ।
पृथिव्यामुदयाज्जूपमतिघात्यन्मनः शुचिः ॥ १ ॥

## अतः स्यमोम् ॥१।४।५७॥

अकारान्तस्य नपुंसकस्य स्यमोरम् स्यात् । समानादमोऽतः । कुलम् । हे कुल । अम्आमादेशे सति भवेत् स्यमोर्लुगित्यमो लुक् । तत्सम्बन्धिविज्ञानात् प्रियकुलः पुमान् । अमोऽकारोऽतिजरस कुलमित्याद्यर्थम् ।

## औरीः ॥१।४।५६॥

नपुंसकस्यौरस्य ईः स्यात् । कुले । परमकुले ।

## नपुंसकस्य शिः ॥१।४।५५॥

नपुंसकस्य जस्शसोः शिः स्यात् ।

## स्वराच्छौ ॥१।४।६५॥

जस्शसादेशे शौ परे स्वरान्तान्नपुंसकात्परो नोऽन्तः स्यात् ।

## निदीर्घः ॥१।४।८५॥

शेषे घुटि परे यो नकारस्तस्मिन् परे पूर्वस्य स्वरस्य दीर्घः स्यात् । कुलानि २ । शेषं तृतीयादौ देववत् । एवं वनधनादयः ।

## पञ्चतोऽन्यादेरनेकतरस्य दः ॥१।४।५८॥

नपुंसकानामन्यादीनां सर्वादिगणपठितानां पञ्चानां सम्बन्धिनोः स्यमोः स्थाने द इत्यादेशः स्यादेकतरं विना । अन्यत् । अन्ये । अन्यानि । एवमन्यतरत् । इतरत् । कतरत् । कतमत् । यतरत् । यतमत् । ततरत् । ततमत् । एकतमत् । हे अन्यत् । अनेकतरस्येति किम् ? एकतरम् । तत्सम्बन्धिग्रहणात् प्रियान्यं कुलम् । इह तु स्यात् परमान्यत् । अनन्यत् । अन्यतमशब्दस्यान्यतममित्येव । अतिजरशब्दे सेरम्करणे सन्निपातपरिभाषाभित्यत्वे जरस् । अतिजरम् । अतिजरसम् ।

## जरसो वा ॥१।४।६०॥

जरसन्तस्य नपुंसकस्य स्यमोर्लुग्वा स्यात्। तेन अतिजरः इत्यपि। अतिजरसी। अतिजरे। शौ परत्वाज्जरस्।

## धुटां प्राक् ॥१।४।६६॥

स्वरात्परा या धुड्जातिस्तदन्तस्य नपुंसकस्य धुड्भ्य एव प्राक् शौ परे नोऽन्तः स्यात्। अतिजर न स् इ इति जाते—

## न्समहतोः ॥१।४।८६॥

न्स इत्यन्तस्य महच्छब्दस्य च स्वरस्य लोपे धुटि परे दीर्घः स्यात्। अतिजरांसि। अतिजराणि वा। अतिजरसम्। अतिजरम् वा। अतिजरसी अतिजरे। अतिजरांसि। अतिजराणि। शेषं पुंवत्। हृदयशब्दे दन्तपादेत्यादिना हृद्। हृदयम्। हृदये। हृदयानि। हृदयम्। हृदये। हृदयानि। हृन्दि। हृदयेन। हृदा। हृदयाभ्याम्। हृद्भ्याम् इत्यादि। उदकम्। उदके। उदकानि। उद आदेशे उदानि। उदना। उदभ्याम्। आसनशब्दस्य आसन् इत्यादेशे आसानि। आस्ना। आसभ्याम्। यस्तु आस्यशब्दस्यासन्नादेशं मनुते तस्य वैदिकमप्रयोगानुसरणमेव शरणं स्वारसिकम्। न तुम' शाब्दिक सम्मतम्। मांसशब्दे मांस् इत्यादेशस्तु न बहुसम्मतः। मांसस्य पचियुड्घञोरित्यत्रैव नियमात्।

## क्लीबे ॥२।४।९७॥

स्वरान्तस्य नपुंसकस्य ह्रस्व' स्यात्। श्रिपं कुलम्।

## अनतो लुप् ॥१।४।५९॥

अनकारान्तस्य नपुंसकस्य स्यमोर्लुप् स्यात्। वारि। लुकमकृत्वा लुपकरण स्थानिवद्भावनिषेधार्थम्। तेन पत् तत् इत्यादौ आद्वेर इत्यस्य न स्यात्।

## अनाम् स्वरे नोऽन्त. ॥१।४।६४॥

नाम्यन्तस्य नपुंसकस्यामवर्जितस्यादौ स्वरे परे नोऽन्तः स्यात्। वारिणी। वारीणि। पुनरेतद्वेय। वारिणा। वारिभ्याम्। वारिभिः। वारिणे। वारिणः २। वारिणोः २। आमि ह्रस्वापश्चेति नामि दीर्घत्वे च वारीणाम्। प्रियवारये पुंसे इत्यत्र न नोऽन्तः। तत्सम्पर्षिविज्ञानात्। वारिणि। वारिषु।

## नामिनो लुग्वा ॥१।४।६१॥

नाम्यन्तस्य नपुंसकस्य स्यमोर्लुग्वा स्यात्। ह वारे। पक्षे हे वारि। व्यञ्जनादिविभक्तौ मुनिवत्।

## वान्यत. पुमाँष्टादौ स्वरे ॥१।४।६२॥

यो नाम्यन्तः शब्दोऽन्यतो विशेष्यवशात् नपुंसकः स टादौ स्वरे परे पुंवद्वा स्यात् । यथा पुंसि नागमह्रस्वौ न स्तस्तथात्रापि न स्तः । इह शब्दा त्रिविधाः । केचिद्दध्यादिवज्जातिशब्दाः अतो लिङ्गभाजः । परे गुणक्रियाद्रव्या-दिसम्बन्धात् पटु मृदु प्रमुखा विशेष्यानुरूपलिङ्गभाजः । ग्रामणि । ग्रामणिनी । ग्रामणीनि । ग्रामण्या । ग्रामणिना कुलेन । ग्रामण्ये । ग्रामणिने कुलाय । ग्रा-मण्यः २ । ग्रामणिनः २ । शेषं वारिवत् । प्रियास्तिस्रो यस्य तत् प्रियत्रि कुलम् । स्यमोर्लुपा लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । प्रियास्तिस्रो यस्य कुल स्येति विग्रहे नामिनो लुग्वेतिस्यादिविधानाभावात् प्रियतिसृ । अनीतिनिषेधात् प्रियतिसृणी । प्रियतिस्रा । प्रियतिसृणा । इत्यादि विकल्पात् । प्रियतिसृणां कुलानाम् । नात्र दीर्घः । प्रियास्त्रयः प्रियाणि त्रीणि वा यस्य प्रियत्रि कुलम् । नात्र तिस्रादेशः । अत्रयवत्त्वयर्थाभावात् ।

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥२।४।६३॥

एषां नपुंसकानां नाम्यन्तानां तदन्तस्यान्यस्मिन् टादौ स्वरे परेऽन्तस्यान् इत्यादेशः स्यात् । दधि । दधिनी । दधीनि । दधन् आ इतिस्थिते ।

## अनोऽस्य ॥२।१।१०८॥

अनोऽकारस्य ङीस्याद्यघुट्स्वरेपरे लुक् स्यात् । दध्ना । अत्र विशेषविधाना स्वरोऽपि नाऽऽगमोऽन्नादेशेन बाध्यते । दध्ने । दध्नः २ । दध्नोः २ । दध्नाम् ।

## ई ङौ वा ॥२।१।१०९॥

अनोऽकारस्य ङौ प्रत्यये ङी च परे लुग्वा स्यात् । दधनि । दध्नि । शेषं वारिवत् । सुधि । सुधिनी । सुधीनि । हे सुधे । हे सुधि । सुधिया । सुधिना । प्रध्या । प्रधिना । प्रपु । प्रपुणी । प्रपूणि । हे प्रपु । हे प्रपो । प्रपुणा । प्रपुणे । प्रपुणः २ । प्रपुणोः २ । प्रपूणाम् । प्रपुणि । एवमम्बुप्रमुखाः । सानु । सानुनी सानूनि । अत्र शसादौ स्नुरित्यादेशो स्नूनि । सानूनि इति केचित् । स्नुना । सा नुना । प्रियक्रोष्टु । प्रियक्रोष्टुनी । प्रियक्रोष्टूनि । टादौ प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । प्रियक्रोष्ट्रे । प्रियक्रोष्टवे । प्रियक्रोष्टुने । सुलु । सुलुनी । सुलूनि । सुल्वा । सु लुना । कर्तृ । कर्तृणी । कर्तॄणि । हे कर्तः । हे कर्तृ । कर्त्रा । कर्तृणा । कर्त्रे । कर्तृणे कर्तुः २ । कर्तृणः २ । कर्त्रोः २ । कर्तृणोः २ । कर्तॄणाम् । कर्तरि । कर्तृणि । क्लीबे इति ह्रस्वत्वे एकारैकारयोरित् । ओकारौकारयोरुश्चोत्त्व । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्ररि । प्ररिणी । प्ररीणि । एकदेशविकृतस्यानन्यत्वात्तारायो व्यञ्जने ह्रस्वत्वे प्ररा भ्याम् । प्रराभिः । प्ररीणाम् । प्रराणामिति कश्चित् । सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने ।

इति स्वरान्ता नपुंसकलिङ्गाः ॥

## अथ व्यञ्जनान्ताः पुलिङ्गाः ।

कृशानुबिम्बैर्मेघसवर्णणान्तरा विकासकाशो दृशाविष्टु चन्द्र ।
मेघाभिनन्दीय जपासनेन चन्द्रप्रभ सप्रभव भिषेऽस्तु ॥ १ ॥

चकारान्तः सुवाच्शब्दः ।

## चजः कगम् ॥२।१।८६॥

चकारजकारयोर्धुटि प्रत्यये पदान्ते च कगौ स्याताम्। धुटस्तृतीय इति गत्वे,

## विरामे वा ॥१।३।५१॥

विरामे वर्तमानस्याशिटो धुटः प्रथमो वा स्यात्। सुवाक्। सुवाग्। सुवाचौ। सुवाचः। सुवाग्भ्याम्। सुवाक्सु इतिस्थिते नाम्यन्तस्थाकवर्गात् ... कखयोर्योगे क्षः। इति लोकात्। सुवाक्षु। हे सुवाक्। हे सुवाग्। प्रकर्षेणाञ्चतीति विग्रहे क्विपि प्राञ्च्शब्दे।

## अञ्चोऽनर्चायाम् ॥४।२।४६॥

अञ्चेरपूजार्थे वर्तमानस्योपान्त्यनकारस्य लुक् स्यात् किति ङिति च परे अनर्चायामिति किम्? अञ्चितोऽतिथिः। प्राच् स् इति स्थिते।

## अचः ॥१।४।६९॥

अञ्चतेर्धातोर्धुडन्तस्य तदन्तस्य च घुटि परे धुटः प्राक् नोऽन्तः स्यात् दीर्घङ्याबिति सेर्लुकि पदस्येति चकारलुकि।

## युजञ्चक्रुञ्चो नो ङः ॥२।१।७१॥

युजञ्चक्रुञ्चां नकारस्य पदान्ते ङकारः स्यात्। प्राङ्। म्नां धुड्वर्गे इत्यनेन ञत्वम्। प्राञ्चौ। प्राञ्चः। प्राच् शस् इति स्थिते।

## अच्च् प्राग्दीर्घश्च ॥२।१।१०४॥

अच्चिति लुप्तनकारस्याञ्चतेर्निर्देशः। अच् इति नाम णिवर्ज्य घुटि वर्जिते यकारवकारौ स्वरादौ च प्रत्यये परे च् इति व्यञ्जनमात्रं स्यात्। पूर्वस्यानन्तरस्य स्वरस्य दीर्घः स्यात्। प्राचः। प्राचा। प्राग्भ्याम्। प्राग्भिः। प्राचे। प्राचः। हे प्राङ्। प्रत्यञ्चतीति प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। प्रत्यञ्चम्। प्रत्यञ्चौ। अचोऽत्र चकारमात्रावस्थानात् निमित्ताभावे नैमित्तिकस्य यकारस्याप्यभावे पूर्वकारस्य दीर्घे च प्रतीचः। प्रतीचा। प्रत्यग्भ्याम् इत्यादि। अमुम् अञ्चतीति विग्रहे।

## सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ ॥३।२।१२२॥

सर्वादिविष्वग्देवशब्देभ्यश्च परः क्विबन्तेऽञ्चतावुत्तरपदे परे डद्रिरित्यन्तः

गात् । अवत्रि अच् इति जाते यकारे अवद्र्यच् स् इति स्थिते प्रागवत् सेर्लुकि स्येति चकारलोपे नान्ते च । नकारस्य ङकारत्वे प्राप्ते ।

## वाद्रौ ॥२।१।४६॥

अदसोऽद्र्यन्ते सति दकारस्य मकारो वा स्यात् । द्रावत्र दकारौ । तत्र विकल्पे सति मातुवर्णोऽनु इत्यनेन मकारोत्तरवर्णमात्रस्योवर्णत्वे चातूरूप्यम् । अदमुयङ् । अमुद्र्यङ् । अमुमुयङ् । अदद्र्यङ् । एषु त्रिष्वस्य दकाररेफयोर्मध्ये हृस्य मत्वे रेफस्योत्वम् । अदमुयञ्चौ । अदमुयञ्चः । अदमुयञ्चम् । अदमुयञ्चौ । शसि अदमुईचः । अदमुईचा । अदोमुमीति न सन्धिः । अदमुयग्भ्याम् इत्यादि । एवं च रूपचतुष्टय साध्यम् । विश्वद्र्यङ् । देवद्र्यङ् । उदङ् । उदञ्चौ । उदञ्चः । शसादौ ।

## उदच उदीच् ॥२।१।१०३॥

उदचोनाम्नोऽपि क्यघुड्वर्जे यकारादौ स्वरादौ च प्रत्यये परे उदीच् इत्यादेशः स्यात् । उदीचः । उदीचा । उदग्भ्याम् ।

## सहसमोः सध्रिसमी ॥३।२।१२३॥

क्विबन्तेऽञ्चतौ परे सहस्य सध्रि समः समि इत्यादेशौ स्तः । सहाञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । सध्रीचः । समीचः ।

## तिरसस्तिर्यति ॥३।२।१२४॥

अकारादौ क्विबन्तेऽञ्चतौ परे तिरसस्तिरिः स्यात् । तिर्यञ्चौ । तिर्यञ्चः । अकारादाविति किम्? शसादौ अरे च लुप् लोपे मा भूत् । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । तिर्यक्षु । अर्चार्थे तु अञ्चतेर्नकारस्य लुग् न स्यादिति । प्राञ्च्शब्दे सौ अच इति न नोऽन्तः । प्राङ् । प्राञ्चौ । प्राञ्चः । शसादौ प्राचः । प्राचा । प्राग्भ्याम् । प्राक्षु । प्राक्षु । एवं प्रत्यञ्च्शब्देऽपि । प्रत्यञ्चः । क्रुञ्च्शब्दे युजक्रुञ्चो नोङ इति नोपान्त्यनिर्देशादेव नलोपाभावात् क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुञ्चा । क्रुङ्भ्याम् । तूलवृश्चशब्दे—

## संयोगस्यादौ स्कोर्लुक् ॥२।१।८८॥

धुटि प्रत्यये पदान्ते च संयोगस्यादौ वर्तमानयोः सकारककारयोर्लुक् स्यात् । इति सलोपे ।

## यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः ॥२।१।८७॥

यजादीनां धातूनां चजः, शकारस्य च धुटि प्रत्यये परे पदान्ते च षः स्यात् ।

इति पक्षे तृतीयस्थेन डकार सिरामेवेति मूलवृड् । मूलवृट् । मूलवृश्चौ । मूलवृड्भ्याम् । मूलवृट्सु । छकारान्तः शब्दप्राट् शब्दः । तस्यानुनासिके च छ्वोः शूट् इति शकारे कृते तस्य पक्षे तृतीयस्थे डत्वे शब्दप्राड् । शब्दप्राशौ । शब्दप्राशः । शब्दप्राच्छौ । शब्दप्राच्छः इत्यपि कश्चित् । तन्मते शत्वमनित्यम् । षत्वम् । शब्दप्राट्सु । जकारान्तो देवेज् । तस्य देवेट् । देवेड् । देवेड्भ्याम् । क्विबन्तत्वात् षृत् । उपयजतीति उपयट् । विषमस्यपान्तोऽयम् । तेन न षृत् । तीर्थसृट् । सृट् । सृड् । सृजौ । सृजः । सृड्भ्याम् । सम्राट् । सम्राजौ । सम्राड्भ्याम् । सम्राट्सु । हे सम्राट् । भृट् । भृड् । तस्य चवर्गयोगाच्छकारः । तस्य तृतीयस्तृतीयचतुर्थे इति जकारे भृज्जौ । भृज्जः । भृड्भ्याम् । परिव्राट् । परिव्राड् । परिव्राजौ । परिव्राजः । परिव्राड्भ्याम् ।

## युज्रोऽसमासे ॥१।४।७१॥

युजृपी योगे इत्यस्यासमासे युजन्तस्य सुटि परे युजः प्राक् नोऽन्तः स्यात् । युङ् । युञ्जौ । युञ्जः । असमासे इति किम् ? अश्वयुक् । अश्वयुग् । अश्वयुजौ । अश्वयुजः । ऋदिनिर्देशः किम् ? युजिच् समाधौ इत्यस्य मा भूत् । युक् । युजौ । युजः । युजमापन्नाः समाधिं प्राप्ता इत्यर्थः । विभ्राजशब्दद्वयम् । एको राजृ सहचरितः । तस्य विभ्राट् । विभ्राड् । विभ्राड्भ्याम् इति पक्षे षत्वम् । द्वितीयस्तु राजृ भ्रेजृ भ्राजृ दीप्तौ । इत्यस्य गत्वमेव विभ्राक् । विभ्राग् । विभ्राग्भ्याम् इत्यादि । विभ्राजौ विभ्राज इत्यादि द्वयोस्तुल्यमेव । ऋतौ यजतीति ऋत्विज् । तस्य वक्ष्यमाण ऋत्विजदि शिखादिसूत्रेण गः । ऋत्विक् । ऋत्विग् । ऋत्विग्भ्याम् । विश्वराट् । विश्वराजौ । विश्वराजः । अस्य दीर्घत्वं समासे वक्ष्यते । ऊर्ज्शब्दः । ऊर्क् । ऊर्ग् । ऊर्जौ । ऊर्जः । ऊर्ग्भ्याम् इत्यादि ।

## रात्सः ॥२।१।९०॥

पदान्ते संयोगे रेफात्परस्य सस्यैव लुक् स्यात् । इति पदस्येत्यनेन न कलोपः । तकारान्तो मरुत्शब्दः । मरुत् । मरुद् । मरुतौ । मरुतः । मरुद्भ्याम् । मरुत्सु । महत्शब्दे—

## ऋदुदितः ॥१।४।७०॥

ऋदित उदितश्च धुडन्तस्य तदन्तस्य सम्बन्धिनि सुटि परे धुटः प्राक् स्वरात्परो नोऽन्तः स्यात् । सान्तमहतोरिति दीर्घत्वे महान् । महान्तौ । महान्तः । शेषे पुंसीव । हे महन् । महतः । महता । महद्भ्याम् इत्यादि । धातुवर्जप्रत्ययान्तानां सुटि दीर्घाभावो विशेषः । पचत् । पचन्तौ । पचन्तः । हे पचन् । अकारानुबन्धो भवत्शब्दः ।

## अभ्वादेरत्वसः सौ ॥१।४।९०॥

अत्वन्तस्यासन्तस्य च धातुवर्जितस्य सम्बन्धिनः स्वरस्य शेषे सौ परे दीर्घः

स्यात्। मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्। एवं मतुप्प्रत्ययान्ताः। गोमान्। गोमन्तौ। गोमन्तः। अभ्वादेरिति किम्? पिण्डं ग्रसते इति पिण्डग्रः। अर्थवद्ग्रहणे नानर्थकस्येत्येव सिद्धेऽभ्वादेरिति वचनमनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति न्यायज्ञापनार्थम् तेन सुरणा। सुरणा इत्यादि। अधातोरित्यकृत्वाऽभ्वादेरिति करणं भ्वादीनामेव निषेधकम्। तेन गोमन्तमिच्छतीति क्यनि क्विपि गोमान्। लोप इत्येव। हे मघवन्। मान्तविधौ अथ। ऋदुदित इति भिन्नयोगविधेर्भ्वादेर्धातोर्न नोऽन्तः। सम्राट्। तिसृधातोस्तिव् इत्यादौ ऋदित्वेऽपि धुडन्तत्वाभावाच्च नोऽन्तः इति। शत्रन्तभवच्छब्देन दीर्घः। भवन्। भवन्तौ। भवन्तः। ददत्। दधत्। इत्यादौ नान्ते प्राप्ते ददन्त इति जाते अन्तो नो लुक् इति वक्ष्यमाणसूत्रात्नकारस्य लुक्। ददत् पुरुषः। ददतौ। ददतः। ददद्भ्याम्। देवीङ्क्सेवीकोर्ङित्त्वेनाऽऽत्मनेपदे प्राप्तेऽनित्यत्वाच्छान्दसत्वाद्वा परस्मैपदम्। दीव्यत्। सेव्यत्। दीव्यतौ। सेव्यतौ। इति केचित्। वकारान्तो मव्। विरामे वा। मत्। मद्। मवौ। मवः। मद्भ्याम्। वान्तास्त्वल्पाः। तेषु प्रथमं युष्मदस्मदोस्त्रिषु लिङ्गेषु समानं रूपम्। तयोरलिङ्गत्वात्। मुख्यत्वे गौणत्वे च रूपाणां साधनं यथा।

## त्वमहं सिना प्राक् चाकः ॥२।१।१२॥

युष्मदस्मदोस्तदन्तसम्बन्धिना सिना सह क्रमात्त्वमहमित्यादेशौ स्याताम्। तौ चाकः प्रसङ्गेऽकः प्रागेव स्तः। त्वम्। अहम्। परमत्वम्। अतित्वम्। अतिक्रान्तस्त्वामिति वाक्यात्। परमाहम्। अत्यहम्। अतिक्रान्तो मामिति वाक्यात्। अक्प्रत्यये त्वकम्। अहकम्। द्विवचने—

## मन्तस्य युवावौ द्वयोः ॥२।१।१०॥

द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मकारावसानस्यावयवस्य तदन्तसम्बन्धिनि स्यादौ परे क्रमाद्युवाव इत्यादेशौ स्तः। यदा सस्वरावेतौ तदा अद् इति विश्लेषः। तेनाऽकारेण सह लुगस्यादेत्यपदे इति करणादकारमात्र लोपः। युवद् आवद् इति स्थिते—

## अमौ मः ॥२।१।१६॥

युष्मदस्मद्भ्यां परयोस्तदन्तसम्बन्धिनोरम् औ इत्येतयोर्म् इति व्यञ्जनमात्रमादेशः स्यात्।

## युष्मदस्मदोः ॥२।१।६॥

युष्मदस्मद् इत्येतयोस्तदन्तसम्बन्धिनि व्यञ्जनादौ स्यादौ परे आकारोऽन्तादेशः स्यात्। इति दकारस्यात्वे युवाम्। आवाम्। यदा व्यञ्जनान्तावेतावादेशौ तदा अदित्यस्याकारो वकारे सन्धेयः। मन्तस्येति किम्? मकाराद्यघोर्यथा स्यात्।

नतु सर्वस्य । तेन युवकाभ्याम् । आवकाभ्यामित्यत्राक् श्रुतिः । युवयोराव-योरित्यत्र तु द्वस्य यत्व सिद्धम् ।

## यूय वय जसा ॥२।१।१३॥

युष्मदस्मदोस्तवतस्सम्बन्धिना जसा सह क्रमात् यूय वयमित्यादेशौ स्तः । प्राक् चाक् । यूयम् । वयम् । यूयकम् । वयकम् ।

## त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥२।१।११॥

एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मान्तावयवस्य तदन्तसम्बन्धिनि स्यादौ परे प्रत्ययोत्तरपदयोश्च क्रमात्त्वम इत्यादेशौ स्तः । अत्रापि अवृविक्षेपे त्वम इति च सस्वरादेशो लुगस्येत्यकारलुकि दकारस्य युष्मदस्मदोरित्यात्वे त्वाम् । माम् । व्यञ्जनान्तादेशोऽकारः सन्धेयः । त्वाम् । माम् ।

## शसो नः ॥२।१।१७॥

युष्मदस्मद्भ्यां परस्य तदन्तसम्बन्धिनः शसः स्थाने न् इत्यादेशः स्यात् । युष्मदस्मदोरिति दकारस्याकारः । समानानां तेन दीर्घः । युष्मान् । अस्मान् । तृतीयैकवचन ।

## टाङ्योसि यः ॥२।१।७॥

युष्मदस्मदोः स्यान्यसम्बन्धिषु टा ङि ओस् एषु परेषु यकारोऽन्तादेशः स्यात् । त्वया । मया । युवद् अमे भ्याम् इत्याऽऽत्वे युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । दकारस्याकारात् ।

## तुभ्य मह्य ङया ॥२।१।१४॥

युष्मदस्मदोः स्यान्यसम्बन्धिना ङे प्रत्ययेन सह तुभ्यम् मह्यम् इत्यादेशौ स्तः प्राक्चाक् । तुभ्यम् । मह्यम् । तुभ्यकम् । मह्यकम् । युवाभ्याम् । आवाभ्याम् प्राग्वत् ।

## अभ्यम् भ्यसः ॥२।१।१८॥

युष्मदस्मद्भ्यां परस्य स्यान्यसम्बन्धिनो भ्यसश्चतुर्थीबहुवचनस्य स्थानेऽभ्यमादेशः स्यात् ।

## शेषे लुक ॥२।१।८॥

यत्र प्रत्यये आत्वयकारौ विहितौ ततोऽन्यः शेषस्तस्मिन् स्यादौ परे युष्मदस्मदोरन्त्यस्य लुक् स्यात् । अतम दमाप । युष्मभ्यम् । अस्मभ्यम् । अकारोऽत्र व्यञ्जने परे आत्वबाधनार्थः । 'शसो न' 'भ्यसो भ्यम्' इत्यकृत्वा पुरत एव

आदेशनिर्देशात् अभ्यमित्यादेशः । शेषे लुगिति यस्य लुकि लुगस्यादेश्यादिनाऽ कारलुकि युष्मभ्यम् ।

## ङसेश्चाद् ॥२।१।१९॥

युष्मदस्मद्भ्यां परस्य स्वान्यसम्बन्धिनो ङसेस्तस्यहचरितस्य भ्यस स्थाने-ऽद् इत्यादेशः स्यात् । त्व म इत्यादेशे कृते शेषे लुक् इति यलोपे लुगस्येत्यकार लुकि त्वद् । मद् । युवाभ्याम् । आवाभ्याम् । युष्मद् । अस्मद् ।

## तव मम ङसा ॥२।१।१५॥

युष्मदस्मदोस्तत्सम्बन्धिना ङस्प्रत्ययेन सह क्रमात् तव मम इत्यादेशौ स्तः । मात्र वाक । तव । मम । तवक । ममक । युवयोः । आवयोः ।

## आम आकम् ॥२।१।२०॥

युष्मदस्मद्भ्यां परस्य स्वान्यसम्बन्धिन आमः स्थाने आकमित्यादेशः स्यात् । शेषे लुगिति यलोपः । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु । अतिक्रान्तस्त्वाम् अतित्वम् । अतिक्रान्तो माम् अत्यहम् । युवाम् अतिक्रान्तोऽतित्वम् । आवामतिक्रान्तोऽत्यहम् । अतिक्रान्तो युष्मानतित्वम् । अतिक्रान्तोऽस्मानत्यहम् । प्रियस्त्व, प्रियौ युवाम्, प्रिया यूय वा यस्य प्रियत्वम् । एव प्रियाहम् । एषु परत्वात्त्वमयोर्युवावयोश्च विधिं विहाय त्वमहमादेशौ । एवं यूय वय तुभ्य मह्य तव मम एतेष्वादेशेषु ज्ञेयम् । तेन त्वां मां वा अतिक्रान्तः अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । भ्यामि प्राग्वत् । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् । अतिमत् । भ्यामि प्राग्वत् । अतित्वत् । अतिमत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । ओसि प्राग्वत् । अतित्वासु । अतिमासु । युवामावां वाऽतिक्रान्त इति विग्रहे सिजसङेङस्सु परेषु प्राग्वत् । प्रथमाद्वितीयाद्विवचनेऽमि च अति-युवाम् । अत्यावाम् तिष्ठतः । अतियुवाम् अत्यावाम् पश्य द्वौ वा पश्य । अतियुवान् अत्यावान् । अतियुवया अत्यावया कृतम् । अतियुवाभ्याम् । अत्यावाभ्याम् । एव भ्यामृप्रयेऽपि । अतियुवाभिः । अत्यावाभिः । चतुर्थी भ्यसि अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः अतियुवत् । अत्यावत् । ओसि अतियुवयोः । अत्यावयोः । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान्वाऽतिक्रान्त इति विग्रहे सिजसङेङस्सु परेषु प्राग्वत् । औकारद्वयेऽपि चेति प्रक्रमप्रयेऽप्यतियुष्मामत्यस्मामिति रूप समानमेव ।

अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्यामिति भ्याम्यप्येऽपि तुल्यम् । अतियुष्माभिः । अत्यस्माभिः । चतुर्थी भ्यसि अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोर्द्वयोरपि अतियुष्मत् अत्यस्मत् । ओसि अतियुष्मयोः अत्यस्मयोः । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु । एवं प्रियत्वम् प्रियाहमित्यादिरूपाणि । सङ्ग्रहश्लोका अप्यत्र 'सौ त्वाहमादेशौ जसि यूय वय तथा । तुभ्यं मह्य च भ्यासि स्यातामेकत्वभाविह ॥ १ ॥ एभिस्त्वमयुवावानां बाधः सूत्रैः परस्थितैः । द्व्येकसंख्ये समासार्थे तयोर्द्व्येकतार्थता ॥ २ ॥ अन्यसंख्ये समासार्थे तयोर्द्व्येकत्ववाचिनोः । स्यातां त्वमौ युवावौ चादेशौ समस्यमानयोः ॥ ३ ॥ समासार्थो द्व्येकसंख्यो बह्वर्थे युष्मदस्मदी । त्वमौ युवावौ न स्यातां स्वरूपस्थितिरेनयोः ॥ ४ ॥ ननु त्वं स्त्री अहं स्त्री इत्यत्र युष्मद् सु अस्मद् सु इति स्थिते स्त्रिया सर्वैकादेशकरणात् स्त्रीत्वप्रकल्पापो व्यक्तिः । परं द्विवचने युवावादेशो सस्वरत्वेऽथवा व्यञ्जनान्तत्वेऽपि स्त्रियां बाधा इत्यादिविकल्पं नाप् । इति चेन्न । अलिङ्गे युष्मदस्मदी इति नाप् । अथ युष्मानस्मान्वाऽऽचष्टे इति णिचि क्विपि तल्लुकि च युष्म् अस्म् इति मान्तत्वे रूपाणि यथा त्वम् । अहम् । युवाम् । आवाम् । यूयम् । वयम् । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् । युष्मा । अस्मा । युवाभ्याम् ३ । आवाभ्याम् ३ । युष्माभिः । अस्माभिः । तुभ्यम् । मह्यम् । युष्मभ्यम् । अस्मभ्यम् । युष्मत् २ । अस्मत् २ । तव । मम । युवयोः २ । आवयोः २ । युष्माकम् । अस्माकम् । युष्मि । अस्मि । युष्मासु । अस्मासु । अत्र

## मोर्वा ॥२।१।९॥

युष्मदस्मदोर्मकारान्तयोस्तदन्तस्थानविभक्तौ शेषे स्यादौ परे मकारस्य वा लुक् स्यात् । युष्मभ्यम् । युष्मभ्यम् । अस्मभ्यम् । अस्मभ्यम् । एवं ङसिभ्यसोर्युष्मत् । अस्मत् । युष्मत् । अस्मत् । आमि युष्माकम् । अस्माकम् । युष्माकम् । अस्माकम् । शेषे इत्येव । जसि भिसि सुपि च युष्मदस्मदोरिवात्वम् । अथानयोरादेशविशेषाः ।

## पदाद्युग् विभक्त्यैकवाक्ये वस्नसौ च बहुत्वे ॥ २।१।२१॥

द्वितीयाचतुर्थीषष्ठीयुग्विभक्ति । तया सह पदात्परयोर्युष्मदस्मदोः क्रमात् वस् नस् इत्यादेशौ वा स्यातां बहुत्वे । तदेव्यर्थं युष्मदस्मदौ चैकस्मिन् वाक्ये भवतः । धर्मो रक्षतु वो लोका धर्मो रक्षतु नः सदा । नमो वः श्रीजिनाः शुद्ध शर्म नो दीयतां घनम् ॥ १ ॥ दर्शन वो जिनाधीशाः पाप हरतु नो रयात् । धर्मो रक्षतु युष्मान्स पक्षे वाक्य विकल्पमात् ॥ २ ॥ पदादिति किम्? युष्मान्

रक्षतु नाभेयोऽस्मान् प्रसीदतु नाभिभूः' । वाक्यान्तरे न स्यात् । ओदनं पचत युष्माकं भविष्यति ।

## द्वित्वे वां नौ ॥२।१।२२॥

समविभक्तिद्विवचनैः सह पदात्परयोर्युष्मदस्मदोर्वां नौ वा स्याताम्। पातु वां नौ जिनोऽप तु दद्याद्वां नौ परं पदम् । नमो वां नौ सदा भूयाद्वृद्धं धर्मे जिनोद्विते ॥ १ ॥ पक्षे पातु युवां जिन इत्यादि ।

## ङेङसा ते मे ॥२।१।२३॥

पदात्परयोर्युष्मदस्मदोर्ङे ङस् इत्येताभ्यां सह ते मे इत्यादेशौ वा स्याताम्। धर्मो ददातु ते श्रेयश्चारित्रं मे गुणोज्ज्वलम् । जिनार्चनं धन तेऽस्ति धन मे धर्मसाधनम् ।

## अमा त्वा मा ॥२।१।२४॥

पदात्परयोर्युष्मदस्मदोरमा द्वितीयैकवचनेन सह त्वा मा इत्यादेशौ वा स्याताम् । धर्मस्त्वा रक्षतादेव' पालयेन्मा क्षमापरम् ।

## नित्यमन्वादेशे ॥२।१।३१॥

कथितानुकथनमन्वादेशः । तद्विषये पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस् नस् नादि तन्नित्यं स्यात् । यूयं विनीतास्तन्नो गुरवो मानयन्ति । वयं विनीतास्तद्वो गुरवो मानयन्ति ।

## चाऽह ह वैव योगे ॥२।१।२९॥

च अह ह वा एव इत्येतैर्योगे सम्बन्धे पदात्परयोर्युष्मदस्मदोर्यदुक्तं वसन सादि तन्न स्यात् । जिनस्त्वां मां च रक्षतु । योगग्रहणात् साक्षाद्योगेऽयं निषेधः। पारम्पर्ये तु स्यादेव । पार्श्वो वीरश्च मे स्वामी ।

## दृश्यर्थैश्चिन्तायाम् ॥२।१।३०॥

दृश्यर्थैर्धातुभिश्चिन्तायां वर्तमानैर्योगे वस्नसादिर्न स्यात् । चेतसा त्वां समीक्षते । गुरुस्तव कार्य्यमालोचयति । परम्परासम्बन्धेप्ययं निषेधः। भक्तस्तव रूपं निध्यायति । चिन्तायामिति किम्? जनो व' पश्यति । चक्षुषा पश्यतीत्यर्थः ।

## सपूर्वात्प्रथमान्ताद्वा ॥२।१।३२॥

पूर्वपदसहितात् प्रथमान्तात्परयोर्युष्मदस्मदोरन्वादेशे वसादय आदेशा वा स्युः । यूयं विनीतास्तद्वो गुरवो मानयन्ति । तद्गुरवो युष्मान् मानयन्ति वा ।

## असदिवामन्त्र्यं पूर्वम् ॥ २।१।२५॥

युष्मदस्मद्भ्यां पूर्वं सम्बोधन पदमविद्यमानमिव स्यात् । ततो वस्नसा दयो न स्युः । श्रमणा युष्मान् रक्षतु धर्मः । ग्रामस्यैव ते स्वम्यो इत्यादौ चैत्र पदस्य सम्बोधनस्यासत्त्वेऽपि ग्रामपदापेक्षयाऽन्यादेशो नित्य ते मयादिविधानम्। नतु सपूर्वात्प्रथमान्ताद्वेति विकल्पः । इवकरणं किम्? श्रवणं यथा स्यात् । आ मन्त्र्यमिति किम् ? धर्मो वो रक्षतु ।

## जस्विशेष्यं वाऽऽमन्त्र्ये ॥२।१।२६॥

युष्मदस्मद्भ्यां पूर्वंसम्बोधनान्तं पदं विशेषणभूते सम्बोधनपदे परेऽसदिव वा स्यात् । पूर्वेण नित्ये प्राप्ते विकल्पः । जिना' शरण्या युष्मान् शरणं प्रपद्ये । पक्षे जिना' शरण्या वः' शरणं प्रपद्ये । इहान्यादेशोऽपि विकल्पः । जसिति किम्? साधो सुविहित वोऽयो शरणं प्रपद्ये । विशेष्यमिति किम्? शरण्याः साधवो युष्मान् शरणं प्रपद्ये ।

## नान्यत् ॥२।१।२७॥

युष्मदस्मद्भ्यां पूर्वं जसन्तादन्यत् सम्बोधनपदं विशेष्यं सम्बोधने तद्वि शेषणभूते परेऽसदिव न स्यात् । जिन भगवंस्त्वा शरणं प्रपद्ये । जिनौ भगवन्तौ मां शरणं प्रपद्ये ।

## पादाद्योः ॥२।१।२८॥

नियतपरिमाणमात्राक्षरपिण्डः पादः । तदादिस्थयोर्युष्मदस्मदोर्वस्नसादि न स्यात् । वीरो विश्वेश्वरो नाथो युष्माकं कुलदेवता । स एव नाथो भग वानस्माकं पापनाशनः ॥१॥ त्यद् तद् यद् एतद् प्रभृतीनामाद्वेर इत्यकारे कृते रस्याने कृते लुगस्यादेत्यपदे इत्यकारलुकि—

## तः सौ सः ॥२।१।४२॥

त्यदादीनां सम्बन्धिनि सौ परे तकारस्य सः' स्यात् । स्यः । त्यौ । त्ये । त्यम् इत्यादि सर्ववत् । सम्बन्धिविज्ञानादेह प्रियत्यद् पुमान् । त्यच्छब्दस्तच्छब्दार्थ एव । सः तौ ते । यः यौ ये । एषः' एतौ एते ।

## त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ॥२।१।३३॥

त्यदादीनां सम्बन्धिन एतदिदमः द्वितीयायां टायामोसि च परतोऽन्वा देशो वाच्ये एनदादेशः स्यात् । किञ्चित्कर्तुमुक्तस्य पुनः कथनमन्वादेशः' । यदि इममनध्यापनमथो एनमनुजानीत । एतक साधुमावश्यकमध्यापयाथो एनमेव सूत्राणि । अथ मानोऽन्वादेशः । सुशीलावेतावथो एनौ गुरवो मानयन्ति ।

सुस्थिता एते तवैनान् येषा अपि भजन्ति । टायाम् एतेन रात्रिरधीताऽथो एने-नाहरप्यधीतम् । ओसि एतयोर्शील निर्मलमथो एनयोर्महती कीर्तिः । अवृत्त्यन्त इति किम्? अथो परमेते पश्य । अन्त इति किम्? एतम् एतां वा भितक एन-च्छितकः । अत्रार्थोत्प्रकरणाद्वाऽपेक्ष्ये निर्ज्ञाते सति समासोऽन्वादेशश्च । एतम् । एतौ । एतान् । शेषं सर्ववत् । मान्तो बुध् ।

## गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये ॥२।१।७७॥

यस्य गडदबानां कोऽप्यादौ स्यात् चतुर्थश्चान्ते स्यात्तस्यैकस्वरस्य भासब-धस्यादेश्चतुर्थ भासब स्यात् । पदान्ते सकारादौ ध्वशब्दादौ च प्रत्यये परे । भुत् । भुद् । बुधौ । बुधः । भुद्भ्याम् । भुत्सु । नान्तो राजन् । तस्य निदीर्घ इति दीर्घे ।

## नाम्नो नोऽनह्नः ॥२।१।९१॥

पदान्ते वर्तमानस्य नाम्नो नकारस्य लुक् स्यात् । स चेदहन्शब्दसम्बन्धी न स्यात् । स चासन् स्यादिविधौ । पर इति निवृत्तम् । दीर्घङ्याबिति सेर्लुकि । पश्चान्नकारस्य लुक् । राजा । अनह्न इति किम्? अहरिति । अत्र रोलुप्यरीति सूत्रेणाहन्शब्दस्य नस्य रेफः । अमतो लुपितिसूत्रेण लुब्विधानात् । अहोरूप मित्यत्र अह्न इतिसूत्रेण नकारस्य रुत्वम् । रेफत्वरुत्वयोरसत्त्वान्नकारलोपः प्राप्तः सोऽनह्न इति कथनात्प्रतिषिद्धः । पदान्त इत्येव । राजानौ । राजानः । राजा नम् । घासादौ स्वरेऽनोऽस्येत्यकारलुकि तवर्गस्येत्यादिना नकारस्य ञत्वे जञोर्ज्ञः । राज्ञः । राज्ञा । राजभिः । राज्ञे । राज्ञः २ । राज्ञोः २ । राज्ञाम् । ईङौ वेति राज्ञि । राजनि । राजसु । स्यादिविधौ नलोपस्यासत्त्वात् भ्याम्याकारः, भिस्ऐस्, भ्यसि सुपि चैकार एते विधयो न स्युः । नकारस्य सत्त्वेनाकारान्ताभावात् ।

## नामन्त्र्ये ॥२।१।९२॥

आमन्त्र्यार्थे नाम्नो नकारस्य लुग् न स्यात् । हे राजन् । एतस्मादेव ज्ञापकात् सेर्लुकि स्थानिवद्भावेनाऽधातुविभक्तीत्यादिना नामसंज्ञाया न निषेधः । पञ्चा । पञ्चानौ ।

## न वमन्तसंयोगात् ॥२।१।१११॥

वकारान्तान्मकारान्ताच्च संयोगात्परस्यानोऽकारस्य लुग् न स्यात् । पर्वणः । पर्वणा । आत्मानौ २ । आत्मानः । हे आत्मन् । प्रतिदिवा । प्रतिदिवानौ ।

## भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने ॥२।१।६३॥

भ्वादेर्धातोरवयवभूतयो रेफवकारयोस्तस्यैव भ्वादेर्नामिनो दीर्घः स्याद्व्यञ्जने परे । असद्विधौ स्वरादेशस्य स्थानिवद्भावनिषेधात् प्रतिदीव्नः । प्रतिदीव्ना ।

## इन्हन्पूषार्यम्णः शिस्योः ॥१।४।८७॥

इन्नन्तस्य हनादीनां च सम्बन्धिनः स्वरस्य शौ शेषे सौ च परे दीर्घः स्यात् । निदीर्घ इत्येव दीर्घे सिद्धे नियमार्थोऽयं योगः । दण्डी । दण्डिनौ । दण्डिनः । दण्डिना । दण्डिभ्याम् । हे दण्डिन् । विन्मन्नन्ता अप्येवम् । तपस्वी । तपस्विनौ । वाग्मी । वाग्मिनौ । वृत्रहा । कवर्गैकस्वरवतीति णत्वे वृत्रहणौ । वृत्रहणः । शसादौ स्वरेऽकारलोपे—

## हनो ह्नो घ्नः ॥२।१।११२॥

हन्तेर्ह्न इत्येवंरूपस्य घ्न इत्यादेशः स्यात् । वृत्रघ्नः । ङौ तु वृत्रघ्नि । वृत्रहणि । पूषा । पूषणौ । अर्यमा । अर्यमणौ । अर्यम्णि । अर्यमणि । हे पूषन् । हे अर्यमन् ।

## श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः ॥२।१।१०६॥

एषां सस्वरो वकारो ङी स्याद्यघुट्स्वरे परे उः स्यात् । श्वा । श्वानौ । श्वानः । हे श्वन् । शुनः । शुना । श्वभ्याम् । युवा । युवानौ । युवानः । हे युवन् । यूनः । मघवा । मघवानौ । मघवानः । हे मघवन् । मघोनः । मघोना । मघवभ्याम् । नकारान्तनिर्देशात् मघा देवविशेषाः सन्त्यस्य मघवान् । मघवन्तौ । मघवन्तः । शसि मघवतः । मघवता । मघवद्भ्याम् इत्यादि । अत्र वकारस्य ओकारः । अर्वन्शब्दे अर्वा । अर्वाणौ । अर्वाणः । केचित्तु सिम्मुक्त्वा नकारस्थाने अर्वणस्त्रसावनञः इति तु आदेशं विधाय ऋदुदित इति नागमे अर्वन्तौ । अर्वन्तः । अर्वन्त्यामित्यादिरूपाण्याहुः ।

## पथिन्मथिन्नृभुक्षः सौ ॥१।४।७६॥

एषां नकारान्तानामन्तस्य सौ परे आकारः स्यात् । इति नकारस्याकारत्वे,

## एः ॥१।४।७७॥

पथ्यादीनां नान्तानामिकारस्य घुटि परे आकारः स्यात् । पथा इति जाते,

## थो न्थ् ॥१।४।७८॥

पथिन्मथिनोर्नाम्नोस्थकारस्य घुटि परे न्थ् इत्यादेशः स्यात् । नात्र दीर्घ इन्हन्पूषादिना सेत्स्यति । पूर्वविधौ स्थानिवद्भावनिषेधात् । पन्थाः । हे पन्थाः ।

पन्थानौ । पन्थानः । सुप्रत्ययेऽपि नकारान्तनिर्देशात् पन्थानमिच्छतीति पथनि क्विपि पथीः । पथ्यौ । पथ्यः ।

## इन् ङीस्वरे लुक् ॥१।४।७९॥

पथ्यादीनां नाम्नां ङी प्रत्ययेऽघुट् स्वरादौ च स्यादौ परे इनः पथो लुक् स्यात् । पथः । पथा । अभेदनिर्देशः सर्वादेशार्थः । मन्थाः । मन्थानौ । मन्थानः । मथः । ऋभुक्षाः । ऋभुक्षाणौ । ऋभुक्षाणः । ऋभुक्षः । पञ्चन् । सप्तन् । नवन् । दशन् एते संख्याशब्दाः । तेषु षड्वर्जनान्तत्वात् डतिष्ण इति जस्शसोर्लुपि पञ्च २ । पञ्चभिः । पञ्चभ्यः २ ।

## संख्यानां र्णाम् ॥१।४।३३॥

रेफषकारनकारान्तानां संख्याशब्दानामामः स्थाने नाम् स्यात् । दीर्घो नामीति दीर्घे नाम्नो नोऽनह्नः इति न लुकि पञ्चानाम् । पञ्चसु । प्रियपञ्चादयो राजवत् । एवं सप्तादयः ।

## वाष्टन आ स्यादौ ॥१।४।५२॥

अष्टन् शब्दस्य तत्सम्बन्धिनि स्यादौ परे वाऽऽकारान्त आदेशः स्यात् ।

## अष्ट और्जस्शसोः ॥१।४।५३।

अष्ट इति कृताकारस्याष्टन्शब्दस्य निर्देशः । अष्टशब्दस्य जस्शसोः स्थाने औकारादेशः स्यात् । अष्टौ २ । अष्ट २ । परमाष्टौ । अनष्टौ । अष्टभिः । अष्टाभिः । अष्टभ्यः २ । अष्टाभ्यः २ । अष्टानाम् । अष्टासु । अष्टसु । प्रियाष्टाः । प्रियाष्टा । प्रियाष्टौ । प्रियाष्टानौ । प्रियाष्टाः । प्रियाष्टानः । प्रियाष्टाम् । प्रियाष्टानम् । प्रियाष्टः । प्रियाष्णः । प्रियाष्टा । प्रियाष्णा । प्रियाष्टाभ्याम् । प्रियाष्टभ्याम् । प्रियाष्टाभिः । प्रियाष्टभिः । इत्यादि । पान्तः अप्शब्दः ।

## अपः ॥१।४।८८॥

अपः स्वरस्य शेषे घुटि दीर्घः स्यात् । स्वाप् । स्वापौ । स्वापः । हे स्वप् । स्वपः । अपोद्भे इति वक्ष्यमाणेनाऽऽदेशो स्वद्भ्याम् । भान्तस्तुण्डिभ्शब्दः । तत्र गडदबादेरिति बस्य भत्वे तुण्डिप् । तुण्डिभौ । तुण्डिभः । तुण्डिभम् । गर्दभमाचष्टे णौ क्विपि गर्धप् । गर्धप् । गर्धब्भ्याम् । मान्त इदम् ।

## अयमियं पुंस्त्रियोः सौ ॥२।१।३८॥

त्यदादिसम्बन्धिनि सौ परे पुंसि स्त्रियां चेदमः स्थाने क्रमात् अयम् इयम् इत्यादेशौ भवतः । अयम् पुमान् । परमायम् । अमयम् । त्यदादिसम्बन्धविज्ञानात् अतीदम् पुमानित्यत्र न स्यात् । साकोऽप्ययमादेशः ।

## इदमः ॥२।१।३४॥

त्यदां सम्बन्धिन इदमो द्वितीयाटौस्स्वन्वादेशे एनद् भवति, अनुबन्धे। उद्दिष्टमिदमध्ययनमथो एनदनुजानीत। त्रिवचने आद्वेर इति मस्यात्,

## दो मः स्यादौ ॥२।१।३९॥

त्यदां सम्बन्धिनि स्यादौ परे इदमो दकारस्य मः स्यात्। इमौ परमेमौ। परमेमे। इमम्। इमौ। इमान्। इमकौ। इमके। इमकम्। इमकौ। इमकान्। अतीदमौ। प्रियेदमौ।

## टौस्यनः ॥२।१।३७॥

त्यदां सम्बन्धिनि टायामोसि च परेऽक्‌वर्जितस्येदमः स्थाने अन इत्यादेशः स्यात्। अनेन। त्यदां सम्बन्धविज्ञानात् अतीदमा। अनक इत्येव। इमकेन।

## अव्यञ्जने ॥२।१।३५॥

त्यदादिसम्बन्धीदम् शब्दो व्यञ्जनादौ स्यादौ परेऽन्वादेशेऽद् भवति, अनुबन्धे। तकार उच्चारणार्थः। इमकाभ्यां शीलकाभ्यां रात्रिरधीता अथो आभ्या-महरप्यधीतम्। सो तु परत्वादयमादेशः। उत्तरत्रामगितिवचनादिह साक एव विधिः।

## अनक् ॥२।१।३६॥

त्यदां व्यञ्जनादौ स्यादौ परेऽक्‌वर्जित इदमकारः स्यात्। अनेदमिर्देशः सर्वादेशार्थः। नायमनवेकस्मिन् ॥ एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात्। आभ्याम्। एभिः। अकि तु

## इदमदसोऽक्येव ॥१।४।३॥

एतयोरक्येव अकारात्परस्य भिस ऐस् स्यात्। इमकैः। अस्मै। आस्याम्। एभ्यः। अस्मात्। आभ्याम्। एभ्यः। अस्य। अनयोः। एषाम्। अस्मिन्। अनयोः। एषु। त्यदादेः। सम्बोधनं नास्तीत्युत्सर्गः। न च अयं भिस् इत्यनेन विधाय एभिः। पश्चात्परमथाप्याकारेण सन्धिकार्यं विधेयम्। न पुनः परम इत्यकारस्य च इतीदमादेशाकारेण सन्धिर्विधेय इति। पूर्वोत्तरयोः पूर्वं कार्ये कृते पश्चात्सन्धिकार्यमिति नियमात्। परमैभिः।

## किमः कस्तसादौ च ॥२।१।४०॥

त्यदां सम्बन्धिनि स्यादौ तसादौ च प्रत्यये परे किम् शब्दस्य स्थाने क इत्यकारान्तादेशः स्यात्। कः। कौ। के। कम्। कौ। सर्वशब्दवत्। रेफान्तश्च तुरशब्दो मद्धपर्यन्तः।

## वाः शेषे ॥१।४।८२॥

शेषे घुटि परेऽनडुच्चतुरोरुकारस्य वाः स्यात् । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ । चतुर्णाम् । चतुर्षु । अघारोः सुपि र इति वक्ष्यमाणसूत्रेण रस्य रत्वं, न विसर्गः । प्रियचत्वाः । प्रियचत्वारौ ।

## उतोऽनडुच्चतुरो वः ॥१।४।८१॥

सम्बोधने सौ । हे प्रियचत्वः ।

## मोनो म्वोश्च ॥२।१।६७॥

मकारान्तस्य म्वादेरन्त्यस्य पदान्ते मकारवकारयोश्च परयोर्नकारादेशो भवति स चासन् परे । प्रशाम्यतीति प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्यामित्यादि । एवं प्रताम् । प्रतान् । परिक्षान् । प्रशान्भ्यामित्यत्र नत्वस्यासिद्धत्वान्नलोपाभावः । म्वोः । जगन्मि । जंगन्वः । म्वोश्चेति किम्? प्रशामौ । म इति किम्? छित् । वकारान्तः प्रियदिवशब्दः ।

## दिव औः सौ ॥२।१।११७॥

दिवोऽन्तस्य सौ परे औः स्यात् । प्रियद्यौः । प्रियदिवौ । प्रियदिवः । प्रियदिवम् । हे प्रियद्यौः ।

## उः पदान्तेऽनूत् ॥२।१।११८॥

पदान्ते दिवोन्तस्य उः स्यात्, स चानूत् स उकारो दीर्घो न स्यात् । प्रियद्युभ्याम् । प्रियद्युभिः । प्रियद्युषु । अचौर्योर्भवतीति द्युभवतीत्यत्र दीर्घश्चिवयक्ष्यादिना न दीर्घः । शान्तो विश्शब्दः । तस्य यजसृजेत्यादिना पक्षे विट् । विड् । विशौ । विशः । विड्भ्याम् । विट्सु । विड्त्सु ।

## ऋत्विज्दिशृदृशस्पृशस्रजदधृगुष्णिहो गः ॥२।१।६९॥

एषां पदान्ते वर्तमानानां गोऽन्तादेशः स्यात् । तादृक् । तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । तादृक्षु । एवं सदृश्, सुदिश्, घृतस्पृश् प्रभृतयः ।

## नशो वा ॥२।१।७०॥

नशः पदान्ते गोऽन्तादेशो वा भवति । जीवस्य नशम जीवनक् । जीवनग् । जीवनट् । जीवनड् । जीवनग्भ्याम् । जीवनड्भ्याम् । पदान्त इत्येव । जीवनशौ ।

## सजुषः ॥२।१।७३॥

सजुषो रुः स्यात्पदान्ते ।

## पदान्ते ॥२।१।६४॥

पदान्ते वर्तमानयोः भ्वादिसम्बन्धिनोरेफवकारयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घो भवति। सजूः। सजुषौ। सजुषः। सजूर्भ्याम्। सजूःषु। सजूष्षु। हे सजूः। पिपठिषतीति क्विपि, अल्लोपे पिपठिष् स् इति स्थिते,

## णषमसत्परे स्यादिविधौ च ॥२।१।६०॥

इहाष्टाध्यायीसूत्रे इतः सूत्रादारभ्य यत्परं कार्यं तत्र णत्वं षत्वं चासत् असिद्धं द्रष्टव्यम्। णत्वषत्वयोरपि मध्ये षत्वे विधेये णत्वमसिद्धं ज्ञेयम्। तथा पूर्वस्मिन्न स्यादिविधौ स्याद्यधिकारविधौ णत्व षत्व चासत्। णषशास्त्रं चाऽसत् स्यात्। अत्र पिपठिष्शब्दे षत्वमसत्किन्तु सकार एव। तेन सोरुरिति रुत्वम्। अत्र णत्वस्यासत्त्वात् अनोऽस्येत्यकारलोपः स्यादिविधौ च। अर्यम्णः। अर्वाणौ। सर्पींषि। अत्र णत्वषत्वयोरसत्त्वान्नुपान्त्यदीर्घत्वं सिद्धम्। पिपठीः। पिपठिषौ। पिपठिषः। पिपठीर्भ्याम्। नाम्यन्तस्थेतिसूत्रे शिड्नान्तरेऽपीतिकथनात् पिपठीः सु इतिस्थिते सु इत्यस्य षत्व पिपठीःषु। शषसे शषसं वा। पिपठीष्षु। धृष्णोतीति दधृक्शब्दे गत्वे दधृक्। दधृग्। दधृषौ। दधृषः। दधृग्भ्याम्। रत्नमुष्शब्दे धुटस्तृतीय इति डत्वे रत्नमुड् रत्नमुट्। रत्नमुषौ। रत्नमुषः। रत्नमुड्भ्याम्। षष्शब्दो बहुवचनान्तः। षट्। षड्। षड्भिः। षड्भ्यः २। संख्यानां र्ष्णामिति नामादेशोऽनाम्नगरीनवतेरितिपर्युदासात्सवर्णात्वर्गोत्वम्। षत्वपत्वाभ्यां णत्वम्। षण्णाम्। षट्सु षट्त्सु। परमषट्। परमषण्णाम्। गौणत्वे तु प्रियषषः २। प्रियषषाम्। चिकीर्षशब्दे रास्स। चिकीः। चिकीर्षौ। अरोः सुपि र इति न षः।

## नरात्स्वरे ॥१।३।३७॥

रेफात्परस्य शिटो द्वित्वं न स्यात्स्वरे परे। चिकीर्षु। दोष्शब्देऽपि षत्वस्यासत्त्वात्सोरुरिति रुत्वम्। विसर्गः। दोः। दोषौ। दोषः। दन्तपदेत्यादिना दोषन्नादेशो वा। दोष्णः। दोषः। दोष्णा। दोषा। दोःषु। दोष्षु। दोषसु। पिपक्षतीति क्विपि अल्लोपे पिपक्ष् स् इति स्थिते दीर्घङ्याबिति सेर्लुकि षत्वस्यासत्त्वात् पदस्येति संयोगान्तस्य सकारस्य लुकि यजसृजेति षत्वे धुटस्तृतीय इति तृतीयत्वे षस्य डत्वे विरामे वा पिपट्। पिपड्। पिपक्षौ। संयोगस्यादौ स्कोरिति कलोपे तक्षशब्दे तट्। तड्। तक्षौ। तक्षः। गोरट्। गोरड्। गोरक्षौ। गोरक्षः। संयोगान्तलोपे तु तक्। तग्। गोरक्। गोरग्। पिपक्षशब्दे कत्वास्यत्वात्संयोगान्तस्य लोपः। पिपक्। पिपग्। एवं दधृषधातोर्विपक्। विपग्। दह् धातोर्दिधक्। पिस गतौ। सुष्ठु पसतीति सुपीः। सुपिसौ सुपिसः। सुपीर्भ्याम्। सुपीःषु। सुपीष्षु। एवं सुतूः। तुस खण्डने। सुतुसौ। सुतुसः। विद्वस्

शब्दे भवुदित इति नागमे न्समहतोरिति दीर्घत्वे पदस्येति संयोगान्तलोपे विद्वान्। विद्वांसौ। विद्वांसः। हे विद्वन्।

## क्वसउष्मतौ च ॥२।१।१०५॥

णिक्यघुट्स्वर्जिते यस्वरादौ मतौ च प्रत्यये परे क्वस उष् स्यात्। विदुषः। विदुषा।

## स्रंसूध्वंसूक्वस्सनडुहो दः ॥२।१।६८॥

स्रंसध्वसोः क्वसुप्रत्ययान्तस्य सकारान्तस्यामडुहशब्दस्य च योऽन्तस्तस्य पदान्ते दकारः स्यात्। विद्वद्भ्याम्। विद्वत्सु। सेदिवान्। सेदिवांसौ। सेदिवांसः। निमित्ताभावे नैमित्तिकस्याप्यभाव इति इट् निवृत्तिः। सेदुषः। सेदुषा। सेदिवद्भ्याम्। न्समहतोरित्यत्र महच्छन्दसाहचर्याच्छुद्धधातोः क्विबन्तस्य न दीर्घः। सुहिन्। सुहिंसौ। सुहिंसः। सुहिन्भ्याम्। सुहिन्सु। ध्वत्। ध्वद्। ध्वसौ। ध्वसः। ध्वद्भ्याम्। एवं स्रत्।

## पुंसोः पुमन्स् ॥१।४।७३॥

पुमस् इत्येतस्योदितस्यदतस्सम्यधिमि घुटि परे पुमन्स् इत्यादेशः स्यात्। पुमान्। पुमांसौ। पुमांसः। हे पुमन्। पुंसः। पदस्येति सलुकि पुम्भ्याम्। पुम्भिः। पुंसि। पुंसु। नात्र णत्वम्। भकारस्यानुस्वारात्। उकारानुबन्धः श्रेयस् शब्दः। ऋदुदित इति नागमे न्समहतोरितिदीर्घे च श्रेयान्। शिड्ढेऽनुस्वारः। श्रेयांसौ। श्रेयांसः। हे श्रेयन्। श्रेयोभ्याम्। श्रेयःसु। ऋदुशनस्पुरुदंसोऽनेहसश्च सेर्डाः॥ उशना। उशनसौ। उशनसः।

## वोशनसोनश्चामन्त्र्ये सौ ॥१।४।८०॥

आमन्त्र्येऽर्थे वर्तमानस्योशनसः सौ परे नकारः पक्षे लुक् च वा स्यात्। हे उशनन्। हे उशन। हे उशनः। उशनोभ्याम्। उशनःसु। एवम् अनेहा। अनेहसौ। अनेहसः। हे अनेहः। पुरुदंसा। पुरुदंससौ। पुरुदंससः। पुरुदंसोभ्याम्। वेधाः। वेधसौ। वेधसः। हे वेधः। अभ्वादेरत्वसः सौ इति दीर्घः। सुष्ठु वस्ते सुवः। सुवसौ। सुवसः। पिण्डं ग्रसते पिण्डग्रः। पिण्डग्रसौ। पिण्डग्रसः।

## अदसो दः सेस्तु डौः ॥२।१।४३॥

त्यदादिसम्बन्धिनि सौ परेऽदसो दकारस्य सकारः स्यात् सेस्तु डौः स्यात्। असौ। अकि च असकौ। हे असौ। हे असकौ विद्वन्। त्यदामिति सम्बन्ध विज्ञानात् अत्यदाः इत्यत्र न डौः। स्त्रियामपि असौ। असकौ स्त्री। हे असौ। हे असकौ स्त्रि। अत्र त्यदादीनां सम्बोधनाभाव इति प्रायिकम्। तेन हे एक त्वम्। हे द्वौ युवाम्। हे अनेके यूयम् पठतेत्यादौ न कोऽप्यनन्वयः।

## असुको वाऽकि ॥२।१।४४॥

अदसः सौ परेऽदसोऽकि सति असुक इत्यादेशो वा निपात्यते । असुकः । हे असुक । पक्षे असकम् । द्विवचनादौ आद्वेर इति अत्वे लुकि औकारे च कृते अदौ इति जाते ।

## मोऽवर्णस्य ॥२।१।४५॥

अवर्णान्तस्य अदादेरदसो दकारस्य मकारः स्यात् ।

## मादुवर्णोऽनु ॥२।१।४७॥

अदसो मकारात्परस्य वर्णमात्रस्योवर्णं स्यात्, अनु कार्य्यान्तरस्य प-श्चात् । यथासंख्यं हि एकमात्रिकस्यैकमात्रिकः । द्विमात्रस्य द्विमात्रः । प्लुतस्य प्लुतः । अमू । सर्वादित्वादस इः ।

## बहुष्वेरीः ॥२।१।४९॥

बहुष्वर्थेषु वर्तमानस्यादसो मकारात्परस्यैकारस्येकारः स्यात् । अमी । अमुम् । अमू । अमून् । अम टा इति स्थिते,

## प्रागिनात् ॥२।१।४८॥

अदसो मात्परस्य वर्णमात्रस्येनादेशात् प्रागुवर्णः स्यात् । अमुना । अमूभ्याम् । अमीभिः । अकि तु अमुकैः । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमीषु । हान्ताः । अनडुह् शब्दे वाः सौ परे इति अनड् वाह् इति जाते,

## अनडुहः सौ ॥१।४।७२॥

अनडुहो धुडन्तस्य तदन्तसम्बन्धिनि सौ परे धुटः प्राक् नोऽन्तः स्यात् । पदस्येति हकारलोपे लोपस्याऽसत्त्वान्नकारलोपो न । अनड्वान् । अनड्वाहौ । अन-ड्वाहः । हे अनड्वन् । अनड्वाहम् । स्रसध्वंस इत्यादिना दकारत्वे अनडुद्भ्याम् । अनडुत्सु ।

## होधुट्पदान्ते ॥२।१।८२॥

हकारस्य धुटि प्रत्यये परे पदान्ते च ढकारः स्यात् । लिट् । लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्सु । लिट्त्सु । हे लिट् । हे लिड् । एवं वर्णानि गृह्णातीति वर्णगुह् प्रभृत्याः ।

## भ्वादेर्दादेर्घः ॥२।१।८३॥

भ्वादेर्धातोर्यो दादिरवयवस्तस्य यो हकारस्तस्य धुटि प्रत्यये परे पदान्ते च घः स्यात् । गडदबादेरिति धकारे गोधुक् । गोधुग् । गोदुहौ । गोदुहः । गोधु

ग्भ्याम् । हस्य घत्वे तस्याघोषे प्रथम इति कत्वे सु इत्यस्य स' षत्वे कषसंयोगे क्ष गोधुक्षु ।

## मुहद्रुहष्णुहष्णिहो वा ॥२।१।८४॥

एषां हकारस्य धुटि प्रत्यये पदान्ते च घकारादेशो वा स्यात्। पक्षे ढकारः। मुट्। मुड्। मुक्। मुग्। मुहौ। मुहः। मुग्भ्याम्। मुड्भ्याम्। मुक्षु। मुट्सु। मुट्त्सु। एवं ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड् इत्यादि। उष्णिह्शब्दे ऋत्विगित्यादिना निष्पन्ने घत्वे उष्णिक्। उष्णिग्। उष्णिग्भ्याम्। उष्णिक्षु। हे उष्णिक्-ग्। तुरां साहयतीति तुराषाट्। साहे' साति स' षो वाच्यः। तुरासाहौ। तुरासाहः। तुराषाड्भ्याम्। वाहो वा ऊड् वाच्य' शसादौ स्वरे। विश्वौहः। विश्वौहा। विश्ववाड्भ्यामित्यादि ॥

इति व्यञ्जनान्ताः पुंलिङ्गाः ॥

---

## अथ व्यञ्जनान्ताः स्त्रीलिङ्गाः ।

निधिः कलानामवधिर्बलानां पयोनिधिः श्रीसुविधिर्गुणानाम् ।
सुग्रीवयशोभयनाशजन्मा रामावतारः स शिवं तनोतु ॥ १ ॥

चकारान्ता वाच् क्रुञ्च् त्वच् प्रभृतयः प्राग्वत्। त्यदादीनामाद्रेर इत्यत्वे आत्। तः सौ सः। स्या। त्ये। त्याः। सर्वाशब्दवत्। सा। ते। ताः। या। ये। याः। एषा। एते। एताः। एतया। एतयोः। अन्वादेशे एनाम्। एने। एनाः। एनया। एनयोः २। धान्तः समिध्। समित्-द्। समिधौ। समिधः। समिद्भ्याम्। पान्तोऽप्शब्दो बहुवचनान्तः। अप इति दीर्घत्वे आपः। शसि अपः पश्य।

## अपोऽद्भे ॥२।१।४॥

अप्शब्दस्य तदन्तस्य चान्यस्य भादौ स्यादौ परेऽदित्यादेशः स्यात्। अद्भिः। अद्भ्यः २। अपाम्। अप्सु। नदीविशेषणे स्वाप् स्वापौ इत्यादि पुंवत्। ककुप्-ब्। ककुप्सु। इदम्शब्दे। इयम्। त्रिवचने आद्रेर इत्यकारे, आत्। दो मः स्यादौ। इमे। इमाः। इमाम्। इमे। इमाः। अनया। आभ्याम्। आभिः। अस्यै। आभ्याम्। आभ्यः। अस्याः। आभ्याम्। आभ्यः। अस्याः। अनयोः। आसाम्। अस्याम्। अनयोः। आसु। रेफान्तश्चतुर्शब्दः। तस्य चतस्र इत्यादेशे चतस्रः २। चतसृभिः। चतसृभ्यः २। चतसृणाम्। चतसृषु। हे चतस्रः। गिर्शब्दस्य पदान्ते इति दीर्घत्वे गीः। गिरौ। गिरः। हे गीः। गिरा। गीर्भ्याम्। वरोः सुपि र। गीर्षु। एवं धुर्पुरादयः। दिव्शब्दः पुंवत्। दिश्शब्दे ऋत्विगित्यादिना गत्वे दिक्-ग्। दिशौ। दिशः। हे दिक्-ग्। दिग्भ्याम्। दिक्षु। आशिष्शब्दे षत्वस्यासिद्धत्वात् सोऽरिति रत्वे, पदान्ते इति दीर्घे आशीः। आशिषौ। आशिषः। आशीर्भ्याम्। आशीःषु। हे आशीः। अदस्शब्दे

सेर्डौः । दकारस्य सकारः । असौ । द्विवचनादौ अत्वे, मत्वे, आपि, विभक्तिकार्य्यौमन्तर मादुवर्णोऽनु । अमू । अमू । अमूम् । अमू । अमू । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमुष्याः २ । अमुयोः । अमूषाम् । अमुष्याम् । अमूषु । हान्त उपानहशब्दः ।

## नहाहोर्धतौ ॥२।१।८५॥

नहेर्भ्वादेराहश्च धातोः सम्बन्धिनो हकारस्य धुटि प्रत्यये पदान्ते च यथाक्रमं धकारतकारावादेशौ स्याताम् । उपानत्—द् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । हे उपानत्—द् ।

इति व्यञ्जनान्ताः स्त्रीलिङ्गाः ।

## अथ व्यञ्जनान्ता नपुंसकलिङ्गाः ।

श्रीवत्सशालीसुमनोभिराजाज्जम्भद्विषा कृतभूरिभक्तिः ।
नन्दानुरागोऽनघमोऽथ सम्यान्वित जगत्त्वे दृशामसमापत् ॥ १ ॥

चकारान्तः प्रत्यच्शब्दः । अञ्चः क्विनिति क्वने प्रत्यक्—ग् । औकारेऽनुस्वरत्वात् अत्र प्राग्दीर्घश्चेति । प्रतीची । प्रत्यञ्चि २ । सम्यक्—ग् । समीची । सम्यञ्चि २ । शेषं पुंवत् । गोअच्शब्दे गत्यर्थत्वे क्लीबे सौ परे गोऽच् स् इतिस्थिते, अमतो लुप् । अच् इति विश्लेषे स्वरे वाऽमत्वे इत्यवादेशो दीर्घत्वे चजः कगम् । विरामे वा । गवाक्—ग् । वाअसन्धिपरिभाषयौ गो अक्—ग् । एदोतः पदान्तेऽस्यलुगित्यकारलोपे गोक्—ग् एवं षट् रूपाणि । गतौ अञ्चोऽनर्चायामिति नलोपाभावे गोऽन्च् स् शब्दे सेर्लुपि अन् च् इति विश्लेषे गो अन् च् इति कृते पदस्येति चलोपे युजञ्चक्रुञ्चो नो ङ इति नकारस्यापि ङकारे ओकारस्यावादेशे गवाङ् । गो अङ् । अकारलुकि गोङ् । एवं नव रूपाणि । तत्र पुनः कगयोः द्वित्वेऽष्टादश रूपाणि सौ । औकारे औरीरितीकारे कृते अत्र प्रागित्यनेन च् लोपे गत्यर्थे गोची इत्येकमेव रूपम् । पूजार्थे गवाञ्ची । गो अञ्ची । गोऽञ्ची । एषु अदीर्घाविति जद्वित्वे षट् रूपाणि । अत्र अ इ उ वर्णस्यान्तोऽनुनासिक इति नानुनासिकः । द्वित्वस्यैवादेर्विधेयात् । एवं सप्त रूपाणि प्रथमाद्विवचने । जसि धुटां प्रागिति नोऽन्तः प्राप्तः । नपुंसकस्य शिरितीकारे प्राप्तेऽवादेशे गवाञ्चि । असन्धौ गो अञ्चि । अतो लुकि गोऽञ्चि । एतद्रूपत्रयं पूजार्थेऽपि समानम् । तत्र धातोर्नकारस्यालोपात्स्वरात्परस्य धुटोऽभावाच्च नोऽन्तः । ततोऽदीर्घादिति च् द्वित्वे षट् रूपाणि । तत्राप्यनुनासिकत्वे द्वादश रूपाणि । एवं रूपसमुच्चये सप्तविंशतिः प्रथमायां रूपाणि । तथैव द्वितीयायामपि । तृतीयैकवचने गत्यर्थे गोचा । पूजार्थे गवाञ्चा । गो अञ्चा । गोऽञ्चा । इति रूपत्रये चद्वित्वे षट् । एषु सप्तसु अनुनासिकत्वे चतुर्दश रूपाणि । एवं ङसि ङस् ओस् आम् ङि प्रत्ययपरत्वे चतुर्दशानां षड्गुणने चतुरशीति रूपाणि । भ्यामि गत्यर्थे गवाग्भ्याम् । गोअग

भ्याम्। गोग्भ्याम्। एषु त्रिष्वदीर्घोऽचिति द्वित्वम्। सयुक्तव्यञ्जनेऽपीष्टिरिति मताश्रयणात्। पूजार्थेऽपि गवाङ्भ्याम्। गोअङ्भ्याम्। गोऽङ्भ्याम्। इत्यत्र ङद्वित्वे द्वादश रूपाणि। ततोऽस्या इत्यनेन मकारात्परयकारद्वित्वे चतुर्विंशतिः। मद्वित्वेऽष्टाचत्वारिंशत्। एवं भ्यसि परेऽपि ज्ञेयम्। भिसि तु गतौ गद्वित्वे पूजायां ङद्वित्वे चतुर्विंशति रूपाणि। चतुर्थ्येकवचने औकारवदेव सप्त रूपाणि। एवं प्रथमायां १७, द्वितीयायाम् १७, तृतीयैकवचने १४, भ्याम् त्रयेऽपि ४८, ४८, ४८, भिसि २४, ङे इत्यस्य ७ भ्यसोः ४८, ४८, ङसि १४, ङस् १४, ओसि १४, आमि १४ ङौ १४, ओसि १४, सुपि ८४ रूपाणि। तथाहि गवाक्षु। गोअक्षु। गोऽक्षु। एषु कद्वित्वे षट्। ततः शिट इति षद्वित्वे द्वादश। अनुनासिके चतुर्विंशतिः। पूजार्थे ङ्णो कटौ इति कान्तपक्षे ङद्वित्वे षट्। शिट्याद्यस्य द्वितीयो वेति ककारस्य खत्वे द्वादश। ततः शिट इति षद्वित्वे चतुर्विंशतिः। अनुनासिकत्वेऽष्टाचत्वारिंशत्। पूजार्थेऽपि कागमाभावे गवाङ्षु। गोअङ्षु। गोऽङ्षु। एषु च ङद्वित्वे षट्। अनुनासिकत्वे १२ सर्वसम्मेलने चतुरशीतिः। सम्बोधनं विना सर्वस्यादौ सप्तविंशत्यधिकपञ्चशती। सम्बोधनयोगे चतुःपञ्चाशदधिकपञ्चशती रूपाणि। सङ्ग्रहः। नपुंसके स्यादू गोपूजान्येऽर्थगत्यो रूपपद्धतिः। असन्ध्यवादेशालुग्भिर्नवाधिकशतत्रया ॥ १ ॥ अत्र समस्तुम्बु पदमादिपदके त्रीण्येव जश्शसोः। रूपाणि वृथाके शेषे चत्वारीह विचारय ॥ २ ॥ शौनपक्षेषु नामेन द्वित्वे पञ्चाऽनुनासिके। विकल्पनेन ज्ञेयानि रूपाणीह सुधीश्वरैः ॥ ३ ॥ तिर्यक्—ग्। तिरश्ची। तिर्यञ्चि। पूजायाम्। तिर्यङ्। तिर्यञ्ची। तिर्यञ्चि। शेषं पुंवत्। जान्तोऽसृज्। असृक्—ग्। असृजी। असृञ्जि। दन्तपादेत्यादिना वा शासौ असानि। अस्ना। असृजा। असभ्याम्। असृग्भ्याम्। हे असृक्—ग्। ऊर्जशब्दे ऊर्क्—र्ग्। ऊर्जी। ऊर्ज् इ इति स्थिते

## र्लो वा ॥१।४।६७॥

रेफलकाराभ्यां परो यो धुड्जातिस्तदन्तस्य नपुंसकस्य घुटि परे धुटः प्राक् नोऽन्तो वा स्यात्। ऊर्न्जि। ऊर्जि। बहूर्न्जि। बहूर्जि। ऊर्जशब्दे पाणिनिमते मिदचोऽन्त्यात्पर इति रेफात्पूर्वं नागमे नरजानां संयोगः क्रमिकः। रनजानां संयोगो मतान्तरे बहूर्जीत्यत्र नुमो निषेधः। तान्तः। जगत्—द्। जगती। जगन्ति।

## अवर्णादश्नोऽन्तो वाऽतुरीङ्योः ॥२।१।११५॥

श्नावर्जितादवर्णात्परस्यातुरन्त इत्यादेशो वा स्यात् ईङ्योः परतः। तुदत्। तुदती। तुदन्ती। तुदन्ति। भात्। भाती। भान्ती। भान्ति।

## श्यशवः ॥२।१।११६॥

श्यात् शवश्च परस्यातुरीङ्योः परतोऽन्त इत्यादेशो नित्यं स्यात्। भवत्। भवन्ती। भवन्ति। दीव्यत्। दीव्यन्ती। दीव्यन्ति। महत्। महती। न्समहतोरि-

तिदीर्घे महान्ति २। यकृत्शकृतो वासादी यकन्, शकन् वा। यकृन्ति। यकानि। यक्ना। यकृता। शकृन्ति। शकानि। शक्ना। शकृता इत्यादि। दधत्। दधती।

## शौ वा ॥४।२।९५॥

द्युपुक्कजक्षपञ्चत परस्यान्तो नकारस्य शि प्रत्यये परे वा लुक् स्यात्। द-धन्ति। दधति। अमतो लुगिति लुग्विधानात् न अवायत्वम्। त्यत्। त्ये। त्यानि। तत्। ते। तानि २। यत्। ये। यानि २। एतत्। एते। एतानि २। अन्यादेशे एनत्। एने। एनानि। शेष पूर्ववत्। वेभिद्यते क्विपि वेभिद्—न्। वेभिदी। वेभिदि। शौ अल्लोपस्य स्थानिवत्वात् अधुडन्तत्वान्न नोऽन्तः। त्वरा-न्त्याविधावपि न। स्वविधौ स्थानिवत्त्वाभावात्। एवं चेच्छिद्। चेच्छिदी। चे-च्छिदि। कुलानि। अहन्शब्दे सौ परेऽनतो लुगिति सेर्लुपि रो लुप्यरीति नकारस्य रत्वे अहः। ईङौ वेति विकल्पादकारलुकि अह्नी। अहनी। अहानि २। अह्ना। अह इति नकारस्य रत्वे घोषवतीत्युत्वे अहोभ्याम्। अहोभि। अह्नि। अहनि। हे अहः। ब्रह्म। ब्रह्मणी। ब्रह्माणि २।

## क्लीबे वा ॥२।१।९३॥

आमन्त्र्यनाम्नो नकारस्य क्लीबे लुग्वा भवति। हे ब्रह्मन्। हे ब्रह्म। दण्डि। दण्डिनी। दण्डीनि। स्रग्। स्रगी।

## नि वा ॥१।४।८९॥

अपः परस्य नागमे सति पूर्वस्वरस्य घुटि वा दीर्घः। स्वाम्पि। स्वम्पि। बह्वाम्पि। बह्वम्पि। बहूर्ञ्जि। बहूर्ञ्जि। इदम्। इमे। इमानि। २। किम्। के। कानि। २। रेफान्तो वार्शब्दः। वाः। वारी। वारि। वारा। वार्भ्याम्। वार्षु। हे वाः। चतुर् शौ। चत्वारि २। विमला द्यौर्यत्र तत् विमलद्यु अहः। विमलद्युनी। अन्तर्वर्तिन्या विभक्त्या पूर्वपदस्येवोत्तरपदसंज्ञायामाशङ्क्य—

## वृत्त्यन्तोऽसषे ॥१।१।२५॥

वृत्तिः परार्थाभिधायी पदसमुदायः समासादिः, तस्या अन्तः पदं न स्यात्। इति पदत्वनिषेधात् उ पदान्तेऽनूत् इति यस्वोरत्वं न। विमलदिवि अ-हानि। मन्ये तु पक्षे पदसंज्ञैव। दधिसेक। अत्र पदसंज्ञायां पदादिस्वात्सम्य न्तस्येत्यादिना न षकारः। पदमध्यस्य सकारस्य षत्वमिति धनुष्शब्दे धनुः। धनुषी। धनूंषि। धनुर्भ्याम्। एवं चक्षुः। चक्षुषी। चक्षूंषि २। हविः। हविषी। हवींषि २। पिपठिषतेः क्विप्। भ्वादेर्नामिन इति दीर्घः। पिपठीः। पिपठिषी। पिपठिषि २। मात्र मोऽम्भो नविद्वत्। पिपठीर्भ्याम्। पयः। पयसी। पयांसि। पयसा। पयोभ्याम्। एवं तपम्, वयम्, यशसा। सुपुम्। सुपुंसी। सुपुंमांसि सुमानि। अदः। अमतो लुक्। द्विवचने अम इति जाते मादुवर्णोऽनु। अमू।

अमूनि २। स्वनडुत्—द्। स्वनडुही। चा' दोषे। स्वनड्वांहि गृहाणि। काष्ठतट्—ड्। काष्ठतक्षी। काष्ठतक्षि। युर्दां प्रागिति बहुवचनात् युदृकपूर्वोऽपि नोऽन्तः। काष्ठतड्भ्याम् इत्यादि।

इति व्यञ्जनान्ता नपुंसकलिङ्गाः।

---

## अथाऽव्ययप्रकरणम्।

श्रेयान्स्य सविनय भयनिश्चितोऽर्हन् समानमानयतु मां नियतप्रसादैः।
यस्याभिधानविधिना सकलार्थसिद्धिः संजायते जयमयी हि मयीहितार्थे ॥१॥

अथाऽव्ययानि। नान्ता संख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः। पदं वाक्यमव्ययं चेत्यसंख्यं च तदुच्यते ॥ १ ॥ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ २ ॥

## स्वरादयोऽव्ययम् ॥१।१।३०॥

स्वर्। अन्तर्। सनुतर्। पुनर्। प्रातर्। सायम्। नक्तम्। अस्तम्। दिवा। दोषा। ह्यस्। श्वस्। उच्चैस्। नीचैस्। शनैस्। अवश्यम्। ऋधक्। ऋते। आरात्। पृथक्। रात्रौ। चिरम्। मनाक्। ईषत्। जोषम्। तूष्णीम्। बहिस्। समया। निकषा। अवस्। स्वयम्। वृथा। नक्तम्। हेतौ। अद्धा। इद्धा। सामि। वत्। सदा। सना। उपधा। समत्। सनात्। तिरस्। अन्तरा। अन्तरेण। ज्योक्। कम्। शम्। सहसा। विना। नाना। स्वस्ति। स्वाहा। स्वधा। अलम्। वषट्। श्रौषट्। वौषट्। अन्यत्। अस्ति। उपांशु। क्षमा। विहायसा। मिथ्या। मृषा। मुधा। पुरा। मिथो। मिथस्। प्रायस्। मुहुस्। प्रवाहु। प्रवाहुकम्। प्रवाहुक्। आर्यहलम्। अभीक्ष्णम्। साकम्। सार्धम्। नमस्। हिरुक्। धिक्। अथ। अम्। आम्। प्रताम्। प्रशान्। प्रतान्। मा। माङ्। इत्यादि। आकृतिगणोऽयं स्वरादिः। चादयोऽसत्त्वे। च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। भूयस्। कूपत्। सूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। नहि। सकिम्। किम्। माकिम्। नकिम्। आकिम्। नञ्। यावत्। तावत्। त्वै। द्वै। न्वै। नुवै। रैवै। श्रौषट्। वौषट्। स्वाहा। स्वधा। वषट्। तुम्। तथाहि। खलु। किल। अथ। सुष्ठु। स्म। आदह। उपसर्गप्रतिरूपाः। अवदत्तमित्यादयः। विभक्तिप्रतिरूपाः। अहंयुः। अस्तिक्षीरा इत्यादयः। स्वरप्रतिरूपाः। अ। आ। इ। ई। उ। ऊ। ऋ। ॠ। ऌ। ॡ। ए। ऐ। ओ। औ। पशु। शुकम्। यथा। कथा। याट्। पाट्। अङ्ग। है। हे। भो। अये। अयि। एकपदे। युत्। आतः। अयं चादिरप्याकृतिगणः।

## अधणूतसाद्याशसः ॥१।१।३२॥

धणवर्जितास्तसादयः शस्पर्यन्ता ये प्रत्ययास्तदन्तं शब्दरूपमव्ययं स्यात्। देवा अर्जुनतोऽभवन्। अर्जुनपक्षे इत्यर्थः। ततः। तत्र। इह। क्व। कदा। एतर्हि।

अमुना । इदानीम् । सद्यः । अद्य । परेद्यवि । पूर्वेद्युः । उभयद्युः । परुत् । परारि । ऐषमः । कर्हि । तथा । कथम् । पञ्चधा । एकधा । ऐकध्यम् । द्वैधम् । द्वेधा । पञ्चकृत्वः । द्विः । सकृत् । बहुधा । प्राक् । दक्षिणात् । पश्चात् । पुरः । पुरस्तात् । उपरि । उपरिष्टात् । दक्षिणा । दक्षिणाहि । दक्षिणेन । यावन्तम् । तावन्तम् । आन्त शब्दरूप बहुधा । अधणिति किम्? पथि द्वैधानि । सम्प्रायद्वैधानि । आद्याद इति किम्? पचतिरूपम् ।

## विभक्तिथमन्ततसाद्याभाः ॥१।१।३३॥

विभक्त्यन्तप्रतिरूपकास्थमन्तसाम्ना ये तसादयः प्रत्ययास्तदन्तप्रतिरूपकाश्च ये शब्दास्ते सर्वेऽव्ययानि स्युः । अहंयुः । शुभंयुः । अस्तिक्षीरा गौः । कुतः । यथाकथम् इति । अहम् । शुभम् । कृतम् । पर्याप्तम् । येन । तेन । चिरेण । अन्तरेण । ते । मे । अह्नाय । चिराय । चिरस्य । अकस्मात् । अन्योन्यस्य । एकपदे । अग्रे । प्राह्णे । वेलायाम् । मात्रायाम् । एते स्याद्यन्तप्रतिरूपाः । अस्ति । नास्ति । असि । अस्मि । विद्यते । भवति । एहि । ब्रूहि । मन्ये । शङ्के । अस्तु । भवतु । पूर्यते । स्यात् । आस । आह । वर्तते । याति । नियाति । पश्य । पश्यत । आतङ्क । आवह । इत्याद्यस्त्याद्यन्तप्रतिरूपकाः ।

## वत्तस्याम् ॥१।१।३४॥

वत् तसि आम् एतत्प्रत्ययान्तः शब्दोऽव्ययं स्यात् । मुनेरिव मुनिवद् वृत्तम् । क्षत्रिया इव क्षत्रियवद् विप्रा युध्यन्ते । पीलुमूलेनैकदिक् पीलुमूलतो विद्योतते विद्युत् । उरसा एकदिक् उरस्तः । आम् तद्धित एव । उच्चैस्तरां याति ।

## क्त्वा तुमम् ॥१।१।३५॥

क्त्वा तुम् अम् एतत्प्रत्ययान्तः शब्दोऽव्ययं स्यात् । कृत्वा । धृत्वा । प्रणम्य । निपत्य । कर्तुम् । स्तोतुम् । स्मारम् स्मारम् । दायं दायम् । कच्चिद् जीवसे पिबध्यै इत्यादि । वदेतोः । विसृपः । इति क्त्वसि तोसुन् कसुन्नन्तोऽप्यव्ययसंज्ञः स्यात् ।

## गतिः ॥१।१।३६॥

गतिसंज्ञाः शब्दा अपि अव्ययसंज्ञाः स्युः । अदः कृत्य । अत्राऽव्ययत्वाद् विसर्ग एव न त्वतः कृकमि इत्यादिना सकारः ।

## अव्ययस्य ॥३।२।७॥

अव्ययसम्बन्धिनः स्यादेर्लुप् स्यात् । तत्सम्बन्धि यात् स्वर् अतिक्रान्तोऽति स्वर्, तस्यातिस्वरः, अत्युच्चैसः । यद्यप्यव्यये तदन्तविधिरस्ति तथापि न गौणे । सत्वामित्यादिप्रवृत्तिर्निष्कारणमव्ययाभावपरा ।

## वा वाप्योस्तनिक्रीधाग्नहोर्वपी ॥३।२।१५६॥

अव इत्युपसर्गस्य तनि क्रीधाग्योः परयोः । अप्युपसर्गस्य धाग् नहोः पर

पोर्वा च पि इत्यादेशौ क्रमात्स्तः। अवगत। वगत। अवक्रय वक्रय। अपिधानम्। पिधानम्। अपिनद्धः। पिनद्धः। अवगाढः। वगाढः इत्यादि। धातुनियम मेच्छन्त्येके। ता ते रू रूवतु इत्यादौ भति उपसर्गेऽपि अतो लोप इत्यन्ये। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो। आप च व्यञ्जनान्तानां यथा वाचा निशा दिशा।

इत्यव्ययानि।

---

## अथ स्त्रीप्रत्ययाः।

नियतलिङ्गानलिङ्गाँश्चाभिधाय पुलिङ्गानां स्त्रीलिङ्गविधिरभिधीयते।

## आत् ॥२।४।१८॥

अकारान्तान्नाम्नः स्त्रियां वृत्तौ गम्यायामाप् प्रत्ययः स्यात्। पद्मा। अम्बा। माला। सर्वा। या। सा। खट्वा।

## अजादेः ॥२।४।१६॥

अजादिभ्योऽजादिसम्बन्धिस्त्रियां वर्तमानेभ्य आप् स्यात्। जातिलक्षण ङीबाधनार्थं वचनम्। अजा। एडका। अश्वा। चटका। मूषिका। एषु जातिलक्षणो ङीः। बाला। वत्सा। मन्दा। विलाता। होडा। एषु वयोलक्षणश्च ङीर्न। कुञ्चा। उष्णिहा। देवविशा एषु व्यञ्जनान्तत्वात्प्राप्तौ वचनम्। ज्येष्ठा। कनिष्ठा। मध्यमा एषु पुंयोगेऽप्याप्। कोकिला जातावपि। नञ्पूर्वान्मूलात्। अमूला। अजादिसम्बन्धविज्ञानात् नेह। पञ्चाजी।

## स्त्रिया नृतोऽस्वस्रादेर्ङीः ॥२।४।१॥

नकारान्तादृकारान्ताच्च स्वस्रादिवर्जितान्नाम्नो ङीप्रत्यय स्यात्। राज्ञी। कर्त्री। हर्त्री। दण्डिनी। सुपथी। अवमुक्ती सेना।

## अधातूदृदितः ॥२।४।२॥

धातुवर्जं य उदिदृदिच्च प्रत्ययोऽप्रत्ययो वा तदन्तान्नाम्नः स्त्रियां ङीः स्यात्। भवन्ती। पचन्ती। दीव्यन्ती। अधात्विति किम्? सुकन्। सुदिन्।

## अञ्च. ॥२।४।३१॥

अञ्चन्तान्नाम्नः स्त्रियां ङीः स्यात्। प्राची। प्रतीची।

## णस्वराघोपाद्वनोरश्च ॥२।४।४॥

णान्तात्स्वरान्ताद्घोपान्ताच्च यो विहितो वन् प्रत्ययस्तदन्तान्नाम्नः स्त्रियां ङीः स्यात्। तत्सन्नियोगे च वनोऽन्तस्य रः स्यात्। वन् क्वनिप् क्वमिपां सामान्येन ग्रहणम्। ओणृधातोः ओण् वन् इति स्थिते वन्याङ् पञ्चमस्येति णस्यात्वे

अवाधा नरा। अवावरी ब्राह्मणी। भापातोर्वीवरी। सहकृत्वरी। मेरुदृश्वरी। शार्वरी। अघोपादिति किम्? राजयुध्वा।

# वा बहुव्रीहेः ॥२।४।५॥

णस्वराघोपाद्विहितो यो वन् तदन्ताद्बहुव्रीहेः स्त्रियां ङीर्वा स्यात्। रश्चा न्तादेशः। प्रियावावरी। प्रियावावा।

# ताभ्यां वाऽऽप् डित् ॥२।४।१५॥

मन्नन्तात्तदन्ताच्च बहुव्रीहेः स्त्रियामाप् वा स्यात्स च डित्। प्रियावावा। प्रियावावे।

# वा पादः ॥२।४।६॥

बहुव्रीहेस्संभिन्नसकपादशब्दान्तात्स्त्रियां ङीर्वा स्यात्। द्विपदी। द्विपात्। त्रिपदी। त्रिपात्। क्वचि पाद् पात् पदे ॥

इति निपातो। त्रिपाद् भक्त।

त्रिपदा गायत्री। द्विपदा। एकपदा। नाम्नसंख्याया अलिङ्गत्वात् पञ्च। सप्त नव। नाम्न ङीः। अतएव मलुकि सति आवपि न।

# मनः ॥२।४।१४॥

मन्नन्तान्नाम्न स्त्रियां ङीर्न स्यात्। सीमा। सीमानी। पामा। पामानी।

# अनो वा ॥२।४।११॥

अन्नन्ताद्बहुव्रीहेः स्त्रियां ङीर्वा स्यात्। बहुराज्ञी। बहुराज्यौ। बहुराजा। बहुराजे। बहुराजा। बहुराजानौ। उपान्त्यलोपेपि एवाय विधिः।

# नाम्नि ॥२।४।१२॥

अन्नन्ताद्बहुव्रीहेः स्त्रियां सञ्ज्ञायां नित्यं ङीः। सुराज्ञी नाम ग्रामः। वेदे तु शातमूर्ध्नी।

# नोपान्त्यवतः ॥२।४।१३॥

यस्योपान्त्यलोपो नास्ति स उपान्त्यवान्। तस्मादन्नन्ताद्बहुव्रीहेः स्त्रियां ङीर्न स्यात्। मायमनो वेति सूत्रोक्तस्यैव निषेधः किन्तु स्त्रियां घृत इत्यस्यापि। सुपर्वा। सुपर्वाणी। सुधर्मा। सुधर्माणी। एवं नोपान्त्यलोपिनोऽन्नन्तस्य बहुव्रीहेः स्त्रियां त्रैरूप्यम्। ङीप् डाप् विकल्पेन। उपान्त्यवतस्तु डाप्प्रतिषेधाभ्यां द्वैरूप्यम्।

# दाम्न. ॥२।४।१०॥

संख्यादेर्दामन्शब्दान्ताद्बहुव्रीहेः स्त्रियां ङीः स्यात्। द्विदाम्नी। संख्या किम्। उद्दामानम्। उद्दामाम्। उद्दाम्नीं वडवां पश्य।

## अस्यायत्तत्क्षिपकादीनाम् ॥२।४।१११॥

यस्तत्क्षिपकादिवर्जितस्य मान्तो योऽकारस्तस्यानित्प्रत्ययावयवे ककारे परे इकार स्यात् । कीदृशे ककारे? आप्परे । आयेव परो यस्मात् विभक्तिः स आप्परस्तस्मिन् । सर्विका । कारिका । पाठिका । पाचिका । मद्रिका । भद्रिका । अस्येति किम्? नौका । गोका । अनित्कीत्येव । जीवका । आशिष्यकन् । इचा पुंसोऽनिक्यापपरे इत्यनुवृत्तेरनित इति पर्युदासेन प्रत्ययग्रहणेन अत्र न भवति । शक्नोतीति शका । आप्परे इत्येव । कारकः । आयेव परो यस्मादिति नियम किम्? बहुपरिव्राजका मथुरा । बहुमद्रका सेना । विभक्त्यन्तात्परमाप् । तेनेकारनिषेध । यदादिवर्जनं किम्? यका । सका । क्षिपका । ध्रुवका । अस्येत्यत्राकार एव व्याख्यानात् । तेन राकेत्यत्र नेकार । नरिका । मामिका । अनयोरिकारो निपात्यते । नरान् कायतीति नरिका । आतो डोऽह्वावाम ( ) इति डः । ममेयं मामिका । अत्र तद्धितप्रत्यय मामकी इत्येव केवल मामक इति सूत्रेण नाप् ॥

## स्वज्ञाजभस्त्राधातुत्ययकात् ॥२।४।१०८॥

स्वज्ञाजभस्त्रेभ्यस्तथाऽधातोरत्यप्रत्ययस्य च यावयवौ यकारककारौ ताभ्यां च परस्याऽऽप स्थानेऽनित्प्रत्ययावयवे ककारे आप्परे इकारो वा स्यात् । कुत्सिता स्वा ज्ञातिः स्विका । स्वका । ज्ञका । ज्ञिका । भस्त्रोत्यादिस्त्रात्राच्च । किन्तु कप् । एव शका । शिका । अजका । अजिका । भजका । अजिका । एवम् अभस्त्रका । अभस्त्रिका । यकारात्परस्य वा । इभ्यका । इभ्यिका । आर्यका । आर्यिका । ककारात्परस्य वा । चटकका । चटकिका । धातुत्यवर्जनं किम्? सुनयिका । मद्योकिका । दाक्षिणात्यिका । इहत्यिका । उपत्यका । अधित्यका । अत्र क्षिपकादित्वान्नेकार । अक् प्रत्यये सांकाश्ये भवा साङ्काश्यिका । यकेति किम्? अश्विका । शुभं यातीति शुभयाः । साऽज्ञाता शुभयिका । उत्तरपदलोपे नेकारो वाच्य । देवदत्तिका । देवका ।

## तारकावर्णकाऽष्टका ज्योतिस्तान्तवपितृदेवत्ये ॥२।४।१०८॥

तारकादय यान्त्या क्रमेण ज्योतिरादिष्वर्थेष्वकारस्याऽकृतेकारा निपात्यन्ते । तरतेर्णके, तारका नक्षत्र कनीनिका च । अन्यत्र तारिका । वर्णका प्रावरणविशेषः । अन्यत्र वर्णिका । अष्टका पितृदैवत्ये कर्मणि । अन्यत्राष्टिका खारी ।

## वौ वर्तिका ॥२।४।११०॥

पक्षिणि वाच्ये वर्तिकाशब्द इकारो वा । वर्तकाऽपि ।

## द्वयेषसूतपुत्रवृन्दारकस्य ॥२।४।१०९॥

एषामन्तस्यानित्स्यप्रत्ययादावयवेकारे आप्परे परे वेकारः स्यात्। द्विके। द्वके। एषिका। एषका। भस्त्रपूर्वकस्ये वेकारः। अमेषका। सूतिका। सूतका। पुत्रिका। पुत्रका। वृन्दारिका। वृन्दारका। एष शब्दस्य सर्वादेरेवेच्छतीतीयेर्णके एषिका। एता एव एतिकाः।

## ङ्यापुंसोऽनित्क्याप्परे ॥२।४।१०७॥

अपुंस्त्र्यार्थीभ्यां ङ्याप्योर्विहितस्याप् स्थाने इकारो ह्रस्वश्च वा स्यात्। मकारात् पुंस्त्वर्जितस्य प्रत्ययस्यावयवभूते ककारे आप्परे परतः। अल्पा खट्वा। खट्विका। खट्वका। खट्वाका। गङ्गिका। गङ्गका। गङ्गाका। अपुंस इति किम्? खट्विका। माप इत्येव। मातृका।

## अणञेयेकण्नञ्स्नञ्टिताम् ॥२।४।२०॥

अणादिप्रत्ययानां योऽकारस्तदन्तानामनः प्रत्यासत्तेस्तेषामेवाणादीनां वा-च्यायां स्त्रियां वर्तमानात् ङी स्यात्। औपगवी। तापसी। कुम्भकारी। ऐन्द्री। औत्सी। वैदी। छात्री। चौरी। सौपर्णेयी। चैलेयी। एय ञ् प्रत्ययः। इकण्। आक्षिकी। लावणिकी। नञि। स्त्रैणी। स्नञि। पौंस्नी। टिति। आन्नुद्रमी। आनुद्रयसी। जानुमात्री। पञ्चतयी। शाक्तीकी। यास्तनी। भिक्षाचरी। सहचरी। कुरुचरी।

## अस्य ड्यां लुक् ॥२।४।८६॥

ङी प्रत्यये परे पूर्वस्याकारस्य लुक् स्यात्। प्रत्ययसाहचर्यादागमस्य डितो ङीने स्यात्। पठिता विद्या।

## यञो डायन् च वा ॥२।४।६७॥

यञ्प्रत्ययान्तात् स्त्रियां ङीः स्यात्, तत्सन्नियोगे डायन् चान्तो वा स्यात्।

## व्यञ्जनात्तद्धितस्य ॥२।४।८८॥

व्यञ्जनात्परस्य तद्धितयकारस्य लुक् स्यात् ङ्याम्। गर्गस्यापत्यं पौत्रादि स्त्री गार्गी। पक्षे। गार्ग्यायणी। द्वीपे भवा द्वैप्या। अत्र द्वीपादनुसमुद्रं ण्य इति न ङीः। देवस्यापत्यं स्त्री दैवी। अत्र देवाद्यञेत्यस्य प्रतिजातीयार्थत्वात् ङीः इति केचित्।

## लोहितादिशकलान्तात् ॥२।४।६८॥

लोहितादिभ्यः शकलान्तेभ्यो यञन्तेभ्यो ङीः स्यात्स्त्रियाम्, तत्सन्नियोगे डायन् चान्तः। लौहित्यायनी। कात्यायनी। शाकल्यायनी।

## कौरव्यमाण्डूकासुरेः ॥२।४।७०॥

एभ्य' स्त्रियां ङीः स्यात्तत्सन्नियोगे चायन् चान्तः। कौरव्यायणी। माण्डूकायनी। आसुरायणी।

## वयस्यनन्त्ये ॥२।४।२१॥

अनन्त्यवयोवाचिनोऽदन्तान्नाम्नः स्त्रियां ङीः स्यात्। कुमारी। किशोरी। कलभी। वधूटी। चिरण्टी। तरुणी। तलुनी। कन्या। मध्या। मुग्धा। अजादि'।

## द्विगोः समाहारात् ॥२।४।२२॥

समाहारद्विगुसंज्ञकान्नाम्नोऽदन्तात्स्त्रियां ङीः स्यात्। त्रिलोकी। पञ्चाजी। त्रिफलेत्यजादिः। त्र्यनीका सेना।

## परिमाणात्तद्धितलुक्यविस्ताचितकम्बल्यात् ॥२।४।२३॥

परिमाणान्ताद्विगोरदन्तात्तद्धितलुकि स्त्रियां ङीः स्यात्। द्वाभ्यामाढकाभ्यां क्रीता द्व्याढकी। त्र्याढकी। परिमाणादिति किम्? पञ्चभिरश्वैः क्रीता पञ्चाश्वा। द्विशता। तद्धितलुकीति किम्? द्विपण्या। अविस्तादिति किम्? द्वाभ्यां विस्ताभ्यां क्रीता द्विविस्ता। द्व्याचिता। द्विकम्बल्या।

## काण्डात्प्रमाणादक्षेत्रे ॥२।४।२४॥

प्रमाणवाचिकाण्डशब्दान्तादक्षेत्रविषयाद्विगोस्तद्धितलुकि सति स्त्रियां ङी' स्यात्। द्वे काण्डे आयामप्रमाणं यस्या द्विकाण्डी। त्रिकाण्डी रज्जुः। अक्षेत्र इति किम्? द्विकाण्डा क्षेत्रभक्तिः।

## पुरुषाद्वा ॥२।४।२५॥

प्रमाणवाचिपुरुषान्ताद्विगोस्तद्धितलुकि स्त्रिया ङीर्वा स्यात्। द्विपुरुषी। द्विपुरुषा परिखा।

## रेवतरोहिणाद्भे ॥२।४।२६॥

रेवतरोहिणाभ्यां नक्षत्रवाच्याभ्यां स्त्रियां ङी' स्यात्। रेवत्यां जाता रेवती। रोहिण्यां जाता रोहिणी। अत्र जातार्थस्याणो लुकि ङीलुकि च पुनरनेन ङीर्भवति।)

## स्त्रियामृधसोन् ॥७।३।१६९॥

ङीविषये न् बहुनौरो इति भिक्षते काङीविकल्पयो' प्रासयोः—

## ऊध्नः ॥२।४।७॥

ऊधन्निति कृतसमासान्तनकारस्य ग्रहणम् । तदन्तान्नाम्नः स्त्रियां ङीः स्यात् बहुव्रीहौ । कुण्डोध्नी । स्त्रियामिति किम्? कुण्डोध्नो धैनुकम् । सङ्ख्याव्ययादेरपि । द्व्यूध्नी । अत्यूध्नी । बहुव्रीहावित्येव । ऊधोऽतिक्रान्ता अत्यूधा ।

## सङ्ख्यादेर्हायनाद्वयसि ॥२।४।९॥

संख्यादेर्हायनशब्दान्तान्नाम्नो बहुव्रीहेः स्त्रियां वयसि गम्यमाने ङीः स्यात् । द्विहायनी । चतुर्हायणी । चतुस्त्र्योर्हायनस्य वयसि इति नकारस्य णत्वम् । त्रिहायणी वडवा । वयसीति किम्? द्विहायना त्रिहायना शाला ।

## केवलमामकभागधेयपापापरसमानार्य्यकृतसुमङ्गलभेषजात् ॥२।४।२९॥

एभ्यः स्त्रियां ङीः स्यान्नाम्नि । केवली नाम ज्योतिः । मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । नाम्नीत्येव । केवला । मामकशब्दोऽणन्तस्तेन ङीसिद्धोऽपि नाम्नि नियम्यते । तेन मामिका बुद्धिरित्यसंज्ञायां लोके । अत्र अण्लक्षणोऽपि ङीर्न ।

## पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः ॥२।४।५३॥

भार्या धवकर्तृका । तस्यां वाच्यायां पतिमच्छब्दात् ङीः स्यात्प्रकृतेः पतिवत्नादेशः । तथा गर्भिण्यां स्त्रियां वाच्यायामन्तर्वच्छब्दात् ङीः प्रकृतेरन्तर्वत्नादेशश्च स्यात् । पतिवत्नी । अन्तर्वत्नी । भार्येति किम्? पतिमती भूः । गर्भिणीति किम्? अन्तरस्त्यस्यां शालायां घटः ।

## पत्युर्नः ॥२।४।४८॥

पत्यन्ताद्बहुव्रीहेः स्त्रियां ङीर्वा स्यात् तत्सन्नियोगे इकारस्य नकारादेशश्च । दृढः पतिरस्याः दृढपत्नी दृढपतिर्वा ।

## सादेः ॥२।४।४९॥

सपूर्वात्पतिशब्दात्स्त्रियां ङीर्वा स्यात्प्रकृतेर्नकारान्तादेशः । पूर्वेण सिद्धे पुनर्वचनं बहुव्रीहिनिवृत्त्यर्थम् । ग्रामस्य पतिः ग्रामपत्नी ग्रामपतिर्वा । सादेरिति किम्? पतिरियं स्त्री ग्रामस्य ।

## सपत्न्यादौ ॥२।४।५०॥

पतिशब्दात् स्त्रियां नित्यं ङीर्नकारान्तादेशः । समानः पतिर्यस्याः सपत्नी । एकपत्नी ।

## ऊढायाम् ॥२।४।५१॥

यस्तु केवलात् पतिपरिणीतायाः ङीः स्यात्रान्तादेशश्च । पत्नी । यजमानस्य पत्नी । वृषलस्य पत्नी ।

## पाणिगृहीतीति ॥२।४।५२॥

इतिशब्दः प्रकारार्थः । पाणिगृहीतीत्यादयो निपात्याः ।

## पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च ॥२।४।६०॥

एभ्यो धवयोगिभ्यस्तद्योगात्स्त्रियां ङीः स्यात्तद्योगे ऐकारश्चान्तादेशः । पूतक्रतोर्भार्या पूतक्रतायी । वृषाकपायी । अग्नायी । कुसितायी । कुसीदायी ।

## मनोरौ च वा ॥२।४।६१॥

मनोर्धवयोगान्ङीर्वा तत्सन्नियोगे औकार ऐकारश्चान्तादेशः । मनावी । मनायी । मनुः ।

## श्येतैतहरितभरतरोहिताद्वर्णात्तो नश्च ॥२।४।३६॥

एभ्यो वर्णवाचिभ्यः स्त्रियां ङीर्वा स्यात् तद्योगे तकारस्य नकारः । श्येनी । श्येता । एनी । एता । हरिणी । हरिता । भरणी । भरता । रोहिणी । रोहिता । एवं लोहिनी । लोहिता ।

## क्नः पलितासितात् ॥२।४।३७॥

आभ्यां ङीर्वा स्त्रियां तद्योगे तकारस्य क्नादेशश्च । पलिक्नी । पलिता । असिक्नी । असिता । अयमादेशच्छन्दस्य विषयात्त्वर्थत्वादयदातेति ।

## गौरादिभ्यो मुख्यान्ङीः ॥२।४।१९॥

गौरादेर्मुख्याद्गुणात् स्त्रियां ङीः प्रत्ययः स्यात् । गौरी । शबली । कल्माषी । सारङ्गी । पिशङ्गी । नर्तकी । अनड्वाही । अनडुही । पिप्पल्यादयश्च । मुख्यादिति किम्? बहुमत्रा भूमिः । आकृतिगणोऽयम् ।

## सूर्यागस्त्ययोरीये च ॥२।४।८९॥

अनयोर्यकारस्य ङीप्रत्यये ईयप्रत्यये च लुक् स्यात् । सूर्यस्य भार्या मानुषी सूरी । अगस्त्यस्यायमागस्ती ।

## मत्स्यस्य यः ॥२।४।८७॥

अस्य यकारस्य लुक् स्यात् ङीप्रत्यये परे । मत्सी ।

## तिष्यपुष्ययोर्भाणि ॥२।४।९०॥

भस्य नक्षत्रस्य सम्बन्धी अण् भाण् । तस्मिन् परे तिष्यपुष्ययोर्यकारस्य लुक् स्यात् । तिष्येण च प्रयुक्तेन युक्ता तैषी पौषी रात्रिः ।

## भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरा-त्पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ॥२।४।३०॥

भाजादिभ्यो यथासङ्ख्यं पक्वाद्यर्थेषु स्त्रियां ङीः स्यान्नाम्नि । भाज्यत इति भाजी पक्वा चेत् । भाजा अन्या । गोणी आवपनं चेत् । गोणा अन्या । नागी स्थूला चेत् । नागाऽन्या । जातौ तु नागी एव तस्याः स्त्रीत्वाभावात् । गजवाची नागशब्दः स्थूलगुणयोगादन्यत्र प्रयोगे नागी । सर्पवाची तु दैर्घ्ये नागा । स्थली अकृत्रिमा चेत् । स्थलाऽन्या । कुण्डी अमत्रं चेत् । कुण्डाऽन्या । यस्तु कुण्डोऽमृते पत्यौ जारजस्तत्र जातिलक्षणो ङीः स्यात् । काली कृष्णा चेत् । कालाऽन्या । कुशी आयसी चेत् । कुशाऽन्या । कामुकी रिरंसुश्चेत् । कामुका अन्या । कटी श्रोणी चेत् । कटा अन्या । कबरी केशपाशश्चेत् । कबराऽन्या । आनपदी वृत्तिश्चेत् । आनपदाऽन्या । इत्यन्ये ।

## नीलात्प्राण्योषध्योः ॥२।४।२७॥

नीलशब्दात्प्राण्योषध्योः स्त्रियां ङीः स्यात् । नीली वडवा । नीली गौः । नीली ओषधिः । प्राण्योषध्योरिति किम्? नीला शाटी ।

## क्ताच्च नाम्नि वा ॥२।४।२८॥

नीलशब्दात् क्तान्ताच्च शब्दरूपात् स्त्रियां ङीर्वा स्यान्नाम्नि । नीली । नीला । प्रवृद्धा चासौ विलूना च प्रवृद्धविलूनी । प्रवृद्धविलूना ।

## स्वरादुतो गुणादखरोः ॥२।४।३५॥

स्वरात्परो य उकारः सामर्थ्यादेकवर्णव्यवहितस्तदन्ताद्गुणवाचिनः खरुवर्जितान्नाम्नः स्त्रियां ङीर्वा स्यात् । पट्वी । पटुः । साध्वी । साधुः । स्वरादिति किम्? पाण्डुर्भूः । उत इति किम्? शुचिः । गुणादिति किम्? आखुः स्त्री । अखरोरिति किम्? खरुः स्त्री । पतिंवरा कन्या ।

## नवा शोणादेः ॥२।४।३१॥

शोणादेर्गणात् स्त्रियां ङीर्वा स्यात् । शोणी । शोणा । चण्डी । चण्डा । पट्वी । पटु । एवं नाम्नाऽपि कश्चित् । गुणवचनात्तु पूर्वेणैव सिद्धिः ।

## इतोऽक्त्यर्थात् ॥२।४।३२॥

इकारान्तान्नाम्न: स्त्रियां ङीर्वा स्यात् क्त्यर्थप्रत्ययान्तं विना । रात्रि: । रात्री । भूमि: । भूमी । शकटि: । शकटी । अक्त्यर्थादिति किम्? कृति: । हति: । अजननि: इत्यादि ।

## पद्धते: ॥२।४।३३॥

स्त्रियां ङीर्वा स्यात् । पद्धति: । पद्धती । क्त्यर्थे वचनम् ।

## शक्ते: शस्त्रे ॥२।४।३४॥

शक्तिशब्दाच्छस्त्रे स्त्रियां ङीर्वा स्यात् । शक्ति: । शक्ती । शस्त्रे इति किम्? शक्ति: सामर्थ्यम् ।

## धवाद्योगादपालकान्तात् ॥२।४।५९॥

धवो भर्ता । तद्वाचिनोऽकारान्तात्योगात् सम्बन्धात् स्त्रियां वर्तमानात् नाम्नो ङी स्यात् पालकान्तवर्जम् । प्रष्ठस्य भार्या प्रष्ठी । गणकी । योगादिति किम्? देवदत्त: प्रिय: । देवदत्ता भार्या । पालकान्तवर्जनात् गोपालकस्य भार्या गोपालिका भार्या । ज्येष्ठा अजादौ ।

## सूर्य्याद्देवताया वा ॥२।४।६४॥

सूर्यशब्दाद्धवसम्बन्धात् स्त्रियां वर्तमानात् ङीर्वा, तत् सन्नियोगे आन् चान्त: । सूर्या । सूर्याणी । देवताया इति किम्? सूर्यस्यादित्यस्य भार्या मानुषी सूरी । कुन्ती ।

## वरुणेन्द्ररुद्रभवशर्वमृडादान्दाचान्त: ॥२।४।६२॥

एभ्यो धवनामभ्यस्तद्योगे स्त्रियां ङी स्यात्, तद्भावे चानन्तोऽपि । वरुणस्य भार्या वरुणानी । एवम् इन्द्राणी । रुद्राणी । भवानी । शर्वाणी । मृडानी ।

## मातुलाचार्य्योपाध्यायाद्वा ॥२।४।६३॥

एभ्यो धवनामभ्यस्तद्योगात् स्त्रियां ङी स्यात् तद्भावे चानन्तो वा । मातुलानी । मातुली । आचार्याणी । आचार्या । उपाध्यायानी । उपाध्यायी । या तु स्वयमेवाध्यापिका तत्र वा ङी: । उपाध्यायी । उपाध्याया । स्वय व्याख्यात्री आचार्य्या ।

## आर्य्यक्षत्रियाद्वा ॥२।४।६६॥

आभ्यां स्त्रियां ङीर्वा तद्भावे आन् च । आर्याणी । आर्या । क्षत्रियाणी ।

क्षत्रिया। अपत्ययोगेऽयं विधिः। धवयोगे तु आर्यस्य स्त्री आर्य्यी। क्षत्रियी। केचित्तु आर्य्यपदस्थाने अर्यपदं पठन्ति। अर्याणी। अर्या स्वामिनी। वैश्यजातिर्वा स्त्री। पुंयोगे तु अर्यी। क्षत्रियी। कथं ब्रह्माणीति? ब्रह्माणमानयति जीवयतीति ब्रह्माणी। अत्र कर्मणोऽण्।

## क्रीतात्करणादेः ॥२।४।४४॥

करणमादिरवयवो यस्य तस्मात् क्रीतान्तान्नाम्नः स्त्रियां ङीः स्यात्। अश्वेन क्रीयते स्म अश्वक्रीती। करणग्रहणं किम्? सुक्रीता। दुष्क्रीता।

## क्तादल्पे ॥२।४।४५॥

क्तप्रत्ययान्तान्नाम्नः करणादेरल्पार्थे स्त्रियां ङीः स्यात्। अभ्रलिप्ती द्यौः। सूपविलिप्ती स्थाली। अल्पाभ्रा। अल्पसूपेत्यर्थः। अल्प इति किम्? चन्दनानुलिप्ता स्त्री। अनल्पेन चन्दनेन लिप्तेत्यर्थः।

## यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ॥२।४।६५॥

यवादिभ्यः क्रमाद्दोषादौ गम्यमाने स्त्रियां ङीः स्यात् तत्सन्नियोगे आन् चान्तः। दुष्टो यवो यवानी। यवनानां लिपिर्यवनानी। उरु अरण्यमरण्यानी। महद्धिमं हिमानी। लिपीति किम्? यवनस्य भार्या यवनी।

## स्वाङ्गादेरकृतमितजातप्रतिपन्नाद्बहुव्रीहेः ।
## ॥२।४।४६॥

स्वाङ्गादेः कृतादिवर्जितक्तान्ताद्बहुव्रीहेः स्त्रियां ङीः स्यात्। शङ्खभिन्नी। केशविलूनी। कृतादिवर्जनात् दन्तकृता। दन्तमिता। दन्तजाता।

## अनाच्छादजात्यादेर्नवा ॥२।४।४७॥

आच्छादवर्जिता या जातिस्तदादेः कृतादिवर्जितक्तान्ताद्बहुव्रीहेः स्त्रियां ङीर्वा स्यात्। शार्ङ्गरो जग्धोऽनया शार्ङ्गरजग्धी। शार्ङ्गरजग्धा। दधिपीती। दधिपीता। अनाच्छादेति किम्? वस्त्रच्छन्ना। जात्यादेरिति किम्? मासयाता। पूर्वेणापि न स्यात्। असाङ्गादित्वात्। अकृतादेरित्येव। कुण्डकृता।

## असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः
## ॥२।४।३८॥

सहनञ्विद्यमानवर्जितपूर्वपदं यस्यास्तु तदन्तात्क्रोडादिगणवर्जितान्नाम्नोऽदन्तात्स्त्रियां ङीर्वा स्यात्। अतिक्रान्ता केशानिति अतिकेशी। अतिकेशा। पीनस्तनी। पीनस्तना। नासिकोदरोष्ठादिसूत्रे ओष्ठादिभ्य एव संयोगोपान्त्येभ्य इति

नियमात्र ङीं । सुगुल्फा । असहनञ्विद्यमानपूर्वपदादिति किम्? सकेशा । अकेशा । विद्यमानकेशा । स्वाङ्गादिति किम्? बहुयवा । अक्रोडादिभ्य इति किम्? कल्याणक्रोडा । क्रोडशब्दः स्त्रीलिङ्गीयलिङ्गः । अधिकारोऽयम् मूर्तं प्राणिस्थ स्वाङ्गमुच्यते । च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥१॥ विकार', सुशोफा । द्रवः, सुस्वेदा । अमूर्तं, सुज्ञाना । अप्राणिस्थ, सुमुखा शाला । च्युतं च प्राणिनस्तदिति किम्? अप्राणिस्थादपि पूर्वोक्तावस्था स्यात् । सुकेशी । सुकेशा । रथ्या । अनाम्नि शूर्पनखी । पक्षे आप् । शूर्पनखा । चन्द्रमुखी । चन्द्रमुखा । तन्निभं च प्रतिमादिषु । सुस्तनी सुस्तना वा प्रतिमा ।

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥२।४।३९॥

असहादिपूर्वपदेभ्य एभ्यः स्वाङ्गेभ्यः स्त्रियां ङीर्वा स्यात् । पूर्वेण सिद्धे नियमार्थमिदम् । बहुस्वरेभ्यश्चेद्भवति नासिकोदराभ्यामेव नान्येभ्यः । सयोगो पान्त्याच्चेद्भवति ओष्ठादिभ्य एवेति । तेन सुजघनेत्यादि । तुङ्गनासिकी । तुङ्गनासिकेत्यादि ।

## नखमुखादनाम्नि ॥२।४।४०॥

असहादिपूर्वपदाभ्यामाभ्यां स्वाङ्गाभ्यां स्त्रियां ङीर्वा स्यात् । अनाम्नि शूर्पनखी । पक्षे आप् । शूर्पनखा । चन्द्रमुखी । चन्द्रमुखा । अनाम्नीति किम्? शूर्पणखा ।

## पुच्छात् ॥२।४।४१॥

असहादिपूर्वपदात्स्वाङ्गादपि ङीर्वा । सुपुच्छी । सुपुच्छा ।

## कवरमणिविषशरादेः ॥२।४।४२॥

नित्यं ङीं । कवरं कर्बुरं कुटिलं वा पुच्छमस्या इति कवरपुच्छी । मणिः पुच्छेऽस्या इति मणिपुच्छी । विषं पुच्छेऽस्या इति विषपुच्छी । शरः पुच्छेऽस्या इति शरपुच्छी ।

## पक्षाच्चोपमादेः ॥२।४।४३॥

उपमानपूर्वात्पक्षात्पुच्छाच्च ङीं स्यात् । उलूकस्येव पक्षावस्या इत्युलूकपक्षी शाला । उलूकपुच्छी सेना । प्राङ्मुखीत्यादि नखमुखादित्यादिना ।

## अशिशोः ॥२।४।८॥

यतस्मादङ्गुलीदे स्त्रियां ङीं स्यात् । अशिश्वी । अगुरा ।

## नारी सखी पङ्गू श्वश्रूः ॥२।७६॥

एते शब्दाः स्त्रियां ङ्यन्ता ऊङन्ताश्च निपात्यन्ते । नृनरयोर्ङ्यां नारादेशो नारी । सखिशब्दात्सखशब्दाच्च पञ्चमीहेतौ ङीः । सखी । सख्युः स्त्री । पङ्गुशब्दादूजातावूङ् । पङ्गूः । श्वशुरस्य स्त्री धवयोगात् ङीप्राप्तौ ऊङ् । उकाराकारलोपश्च ।

## जातेरयान्तनित्यस्त्रीशूद्रात् ॥२।४।५४॥

जातिवाचिनोऽकारान्तान्नाम्नः स्त्रियां ङीः स्यात्, न चेत्तद्यान्तं नित्यस्त्रीवाचि जातिः शूद्रो वा स्यात् । आकृतिग्रहणा जातिः काचित् । अनुवृत्तसंस्थानव्यङ्ग्येत्यर्थः । यथा गोत्वादिः । सकृदुपदेशव्यङ्ग्यत्वे सति अत्रिलिङ्गान्या । यथा ब्राह्मणत्वादिः । अत्रिलिङ्गत्वं देवदत्तादेरप्यस्तीति सकृदुपदेशव्यङ्ग्यत्वे सतीत्युक्तम् । तथा गोत्रचरणलक्षणा जातिः । तदुक्तम्—'आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ १ ॥' कुक्कुटी । शूकरी । तटी । पाठी । ब्राह्मणी । वृषली । तथा नाडायनी । चारायणी । औपगवी । कठी । बह्वृची । जातेरिति किम्? मुण्डा । शुक्ला । वृत्ता । देवदत्ता । अयान्तेति किम्? इभ्या । क्षत्रिया । आर्या । गवयहयमुकयमनुष्यमत्स्यानां गौरादिपाठात् ङीः । नित्यस्त्रीजातिवर्जनात् मक्षिका । यूका । स्नुहा । बलाका । शूद्रवर्जनात् शूद्रा । महाशूद्रीति आभीरजातिविशेषो महाशूद्र इति । नात्र शूद्रशब्दो जातिवाची । किं तर्हि महाशूद्रः । यत्र तु शूद्र एव जातिवाची तत्र भवत्येव ङीनिषेधः । महती चासौ शूद्रा च महाशूद्रा । धवयोगे तु शूद्रस्य स्त्री शूद्री ।

## पाककर्णपर्णवालान्तात् ॥२।४।५५॥

पाकाद्यन्तजातिवाचिनो नाम्नः स्त्रियां ङीः स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । गोवाली । ओषधिविशेषा एते ।

## असत्काण्डप्रान्तशतैकाञ्चः पुष्पात् ॥२।४।५६॥

सदादिवर्जशब्दपूर्वात्पुष्पशब्दान्ताज्जातिवाचिनो नाम्नः स्त्रियां ङीः स्यात् । शङ्खपुष्पी, सुवर्णपुष्पी । असदादेरिति किम्? सत्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा ।

## असमभस्त्राजिनैकशणपिण्डात्फलात् ॥२।४।५७॥

समादिवर्जपूर्वपदाज्जातिवाचिनो नाम्नः स्त्रियां ङीस्स्यात् । दासीफली । ओषधिविशेषः । समादिप्रतिषेधः किम्? संफला । भस्त्रफला । अजिनफला । एकफला । शणफला । पिण्डफला ।

## अनञो मूलात् ॥२।४।५८॥

नञ्वर्जितपूर्वपदान्मूलान्ताज्जातिवाचिनः स्त्रियां ङीः स्यात्। दर्भमूली।

## इञ इतः ॥२।४।७१॥

इञ्प्रत्ययान्ताज्जातिवाचिन इकारान्तात् स्त्रियां ङीः स्यात्। सुतङ्गमेन निर्वृत्ता इति इञि प्रत्यये सौतङ्गमी।

## नुर्जातेः ॥२।४।७२॥

मनुष्यस्य या जातिस्तद्वाचिनो नाम्न इकारान्तात् स्त्रियां ङीः स्यात्। अवन्तेः कुन्तेश्चापत्यमिति ञ्यः। तल्लोपे अवन्ती। कुन्ती। दाक्षी। यकारोपान्त्यादपि। उदमेयस्यापत्यमौदमेयी। मनुष्ये एव वाच्येऽयं विधिः। तेन तित्तिरिः। नाम्न ङीः।

## उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ॥२।४।७३॥

उकारान्तान्मनुष्यजातिवाचिनोऽप्राणिजातिवाचिनश्च नाम्नः स्त्रियामूङ् स्यात्, युवाद्यन्तं रज्ज्वादींश्च वर्जयित्वा। कुरूः। इक्ष्वाकूः। अप्राणिनश्च अलाबूः। कर्कन्धूः। ब्रह्मा बन्धुरस्या ब्रह्मबन्धूः। उत इति किम्? वधूः। नाम्नोऽङि हि सति वधूमतिक्रान्तोऽतिवधूरिवप्रातिब्रह्मबन्धुरित्यत्रैव ह्रस्वः स्यात्। अप्राणिनश्चेति किम्? आखुः। कृकवाकुः। जातौ किम्? पटुः। चिकीर्षुः स्त्री। अयुरज्ज्वादिभ्य इति किम्? अध्वर्युर्ब्राह्मणी। कथं तर्हि भीरु गत निवर्तते इति? भीरुशब्दस्य क्रियावाचित्वाज्जातिलक्षणोऽङभावे सम्बोधने ओकारं प्राप्नोति नैवम्। ताच्छीलिकानां संज्ञाप्रकारत्वान्मनुष्यजातिवचनत्वम्। तथा चोङि सति ह्रस्वत्वं सिध्यति। अन्ये तु 'भद्रौपयद्यरूपा त्वं किन्तु भीरुररार्यसे' इति प्रयोगदर्शनाज्जातिवचनत्वमनिच्छन्त ऊङं न मन्यन्ते। रज्ज्वादिवर्जनाद्रज्जुः हनुः।

## बाह्वन्तकद्रुकमण्डलोर्नाम्नि ॥२।४।७४॥

बाहुशब्दान्तात्कद्रुकमण्डलुभ्यां च नाम्नि विषये स्त्रियामूङ् स्यात्। भद्रबाहूः। कद्रूः। कमण्डलूः। नाम्नीति किम्? वृत्तबाहुः।

## उपमानसहितसंहितसहशफवामलक्ष्मणादूरोः ॥२।४।७५॥

उपमानादिपूर्वपदादूरुशब्दात्स्त्रियामूङ् स्यात्। करभोरूः। संहितोरूः। इत्यादि। लक्ष्मणोरूः। आदिशब्दाल्लक्षणोरूः। उपमानादेरिति किम्? वृत्तोरूः। पीनोरूः।

## पावटाद्वा ॥२।४।६९॥

पकारान्तान्नाम्नोऽवटशब्दाच्च यञन्तात्स्त्रियां ङीर्वा स्यात्तत्सन्नियोगे चायन् चान्तः। पीतिमाष्या। पीतिमाष्यायणी। आवट्या। आवट्यायनी। अत एवाप्तो गर्गादिः।

## यूनस्तिः ॥२।४।७७॥

युवन्शब्दात्स्त्रियां तिः प्रत्ययः स्यात्। नकारान्तत्वात् ङीप्राप्तौ तदपवादः। युवतिः। यूनीमपि कश्चित्। न तत् शिष्टसम्मतम्। कथं युवती। यौतेरौणादिकात् शतृप्रत्ययादितोऽक्त्यर्थादिति ङीः। यद्वा यौतेः शत्रन्तात् ङीप्रत्यये योप्यम्।

## अनार्षे वृद्धेऽणिञोबहुस्वरगुरूपान्त्यस्यान्तस्यष्यः ॥२।४।७८॥

अनार्षे वृद्धे यावणिञौ तदन्तस्य बहुस्वरस्य गुरूपान्त्यस्य नाम्नोऽन्तस्य ष्य इत्यादेशः स्यात्। कुमुदस्येव गन्धोऽस्य कुमुदगन्धिः। तदपत्यं पौत्रादिस्त्री इञ्। तस्य ष्यादेशः। कौमुदगन्ध्या देवदत्या।

## गोश्चान्ते ह्रस्वोऽनंशिसमासे यो वहुव्रीहौ ॥२।४।९६॥

गौणस्याक्विपो गोशब्दस्य ङ्यापन्तस्य च नाम्नोऽन्ते वर्तमानस्य ह्रस्वः स्यात्। न चेदं शिसमासान्तं ईयसन्तबहुव्रीह्यन्तो वा स्यात्। चित्रा गावो यस्य स चित्रगुः। कौशाम्ब्या निर्गतो निष्कौशाम्बिः। गङ्गामतिक्रान्तोऽतिगङ्गः। अतिखट्वः। गौणस्येत्येव। सुगौः। किंगौः। राजकुमारी। परमब्रह्मबन्धूः। नक्षत्रमाला। अक्विप इत्येव। गामिच्छति क्यन् गव्यतीति क्विप्। गौः। ततः प्रियो गौरस्य प्रियगौः। कुमारीमिच्छतीति क्यन्। क्विप्। कुमारी। ततः प्रियश्चासौ कुमारी च प्रियकुमारी चैत्रः। गोश्चेति किम्? अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः। अतिचमूः। अन्त इति किम्? गोकुलम्। कुमारीप्रियः। कन्यापुरम्।

## ङ्यापो वहुलं नाम्नि ॥२।४।९९॥

ङ्यन्तस्यापन्तस्य च नाम्न उत्तरपदे परे संज्ञायां ह्रस्वः स्याद्बहुलम्। भरणिगुप्तः। रोहिणिमिश्रः। मणिदत्तः। शिलवहः। शिलप्रस्थः। गङ्गमहः। गङ्गदेवी। गङ्गादेवी। संज्ञायां किम्? नदीस्रोतः। गङ्गापादः। क्वचिन्न। नान्दीतूर्यम्।

## त्वे ॥२।४।१००॥

ङ्यापन्तस्य त्वे परे बहुलं ह्रस्वः स्यात्। रोहिणित्वम्। रोहिणीत्वम्। अजत्वम्। अजात्वम्।

## ङ्यादीदूतः के ॥२।४।१०४॥

ङीप्रत्ययस्याकारेकारोकाराणां च के प्रत्यये परे ह्रस्वः स्यात् । कुमारिका । खट्विका । सोमपिका । लक्ष्मिका ।

## न कचि ॥२।४।१०५॥

ङ्यादीदूतः कचि प्रत्यये परे ह्रस्वो न स्यात् । बहुकुमारीकः । बहुलोमपाकः । बहुब्रह्मबन्धूकः ।

## नवापः ॥२।४।१०६॥

आपः कचि परे ह्रस्वो वा स्यात् । बहुमालाकः । बहुमालकः । कजभावे । बहुमालः ।

इति स्त्रीप्रत्ययप्रकरणम् ।

---

## अथ विभक्त्यर्थप्रकरणम् ।

यात्तुपूज्य बपुषः सुरागता, ख्यातपाक्षि वचनं सुरागता ।
मन्मनस्यपि वचे सुरागता, विस्फूर्ति तदितरे सुरागता ॥ १ ॥

## क्रियाहेतुः कारकम् ॥२।१।१॥

क्रियायां हेतुः कारणं कर्मादिकारकसंज्ञम् । तत्र द्रव्याणां स्वपराश्रयसमवेतक्रियानिर्वर्तकं सामर्थ्यं शक्तिः । सा शक्तिः सहभूर्वाद्रव्यभाविनी क्रियाभवनकाले आविर्भवति । करोतीति कारकमित्यन्वर्थसंज्ञासमाश्रयणादनाश्रितव्यापारस्य हेत्वादेर्निमित्तमात्रेण कारकसंज्ञा न स्यात् ।

## स्वतन्त्रः कर्ता ॥२।१।२॥

क्रियाहेतुभूतो यः क्रियासिद्धावपरायत्ततया प्राधान्येन विवक्ष्यते स कारकविशेषः कर्ता स्यात् ।

## नाम्नः प्रथमैकद्विबहौ ॥२।२।३१॥

एकत्वद्वित्वबहुत्वविशिष्टेऽर्थे वर्तमानान्नाम्नः परा यथासंख्यं स्यौजस्लक्षणा प्रथमा विभक्तिः स्यात् । कर्मादिशक्तिषु द्वितीयादीनां विभक्तीनां विधास्यमानत्वादिह विशेषानभिधानाच्च परिशिष्टेऽर्थमात्रे प्रथमेति विज्ञायते । तत्र द्वितीयादिनिर्मुक्तः स्वार्थद्रव्यलिङ्गसंख्याशक्तिलक्षणः समग्रोऽसमग्रो वा नामार्थोऽर्थमात्रम् । तेषु शब्दस्यार्थेषु प्रवृत्तिनिमित्तं स्वरूपजातिगुणक्रियाद्रव्यसम्बन्धाविरूपं त्वतलादिप्रत्ययाभिधेयो भावो विशेषणं गुण इति व्याख्येयः स्वार्थः ।

—

सत्त्वभूतं विशेष्यं द्रव्यम्। सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥ पूर्वापरीभूतावयवा साध्यमानरूपा कृतिः क्रिया। यथाव्यवयवादिसंस्कारहेतुः शाब्दधर्मोऽर्थधर्मो वा लिङ्गम्। एकत्वादिसंख्या अर्थधर्मः। शक्तिः क्रियोत्पत्तिहेतुरित्यादि। समुच्चयो नामार्थः। डित्थः। डवित्थः। गौः। अश्वः। शुक्लः। कारकः। दण्डी। छत्री। इत्यादि। अलिङ्गस्ये स्वम्। अहम्। पञ्च। कति। अलिङ्गमसंख्यम्। उच्चैः। नीचैः। तदय वस्तुसंक्षेपः। आपन्नपदसामानाधिकरण्ये प्रथमैवार्थमात्रे चोपचरितमपि द्रोणो व्रीहिः। न चैकः द्वौ बहवः इत्यत्रोक्तार्थानामप्रयोगात् विभक्तेरप्राप्तिः। नियतमेकमित्यत्र विभक्त्या नाभिधीयते। तद्गतस्तु पदैकार्थं विभक्तिस्तत्र वर्तते ॥ २ ॥ एवमेको घट इति पदमिष्टा संख्या सिनाऽभिधेया। एक इति स्पष्टार्थम् विशेषणम्। तत्र विभक्तिस्तु साधुत्वार्थमिति व्याख्येयम्।

## आमन्त्र्ये ॥२।२।३२॥

प्रसिद्धस्तस्यैव यस्य किमप्याख्यातुमभिमुखीकरणमामन्त्रणं तद्विषय आमन्त्र्यः। तस्मिन्नर्थे वर्तमानाण्णाम्नः प्रथमा विभक्तिर्भवति। हे देव।

## कर्तुर्व्याप्यं कर्म ॥२।२।३॥

कर्त्रा क्रियया यद्विशेषेणाप्तुमिष्यते तत्कारकं व्याप्यं कर्मसंज्ञं स्यात्। ननु क्रियया कटादिजन्यं तत्तु क्रियाया अनन्तरभावि कार्यमस्तु परं न कारकं। क्रियाहेतुत्वाभावादिति चेन्न। कटादेरपि कथंचित्कारकमिष्टपाक्तिरूपकत्वेन च स्यात्। अन्यथा नासतो जायते भाव इति वस्तूत्पत्तिरेव दुरापा। असतो भवने वन्ध्यापुत्रादेरपि उत्पत्तिः प्रसज्येत। अतएव प्रत्यावी इव वैयाकरणसिद्धान्तकौमुदी विरच्यते इति प्रयोगः। तत्कर्म त्रेधा। निर्वर्त्यं विकार्यं प्राप्यं च। तत्र यदु यद्यत्स्याऽसत्प्रतिभास जायते जन्मना वा प्रकाश्यते तन्निर्वर्त्यम्। कटं करोति। पुत्रं प्रसूते। प्रकृत्युच्छेदेन गुणान्तराधानेन वा यद्विकृतिं प्राप्यते तद्विकार्यम्। काष्ठं दहति। कन्यामलंकुरुते। यत्र तु क्रियाकृतो विशेषो नाप्यते तत्प्राप्यम्। आदित्यं पश्यति। ग्रामं गच्छति। कर्तुः किम्? मापेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न तु कर्तुः। व्याप्यमिति किम्? पयसा ओदनं भुङ्क्ते। अत्र करणत्वं मा भूत्।

## वाऽकर्मणामणिक्कर्ता णौ ॥२।२।४॥

अविवक्षितकर्मणामकर्मकाणामणिगवस्थायां यः कर्ता स णौ सति वा कर्म स्यात्। पचति चैत्रः। पाचयति चैत्रं चैत्रेण वा।

## कर्मणि ॥२।२।४०॥

गौणात्नाम्नः कर्मणि कारके द्वितीया स्यात्। आख्यातपदेनासमानाधिकरणं गौणम्। उक्ते तु प्रथमैवेत्युक्तम्। उक्तं कृत्तद्धितसमासैः कारकादिकम्।

उक्तार्थानामप्रयोगात्प्रथमा नाममात्रात् ॥१॥ क्रियते कटः। कृतः पटः। पचति चैत्रः। खादीय चूर्णम्। स्नानीयो मुनिः। भयानको व्याघ्रः। आस्यतेऽस्मिन्नासनम्। गोमान्। शतेन क्रीतः शतिकः। समासे न। नत इन्द्राय नतेन्द्रः। इत्यादि। क्वचिन्निपातेनोक्तम्। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्। पुनः कर्म त्रिविधम्। इष्टमनिष्टमनुभयं च। यदर्थाय्तु क्रियाऽऽरभ्यते तदिष्टं घटादि। यद्दिष्टं प्राप्यते तदनिष्टं विषं भक्षयति। अहिं लङ्घयति। यत्र नेच्छा न च द्वेषः तदनुभयम्। ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीति। पुनस्तत्कर्म द्विविधम्। प्रधानेतरभेदात्। तत्र द्विकर्मकेषु दुहिभिक्षिरुधिप्रच्छिचिञ्ब्रूशास्वर्थेषु याचिजयत्यादिषु च स्यात्। गां दोग्धि पयः। पौरवं गां भिक्षते। गामवरुणद्धि व्रजम्। छात्रं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। शिष्यं धर्मं ब्रूते शास्ति वा। क्रुद्धं याचते शान्तिम्। याचिरिहानुनयार्थः। तेन भिक्षार्थाद्भेदः। गर्गान् शतं जयति। अमृतमम्भोधिं मथ्नाति। देवदत्तं मुष्णाति शतम्। नीहृकृषवहपचां तथा। ग्राममजां नयति हरति कर्षति वहति वा। तण्डुलानोदनं पचति। उभयोः कर्मणोर्यदि प्रधानेतरता यथा। आरभ्यते क्रिया यस्मै तदुद्देश्यं प्रधानकम् ॥१॥ तत्सिद्ध्यै क्रियया यत्तु व्याप्यतेऽन्यद्गुणादिकम्। तदप्रधानं गौणाख्यं गोपालो दोग्धि गां पयः ॥२॥ यदा पयोर्थी कर्त्रादेः प्रवृत्तिर्विवक्षिता। तदा मुख्यासन्निधानाद्गवादेरेव मुख्यता ॥३॥ गौणे कर्मणि दुह्यादीनां प्रत्ययो वक्ति कर्मजः। गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते ॥४॥ न्यादीनां कर्मणो मुख्यस्योक्तत्वे प्रत्ययो यथा। नीयते गौर्द्विजैर्ग्रामं भारो ग्राममपोह्यते ॥५॥

## कालाध्वभावदेशं वाऽकर्म चाऽकर्मणाम् ॥२।२।२३॥

कालो मुहूर्तादिः। अध्वा गन्तव्यः क्रोशादिः। भावः क्रिया गोदोहादिः। देशो जनपदग्रामनदीपर्वतादिः। अकर्मकाणां धातूनां प्रयोगे कालादिराधारः कर्मसंज्ञो वा स्यात्। अकर्म च, यत्रापि पक्षे कर्मसंज्ञा तथाऽकर्मसंज्ञापि वा स्यादित्यर्थः। मासमास्ते। मास आस्यते। क्रोशं स्वपिति। क्रोशः सुप्यते। गोदोहमास्ते। गोदोह आस्यते। कुरूनास्ते। कुरव आस्यन्ते। अविवक्षितकर्माणोऽप्यकर्मकाः। मासं पचति। मासः पच्यते। क्रोशमधीते। क्रोशोऽधीयते। कालादिरिति किम्? वाप्यायां शेते।

## गतिबोधाहारार्थशब्दकर्मनित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम् ॥२।२।५॥

गत्याद्यर्थानां शब्दकर्मणां नित्याकर्मकाणां च नीखाद्यदिह्वयतिशब्दायतिक्रन्दिवर्जितानां धातूनामणिगवस्थायां यः कर्ता स णौ सति कर्म स्यात्। गच्छति चैत्रो ग्रामम्। गमयति चैत्रं ग्रामं मैत्रः। जानाति शिष्यो धर्मम्। ज्ञापयति

शिष्यं धर्मं गुरुः। भुङ्क्ते पुत्र ओदनम् । भोजयति पुत्रमोदनं माता । शब्दः क्रिया व्याप्यं येषां ते शब्दकर्माण । मैत्रो ग्रन्थं जल्पति । जल्पयति मैत्रं ग्रन्थं वणिक् । शब्द कर्म—शृणोति शब्दं मैत्र । श्रावयति शब्दं मैत्रम् । नित्याकर्मक, आस्ते मैत्रः । आसयति मैत्रं चैत्रः । कालाध्वभावदेशैः सर्वेऽपि धातव सकर्मका एव । तेनान्यकर्मापेक्षया नित्याकर्मकत्वं ज्ञेयम् । गतीत्यादि किम्? पचत्योदनं चैत्रः । पाचयत्योदनं चैत्रेण मैत्र । अणिक्कर्तेति किम्? गमयति चैत्रो मैत्रम् । तमन्यः प्रयुङ्क्ते, गमयति चैत्रेण मैत्रं जिनदत्त । अनीखाद्यदीति किम्? नयति भारं चैत्रः । नाययति भारं चैत्रेण मैत्रः । खादयत्यन्नं मैत्रेण । आदयत्योदनं मैत्रेण । ह्वाययति चैत्रं मैत्रेण । शब्दाययति चैत्रं मैत्रेण । क्रन्दयति चैत्रं मैत्रेणेत्यादौ कर्मसंज्ञाप्रतिषेधात्स्वव्यापाराश्रयं कर्तृत्वमेव ।

## भक्षेर्हिंसायाम् ॥२।२।६॥

भक्षेर्हिंसार्थस्यैवाणिक्कर्ता णौ कर्म स्यात् । भक्षयन्ति सस्यं बलीवर्दाः । तान् प्रयुङ्क्ते, भक्षयति सस्यं बलीवर्दान् मैत्रः । हिंसायामिति किम्? भक्षयति पिण्डीं शिशुना । वनस्पतीनां सचेतनत्वाद्धिंसार्थः । पिण्ड्यां तु तदभावात् ।

## दृश्यभिवदोरात्मने ॥२।२।९॥

दृशेरभिपूर्वस्य वदतेश्चात्मनेपदविषयेऽणिक्कर्ता णौ कर्म वा स्यात्। पश्यन्ति भृत्या राजानम् । दर्शयते राजा भृत्यान् भृत्यैर्वा । अभिवदति शिष्यो गुरुम् । अभिवादयते गुरुः शिष्यं शिष्येण वा ।

## वहेः प्रवेयः॥२।२।७॥

प्रवीयते प्राजतिक्रियया व्याप्यते य स प्रवेयः । वहेरणिक्कर्ता णौ प्रवेयः । कर्मसंज्ञ स्यात । वाहयति रथं वाहान् सूत । प्रवेय इति किम्? वाहयति भारं मैत्रेण । भारं मैत्र प्रवेय ।

## हृक्रोर्नवा ॥२।२।८॥

हरतेः करोतेश्चाणिक्कर्ता णौ कर्म वा स्यात्। विहरति देशामाचार्यः । विहारयति देशामाचार्यमाचार्येण वा । कारयति कटं चैत्रं चैत्रेण वा ।

## अधेः शीङ्स्थास आधार ॥२।२॥

अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा ग्रामं चैत्रः ।

## वाभिनिविशः ॥२।२॥

अभिनीत्येतत्समुदायपूर्वस्य विशतेराधारः कर्म वा स्यात्। ग्राममभिनिवि-

शते । पर्वतमभिनिविशते । ग्रामोऽभिनिविश्यते । ग्रामोऽभिनिविष्टः । व्यवस्थितविभाषेयम् । क्वचित्कर्मसंज्ञैव क्वचिदाधारसंज्ञैव भवति । कल्याणेऽभिनिविशते ।

## उपान्वध्याङ्वसः ॥२।२।२१॥

उप अनु अधि आङ्भिर्विशिष्टस्य वसतेराधारः कर्मसंज्ञो भवति । उपवसति अनुवसति अधिवसति आवसति ग्रामं चैत्रः । अन्वादिसाहचर्यादुपस्य स्थानार्थस्यैव ग्रहणं न पुनरभोजनार्थस्य । ग्रामे उपवसति । भोजनादिनिवृत्तिं कुरुत इत्यर्थः ।

## सर्वोभयाभिपरिणा तसा ॥२।२।३५॥

सर्वादिभिस्तसन्तैर्युक्ताद्गौणान्नाम्नो द्वितीया स्यान्न षष्ठी । सर्वतो ग्रामं वनानि । एवमुभयत इत्यादि ।

## द्वित्वेऽधोऽध्युपरिभिः ॥२।२।३४॥

एभिर्युक्ताद्गौणान्नाम्नो द्वितीया एषामेव द्वित्वे सति स्यात् । अधोऽधो ग्रामं नदी । उपर्युपरि ग्रामं पक्षिणः । अध्यधिग्रामं क्षेत्राणि ।

## गौणात्समयानिकषाहाधिगन्तराऽन्तरेणातियेनतेनैर्द्वितीया ॥२।२।३३॥

समयाद्रिं वटः । निकषाद्रिं वटः । हा मैत्र व्याधिर्वर्धते । धिक् मूर्खम् । अन्तरा निषधं नीलं च मेरुः । अन्तरेण धर्मं न सुखम् । अतिवृद्धं कुरून् महद् बलम् । कुरूनतिक्रमेण वृद्धमित्यर्थः । येन पश्चिमां गतस्तेन पश्चिमां नीतः ।

## हेतुसहार्थेऽनुना ॥२।२।३५॥

हेतुर्जनकः । सहार्थस्तुल्ययोगो विद्यमानता च । एतद्विषयोऽपि सहार्थस्तयोर्वर्तमानादनुना युक्ताद्गौणान्नाम्नो द्वितीया स्यात् । जिनजन्मोत्सवमन्वागमन् सुराः । तेन हेतुनेत्यर्थः । पर्वतमन्ववसिता सेना । तेन सह सम्बद्धेत्यर्थः । पराऽपि हेतौ तृतीयाऽनेन बाध्यते ।

## उत्कृष्टेऽनूपेन ॥२।२।३९॥

उत्कृष्टेऽर्थे वर्तमानादनूपाभ्यां युक्ताद्गौणान्नाम्नो द्वितीया स्यात् । अनुसिद्धसेनं कवयः । अनुजिनं देवाः । उपोमास्वातिं संग्रहीतारः । तस्मादन्ये हीना इत्यर्थः ।

## भागिनि च प्रतिपर्यनुभिः ॥२।२।३७॥

वीप्स्यमानोंऽशो भागस्तत्स्वामी भागी । तत्र लक्षणादिषु चार्थेषु वर्त-

भामाद्वीणामाप्त' प्रतिपर्यनुभिर्युक्ताद्वितीया स्यात् । यदत्र मां प्रति मां परि मामनु स्यात् । योऽत्र मम भागः स्यात्स दीयतामित्यर्थः । लक्षणे, वृक्षं प्रति वृक्ष परि वृक्षमनु वा विद्योतते विद्युत् । वीप्सायाम्, वृक्षं वृक्षं प्रति सेचनम् । वृक्ष वृक्ष परिसेचनम् । वृक्षं वृक्षमनु भर' सिंचत' । इत्थंभूते, साधुर्देवदत्तो मातरं प्रति परि अनु वा ।

## लक्षणवीप्स्येत्थंभूतेष्वभिना ॥२।२।३६॥

लक्षणं चिह्नम् । अवयवशः समुदायस्य क्रियाविना साकल्येन प्राप्तीच्छा वीप्सा, तत्कर्म वीप्स्यम् । केनचिद्विवक्षितेन विशेषेण भाव इत्थंभाव' । तद्वि यय इत्थंभूत । एष्वर्थेषु वर्तमानाद्वीणाप्राप्तोऽभिना युक्ताद्वितीया स्यात् । वृक्षमभि विद्योतते विद्युत् । वृक्षंवृक्षमभिसेक' । साधुर्देवदत्तो मातरमभि । लक्षणादिष्विति किम्? यदत्र ममाभि स्यात्तद्दीयताम् । पूजार्थे स्वत्योर्नोपसर्ग तिलक्षण संज्ञाद्रूपम् तेन । सुसिक्त भवता । सुस्तुत भवता इत्यत्रानुपसर्गत्वान्न पत्वम् । पूजायां किम्? सुषिक्त किं तवाऽत्र? क्षयोऽयम् ।

## गतार्थोवधिपरी ॥२।२॥

अभ्यागच्छति । आगच्छत्यधि । पर्यागच्छति । आगच्छतिपरि । अत्र न धातोः प्राक्त्वनियम' । यदर्थं क्रिया तमितिरिच्यते क्रियायां प्रवृत्तिरतिक्रम' । अतिसिक्त भवता । अतिक्रमण स्तुतिः सेकस्य कृत इत्यर्थ' । अत्र न पत्वम् । अतिसिक्तस्वेत्यत्र समासाऽभावे यथावेदो न ।

## क्रियाविशेषणात् ॥२।२।४१॥

क्रियाया यद्विशेषण तद्वाचिनो गौणाप्राप्तो द्वितीया स्यात् । मृदु पचति । मन्द गच्छति । पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु द्योत्येष्वपिर्नोपसर्गसत इति वाच्यम् ॥ सर्पिषोऽपि स्यात् । सम्भावनायां सप्तमी वक्ष्यते । तस्या एव विषयरूपक्रियाया' कर्तुर्गौरभ्यनुज्ञ दौर्लभ्य द्योतयत्यपिशब्द' । स्यादित्यनेन सम्बध्यते । इत्यनुपसर्गत्वान्न षत्वम् । सर्पिष इति षष्ठी तु अपिशब्देन गम्यवि न्दोरवयवावयविभावसम्बन्धे । इयमेव अपिशब्दस्य पदार्थद्योतकता नाम । धातिभद्रानं सम्भावनम् । अन्ववसर्ग' कामचारानुज्ञा । गर्हा क्षप' । समुच्चयो द्विव्यादिक्रियादिभयोग' । अपि स्तुवीत जिनम् । अपि स्तुष्व स्तुष्व । धिग्देव दत्ताम् अपि स्तुयाद्वृषलम् । अपि सिञ्च । अपि स्तुहि ।

## कालाध्वनोर्व्याप्तौ ॥२।२।४२॥

इन सम्पपिना द्रव्यगुणक्रियारूपेण कार्त्स्न्येन सम्बन्धो व्याप्तिरत्यन्तसं योगः । तस्यां योग्यायां कालाध्वभ्यां च वर्तमानाद्वीणाप्राप्तो द्वितीया स्यात् । मासं गुडधानाः । मास कल्याणी । माममधीत । क्रोशं पवत' । क्रोशं कुटा

भवी। क्रोशमधीते। व्यासाविति किम्? मासस्य द्विरधीते। क्रोशस्य क्रोशो वैकदेशे गिरिः।

## साधकतमं करणम् ॥२।२।२४॥

क्रियासिद्धावव्यवधानेन प्रकृष्टोपकारक विवक्षित तत्कारक करणसंज्ञ स्यात्। काष्ठैः स्थाल्यां पचति। दात्रेण लुनाति। तमग्रहणमपादानादिसंज्ञाविधौ तरतमयोगो नास्तीतिज्ञापनार्थम्। तेन कुशूलात्पतति। गङ्गायां घोषः।

## हेतुकर्तृकरणेत्थंभूतलक्षणे ॥२।२।४४॥

फलसाधनयोग्य पदार्थो हेतु'। इत्थं कञ्चित्प्रकारं भूत आपन्न इत्थम्भूतः, स लक्ष्यते येन स इत्थम्भूतलक्षणः। हेत्वादिष्वर्थेषु गौणान्नाम्नस्तृतीया स्यात्। धनेन कुलम्। चैत्रेण कृतम्। दात्रेण लुनाति। इत्थम्भूतलक्षणेऽपि, भवान् कम ण्डलुना छात्रमद्राक्षीत्।

## यद्भेदैस्तद्वदाख्या ॥२।२।४५॥

यस्य भेदिनः प्रकारवतो भेदैः प्रकारैर्विशेषैस्तद्वतोऽर्थस्य प्रसिद्धि' स्यात्ततोऽभिमो गौणान्नाम्नस्तृतीया स्यात्। प्रकृत्या चारुः। अक्ष्णा काण'। गोत्रेण गार्ग्यः। प्रायेण वैयाकरणः। तद्वदिति किम्? अक्षि काण पश्य। आख्येति किम्? अक्ष्णा दीर्घ इति न स्यात्। तथाऽप्रसिद्धेः।

## व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥२।२।५०॥

व्याप्ये वर्तमानेभ्यो द्विद्रोणादिभ्यो वीप्सायां तृतीया वा स्यात्। द्विद्रोणेन धान्य क्रीणाति। द्विद्रोण द्विद्रोण क्रीणाति वा।

## करणं च ॥२।२।१९॥

दीव्यतेः करणं कर्मसंज्ञ च। चकारात्संज्ञाद्वयसमावेशः। अक्षैरक्षान्वा दीव्यति।

## सिद्धौ तृतीया ॥२।२।४३॥

फलप्राप्तौ योत्यायां कालाध्वनोर्व्याप्तौ गौणान्नाम्नस्तृतीया स्यात्। मासेन मासाभ्यां मासैर्वाऽऽवश्यकमधीतम्। क्रोशेन प्राकृतमधीतम्। सिद्धाविति किम्? मासमधीत' परमाचारो नायात'।

## सहार्थे ॥२।२।४५॥

सहार्थस्तुल्ययोगो विद्यमानता च। तस्मिन् गम्ये गौणान्नाम्नस्तृतीया स्यात्। पुत्रेण सहाऽऽगत'। पुत्रेण सह स्थूलो गोमान्। एव सार्धं समं योगेऽपि। अर्थान्नम्येऽपि सहार्थे। वृद्धो यूना।

## समोज्ञोऽस्मृतौ वा ॥२।२।५१॥

अस्मृतौ वर्तमानस्य सम्पूर्वस्य जानातेः कर्मणि वा तृतीया स्यात्। मात्रा सजानीते मातरं वा। सम इति किम्? मातरं जानाति। ज्ञ इति किम्? मातरं संवेत्ति। अस्मृताविति किम्? मातरं सजानीते स्मरतीत्यर्थः।

## दामः सम्प्रदानेऽधर्म्ये आत्मने च ॥२।२।५२॥

सम्पूर्वस्य दामः सम्प्रदानेऽधर्म्ये वर्तमानाद्दाम्नस्तृतीया स्यात्तत्सन्नियोगे च दाम आत्मनेपदमेव। दास्या सम्प्रयच्छते कामी। धर्म्ये तु पत्न्यै सम्प्रयच्छति।

## कृताद्यैः ॥२।२।४७॥

एभिर्निषेधार्थैर्युक्तात्तृतीया स्यात्। कृतं तेन। अलं प्रसङ्गेन। किं गतेन।

## कर्माभिप्रेयः सम्प्रदानम् ॥२।२।२५॥

कर्मणा क्रियया वा करणरूपेण यमभिप्रैति श्रद्धानुग्रहादिकाम्यया यमभिसम्प्राप्ति स कर्माभिप्रेयः कारकं सम्प्रदानसंज्ञं स्यात्।

## चतुर्थी सम्प्रदाने ॥२।२।५३॥

गौणात्कारकाच्चतुर्थी स्यात्। देवाय बलिं ददाति। द्विजाय गां दत्ते। शिष्याय धर्ममुपदिशति। राज्ञे कार्यमावेदयति। क्रियाभिप्रेयः। पत्ये शेते। युद्धाय सन्नह्यते। देवेभ्यो नमति।

## रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥२।२।५५॥

रुच्यर्थैः क्लृप्यर्थैर्धारिणा च धातुना योगे यथासंख्यं प्रेये विकारे उत्तमर्णे च वर्तमानाद्गौणात्कारकाच्चतुर्थी स्यात्। मैत्राय रोचते धर्मः। मुनये स्वदते दधि। तदभिलाषमुत्पादयतीत्यर्थः। प्रेय इति किम्? चैत्राय रोचते मोदको माधुर्येण। अत्र माधुर्यस्याप्रेयत्वान्न चतुर्थी। क्लृप्यर्थैर्विकारे मूत्राय कल्पते यवागूः। धारिण्युत्तमर्णे, चैत्राय शतं धारयति। उत्तमर्णो धनिकः।

## श्लाघह्नुस्थाशपा प्रयोज्ये ॥२।२।६०॥

श्लाघादिभिर्धातुभिर्योगे ज्ञाप्ये प्रयोज्येऽर्थे वर्तमानाद्गौणात्कारकाच्चतुर्थी स्यात्। मैत्राय श्लाघते ह्नुते तिष्ठते शपते वा। श्लाघादि कुर्वाणः स्वं परं वा ज्ञाप्यं जानन्तं मैत्रं प्रयोजयतीत्यर्थः।

## स्पृहेर्व्याप्यं वा ॥२।२।२६॥

सम्प्रदानम्॥ पुष्पेभ्यः स्पृहयति। पुष्पाणि वा स्पृहयति। व्याप्यमिति किम्? पुष्पेभ्यः स्पृहयति वने। अत्राधारस्य मा भूत्।

## क्रुधद्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः ॥२।२।२७॥

क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स सम्प्रदानं स्यात् । मैत्राय क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा ॥ कोप इति किम्? भार्यामीर्ष्यति । मैनामन्योऽद्राक्षीदिति ॥ कोपोऽमर्षः । द्रोहोऽपचिकीर्षा । अपकार इत्यन्ये । ईर्ष्या परसम्पत्त्यक्षमा । असूया गुणिषु दोषाविष्करणम् ।

## नोपसर्गात्क्रुधिद्रुहा ॥२।२।२८॥

उपसर्गात्पराभ्यां क्रुधिद्रुहिभ्यां योगे यं प्रति कोपस्तत्कारकं सम्प्रदानं न स्यात् । मैत्रमभिक्रुध्यति । मैत्रमभिद्रुह्यति वा । सोपसर्गौ सकर्मकाविति द्वितीया ।

## यद्वीक्ष्ये राधीक्षी ॥२।२।५८॥

वीक्ष्यं विमतिपूर्वं निरूपणीयम् । विप्रश्नविषयः । तद्विषया क्रियाऽपि वीक्ष्यम् । यत्सम्बन्धिनि वीक्ष्ये राध्यतिरीक्षतिश्च वर्तते तस्मिन् वर्तमानाद्गौणान्नाम्नः सामर्थ्याद्राधिवीक्षिभ्यामेव युक्ताच्चतुर्थी स्यात् । मैत्राय राध्यति ईक्षते वा । तस्य दैवं पर्यालोचयतीत्यर्थः ।

## प्रत्याङः श्रुवाऽर्थिनि ॥२।२।५६॥

प्रत्याङ्भ्यां परेण शृणोतिना युक्तादभिलाषुके वर्तमानाद्गौणान्नाम्नश्चतुर्थी स्यात् । द्विजाय गां प्रतिशृणोति । आशृणोति । याचितोऽयाचितो वा प्रतिजानीते ।

## प्रत्यनोर्गृणाऽऽख्यातरि ॥२।२।५७॥

आभ्यां परेण गृणातिना योगे आख्यातरि वर्तमानाद्गौणान्नाम्नश्चतुर्थी स्यात् । आचार्याय प्रतिगृणाति । आचार्यायानुगृणाति । आचार्योक्तमनुवदति । प्रशंसन्तं वा प्रोत्साहयतीत्यर्थः ।

## परिक्रयणे ॥२।२।६१॥

नियतकालं मूल्यादिना स्वीकरणेऽर्थे करणे वर्तमानाद्गौणान्नाम्नश्चतुर्थी वा स्यात् । शतेन शताय वा परिक्रीतः ।

## तादर्थ्ये ॥२।२।५४॥

किंचिद्वस्तु सम्पादयितुं यत्प्रवृत्तं तत्तादर्थ्यम् । तस्य भावे तादर्थ्ये सम्बन्धविशेषे द्योत्ये नाम्नश्चतुर्थी स्यात् । पद्यमपाय' । 'संयमाय श्रुतं धत्ते नरो धर्माय संयमम् । धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ १ ॥'

## उत्पातेन ज्ञाप्ये ॥२।२।५९॥

चतुर्थी । 'वाताय कपिला विद्युत्' ।

## हितसुखाभ्याम् ॥२।२।६५॥

योगे चतुर्थी वा । आतुराय आतुरस्य वा हितम् । मैत्राय मैत्रस्य वा सुखम् ।

## तुमोर्थो भाववचनात् ॥२।२।६१॥

क्रियायां क्रियार्थायां यस्तुम् वक्ष्यते तस्यार्थे ये भावे घञादयो विधास्यन्ते तदन्तान्नाम्नश्चतुर्थी स्यात् । पाकाय व्रजति । पक्तुं व्रजतीत्यर्थः । हेतुवृत्ती पाद्येपेयस्यापवादः ।

## गम्यस्याप्ये ॥२।२।६२॥

यस्यार्थो गम्यते न च शब्दः प्रयुज्यते स गम्यः । तस्य तुमः कर्मणि चतुर्थी स्यात् । द्वितीयापवादः । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ।

## शक्तार्थवषट्नमःस्वस्तिस्वाहास्वधाभिः ॥२।२।६९॥

एभिर्योगे चतुर्थी स्यात् । शक्तो मैत्रश्चैत्राय । वषडग्नये । नमोऽर्हद्भ्यः । स्वस्ति श्रीवीराय । अग्नये स्वाहा । पितृभ्यः स्वधा । नमस्कृत्य देवानित्यत्र जहत्स्वार्थवृत्तिपक्षाश्रयणात्कर्मणि द्वितीया । नमस्यति जिनानित्यादिवत् । नमस्कारेण क्रियाविशेषेण देवानित्यस्य योगो न पुनर्नमसा केवलेन । नमस्यतीत्यत्रापि नमस्य धातुना योगो न तु नमसा । स्वस्तिशब्दः क्षेमार्थः । तद्योगे आशिष्यपि परत्वाच्चतुर्थ्येव । स्वस्ति सङ्घाय भूयात् ।

## मन्यस्यानावादिभ्योऽतिकुत्सने ॥२।२।६२॥

मन्यतेर्व्याप्ये यत्नामानावादिभ्यश्चतुर्थी वा स्यात् तिरस्कारे । न त्वां तृणाय तृणं वा मन्ये । दिवादिरयं न तु तनादिः । न त्वां तृणं मन्वे । अनावादिभ्य इति किम्? न त्वां नावं मन्ये । नौ काक अन्न शुक शृगाल एते नावादयः ।

## गतेर्नवाऽनाप्ते ॥२।२।६३॥

गत्यर्थकर्मणि वा चतुर्थी स्यात् । ग्रामं गच्छति ग्रामाय वा । गतेरिति किम्? स्त्रियं गच्छति । मेरुं गच्छति । अत्र ज्ञानार्थो गमिः । अनाप्ते इति किम्? पन्थानं गच्छति । कृद्योगे तु परत्वात्षष्ठ्येव । ग्रामस्य गन्ता । द्वितीयैवेत्यन्ये । ग्रामं गन्ता । चतुर्थी चेत्यन्ये । ग्रामं गन्ता । ग्रामाय गन्तेति । यदा उन्मार्गो मार्ग एवाक्रमिष्यते तदा चतुर्थी स्यात् । उत्पथेन पन्थानं पथे वा गच्छति ।

## अपायेऽवधिरपादानम् ॥२।२।२९॥

सावधिकं गमनमपायः तत्र यदवधिभूतमपायेनाधिष्ठितं तत्कारकमपादानं स्यात् ।

## पञ्चम्यपादाने ॥२।२।६९॥

ग्रामादायाति। धावतोऽश्वात्पतति। कारक किम्? वृक्षस्य पर्णं पतति। कायिकापायवद् बुद्धिजन्मोऽप्यपाय एव। अधर्माज्जुगुप्सते विरमति वा। धर्मात्प्रमाद्यति। चौरेभ्यो बिभेति उद्विजते वा। त्राणार्थयोगेऽपि। यवेभ्यो गां रक्षति निवारयति वा। अन्तर्धौ। उपाध्यायादन्तर्धत्ते। जनिकर्तुः प्रकृतौ। बीजादङ्कुरो जायते।

## आख्यातर्युपयोगे ॥२।२।७३॥

आख्यातरि वक्तरि उपयोगे नियमपूर्वकविद्याग्रहणविषये गौणान्नाम्न पञ्चमी स्यात्। उपाध्यायादधीते। उपयोगे किम्? नटस्य गाथां शृणोति।

## गम्ययपः कर्माधारे ॥२।२।७४॥

प्रयोगेऽपठितयबादेशस्याध्याहरणीयस्य यत्कर्म आधारश्च तद्वाचिनो गौणान्नाम्नः पञ्चमी स्यात्। द्वितीयासप्तम्यपवादः। प्रासादात्प्रेक्षते। आसनाद्विलोकते। प्रासादमारुह्यासने चोपविश्य प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः। गम्यमानाऽपि क्रिया कारकविभक्तेर्निमित्तम्। कस्मात्त्वमिति केनापि पृष्टे प्राप्त इति क्रिया गम्या। तदुत्तरं नद्या इति। अत्रापि प्राप्त इत्येव योग्यम्।

## गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ॥२।२।१०७॥

यतोऽवधेर्विवक्षिताध्वनोऽन्तोऽवसानं भावलक्षणं तस्याऽध्वनोऽन्तेनैकार्थ्यं वा स्यात्। तद्विभक्तिकत्वमाप्नुवतीत्यर्थः। गतशब्दे गम्यमाने। लोकमध्यात् लोकान्तः सप्तरज्जवः। वनाद् ग्रामो योजने योजनं वा। अध्वन इति किम्? कार्त्तिक्या आग्रहायणी मासे।

## प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः ॥२।२।७५॥

प्रभृत्यर्थैरन्यार्थैर्दिक्शब्दैर्बहिस् आरात् इतर इत्येतैश्च शब्दैर्युक्ताद्गौणान्नाम्नः पञ्चमी स्यात्। कार्त्तिक्याः प्रभृति। ग्रीष्मादारभ्य। अन्यो मैत्रात्। भिन्नश्चैत्रात्। ग्रामात्पूर्वस्यां दिशि वसति देशोऽपि दिक्शब्देन योगे। पूर्व उज्जयिन्या गोनर्दः। पश्चिमो रामाद्युधिष्ठिरः। पूर्वश्चैत्रात्फाल्गुनः। कोशाक्षस्य विष्यति। बहिर्ग्रामाद्वटः। आराद्ग्रामात्क्षेत्रम्। समीप इत्यर्थः। आराच्चैत्रात्पीठम्। दूर इत्यर्थः। आरादित्यस्य प्रयोगे नित्यं पञ्चमी। इतरश्चैत्रादस्य द्वितीयो मैत्रादिरित्यर्थः। इतरशब्दोऽत्र द्वयोरुपलक्षितयोर्मध्यादन्यतरवचनः। तेनान्यार्थाद्भेदः।

## आङावधौ ॥२।२।७०॥

अवधिर्मर्यादाऽभिविधिरपि। तद्विषय इति तस्यापि ग्रहणम्। अवधौ

वर्तमानाद्वाऽऽङा युक्ताद्गौणान्नाम्नः पञ्चमी । आपाटलिपुत्राद्वृष्टो मेघः । पाटलिपुत्रं मर्यादीकृत्य तदभिव्याप्य वा वृष्ट इत्यर्थः ।

## पर्यपाभ्यां वर्ज्ये ॥२।२।७१॥

वर्जनीयार्थाभ्यां युक्ताद्गौणान्नाम्नः पञ्चमी स्यात् । परि ग्रामाद्वृष्टो मेघः । ग्रामं वर्जयित्वेत्यर्थः । अपग्रामाद् गतश्चौरः । ग्रामं त्यक्त्वा गत इत्यर्थः । वर्ज्ये इति किम्? अपशब्दो मैत्रस्य ।

## यतः प्रतिनिधिप्रतिदाने प्रतिना ॥२।२।७२॥

प्रतिनिधिर्मुख्यसदृशोऽर्थः । प्रतिदानं गृहीतस्य प्रत्यर्पणं विशोधनमिति यावत् । ते यतः स्यातां तत्र वर्तमानाद्गौणान्नाम्नः पञ्चमी स्यात् । प्रद्युम्नो वासुदेवात्प्रति । कृष्णतुल्य इत्यर्थः । तिलेभ्यः प्रति माषान् तस्मै प्रयच्छति । तिलान् ज्ञात्वा माषान् दत्ते इत्यर्थः ।

## ऋणाद्धेतोः ॥२।२।७६॥

हेतुभूतऋणवाचिनो गौणान्नाम्नः पञ्चमी स्यात् । तृतीयापवादः । शताद्बद्धः । हेतोरिति किम्? शतेन बन्धितः । शतमत्र कर्तृपदम् ।

## गुणादस्त्रियां न वा ॥२।२।७७॥

गुणहेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्यात् जाड्येन वा बद्धः । गुणेति किम्? धनेन कुलम् । अस्त्रियां किम्? बुद्ध्या मुक्तः । अस्त्यग्निर्धूमात् । सर्वं अनेकान्तात्मकं सत्त्वान्यथानुपपत्तेः इत्यादौ । नात्र धूमादिर्हेतुः किन्तु तज्ज्ञानमस्य । पञ्चमी तत्र गम्ययपः कर्माधारे इति । धूमादिकमुपलभ्यास्यादि' प्रतिपत्तव्यः ।

## पृथग् नाना पञ्चमी च ॥२।२।११३ ॥

आभ्यां योगे गौणान्नाम्नः पञ्चमी तृतीया च स्यात् । पृथक् मैत्रात् । मैत्रेण वा । नाना मैत्रात् मैत्रेण वा । यदा पृथग्नानाशब्दावन्यार्थौ तदा प्रभृत्यादि सूत्रेण पञ्चमी सिद्धा । तृतीयार्थं तु वचनम् । यदा त्वसहायार्थौ तदा पञ्चमीविधिः ।

## विना ते तृतीया च ॥२।२।११५॥

विनायोगे गौणान्नाम्नो द्वितीयापञ्चम्यौ तृतीया च स्युः । विना धर्मेण धर्माद् धर्मं वा कुतः सुखम्?

## ऋते द्वितीया च ॥२।२।११४॥

ऋते इत्यव्ययं वर्जने । तद्योगे नाम्नो द्वितीया पञ्चमी च स्यात् । ऋते धर्मात् धनम् । ऋते ज्ञानान्न मुक्तिः । चित्रं यथाश्रयमृते । ममाङ्गं विक्रियते रागमृते ।

## स्तोकाल्पकृच्छ्रकतिपयादसत्त्वेकरणे ॥२।२।७९॥

एभ्योऽद्रव्यवचनेभ्य करणेऽर्थे पञ्चमी वा स्यात्। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः। करणत्वात्तृतीया।

## आरादर्थैः ॥२।२।७८॥

दूरार्थैरन्तिकार्थैश्च योगे गौणान्नाम्नः पञ्चमी वा स्यात्। दूरं विप्रकृष्टं वा ग्रामस्य ग्रामाद्वा वनम्।

## असत्त्वारादर्थाट्टाङसिङ्यम् ॥२।२।१२०॥

अद्रव्यवाचिनो दूरार्थादन्तिकार्थाच्च टा ङसि ङि अम् एते प्रत्ययाः स्युः। नामार्थमात्रे विधिरयम्। दूरेण दूरात् दूरे दूरं वा पर्वतः। एवं ग्रामाद् ग्रामस्य वाऽन्तिकेन अन्तिकात् अन्तिके अन्तिकं वाऽऽगतः। द्रव्यवचने तु दूरः पन्थाः।

## शेषे ॥२।२।८३॥

कर्मादिभ्योऽन्यः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र वर्तमानाद्गौणान्नाम्नः षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनामपि कारकाणां सम्बन्धमात्रविवक्षया षष्ठी भवत्येव। माषाणामश्नीयात्। सुभाषितस्य शिक्षते। सतां गतम्। न ते सुखस्य जानते। धेतेऽर्हतश्चरणयोः। वृक्षस्य पर्णं पतति। महतां विभाषते। कर्मादिकस्य सतोऽप्यविवक्षा। कृष्णशुक्लपक्षयोश्च द्रव्यस्य प्रभाया इव। पञ्चा अनुचरा कन्या इत्यादिवत्।

## हेत्वर्थैस्तृतीयाद्याः ॥२।२।११८॥

हेतुर्निमित्तं कारणमिति। एतदर्थैः शब्दैर्युक्तात्तैरेव समानाधिकरणाद्गौणान्नाम्नस्तृतीयाद्या विभक्तयः स्युः। धनेन हेतुना। धनाय हेतवे। धनाद्धेतोः। धनस्य हेतोः। धने हेतौ वसति। एवं निमित्तकारणशब्दाभ्यामप्युदाहरणीयम्।

## सर्वादेः सर्वाः ॥२।२।११९॥

हेत्वर्थैर्युक्तात्समानाधिकरणात्सर्वादेर्गौणान्नाम्नः सर्वा विभक्तयः स्युः। को हेतुर्वसति चैत्रः। एवं कं हेतुम्। केन हेतुना। कस्मै हेतवे। कस्माद्धेतोः। कस्य हेतोः। कस्मिन् हेतौ वसति चैत्रः।

## रिरिष्टात्स्तादस्तादसतसाता ॥२।२।८२॥

रिरिष्टात् स्तात् अस्तात् अस् अतस् आत् एतत्प्रत्ययान्तैर्युक्ताद्गौणान्नाम्नः षष्ठी स्यात्। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य। परस्ताद् ग्रामस्य। अपरस्ताद् वृक्षस्य। पुरस्ताद्विहारस्य। एवम् अधस्तात्। अधस्तात्। असप्रत्यये पुरो

ग्रामस्य। अतसि, दक्षिणतो ग्रामस्य। आतिप्रत्यये, अधराद्ग्रामस्य। दक्षिणाद् ग्रामस्य। पश्चाद्वीप्रस्य। पञ्चम्यपवादो योगः।

## द्वितीयाषष्ठ्यावेनेनानञ्चेः ॥२।२।७७॥

एनेन योगे द्वितीयाषष्ठ्यौ, न चेत्सोऽञ्चे परो विहितो भवति। दक्षिणेन ग्रामं ग्रामस्य वा वसति। एवमुत्तरेण परेण ग्रामं ग्रामस्य वा वसति। अनञ्चेरिति किम्? प्राग् ग्रामात्।

## अज्ञाने ज्ञः षष्ठी ॥२।२।८०॥

अज्ञानेऽर्थे वर्तमानस्य जानाते सम्बन्धिनि करणे वर्तमानाद्गौणान्नाम्नः षष्ठी स्यात्। सर्पिषो जानीते। सर्पिषा करणभूतेन ज्ञानम्। अत्र ज्ञाधातुः प्रवृत्त्यर्थः।

## स्मृत्यर्थदयेशः ॥२।२।११॥

एषामाप्यं कर्म वा स्यात्। मातुः स्मरति। सर्पिषो दयते। लोकानामीष्टे। पक्षे द्वितीया। मातरं स्मरति। सर्पिर्दयते। लोकानीष्टे।

## कृगः प्रतियत्ने ॥२।२।१२॥

पुनर्यत्नः प्रतियत्नो गुणाधानम्। तत्र कृगो व्याप्यं कर्म वा स्यात्। एधो दकस्योपस्कुरुते। एधोदकं वा।

## रुजार्थस्याज्वरिसन्तापेर्भावे कर्तरि ॥२।२।१३॥

भावकर्तृकाणां ज्वरिसन्तापिवर्जरुजार्थानां व्याप्यं कर्म वा। चौरस्य चौरं वा रुजति व्यथयति पीडयति वा रोगः। भाव इति किम्? मैत्रं रुजति श्लेष्मा। श्लेष्मा द्रव्यं न भावः। रोगो व्याधिरामय इत्यादयो भावरूपाः कर्तारः।

## नाथः ॥२।२।१०॥

आशीरर्थस्य नाथतर्व्याप्यं कर्म वा स्यात्। सर्पिषो नाथते। सर्पिर्नाथते वा। सर्पिर्मे भूयादित्याशास्त इत्यर्थः। आत्मनेपदमस्याशिषि, तदभावे पुत्रमुपनाथति पाठाय। उपयाचते इत्यर्थः।

## जासनाटक्राथपिषो हिंसायाम् ॥२।२।१४॥

हिंसार्थानामेषां व्याप्यं कर्म वा स्यात्। जसण् ताडने चुरादिः। भ्रम पिम जस मदण हिंसायाम्। अयमपि तथा। चौरस्य चौरं वोज्जासयति। नटण् अव स्यन्दने न तु णट नृत्तौ। चौरस्योन्नाटयति। क्राथियेटादिः। चौरस्योत्क्राथयति। क्राथेः कर्मसंज्ञायां चौरमुत्क्राथयतीति हूस्वः। चौरस्य पिनष्टि। हिंसायामिति किम्? धीरं धनेनोज्जासयति मोक्षयतीत्यर्थः।

## निप्रेभ्यो घ्नः ॥२।२।११॥

समस्तव्यस्तविपर्यस्तनिप्रपूर्वस्य हन्तेर्व्याप्यं कर्म वा स्यात्। चौरस्य निहन्ति। प्रहन्ति। निप्रहन्ति प्रणिहन्ति वा। कर्मत्वविवक्षायां द्वितीया। चौरं निहन्तीत्यादि।

## विनिमेयद्यूतपणंपणव्यवह्रोः ॥२।२।१६॥

क्रयविक्रेयोऽर्थो विनिमेयः। द्यूतपणो द्यूतजेयम्। तौ पणतेर्धातोर्व्यवपूर्वस्य हरतेश्च सम्बन्धिनौ कर्मसंज्ञौ वा स्याताम्। शतस्य पणायति। दशानां व्यवहरति। पक्षे शतं पणायति। दश व्यवहरति। विनिमेयद्यूतपणमिति किम्? साधून् पणायति स्तौतीत्यर्थः। शलाका व्यवहरति। विगणयन् गोपायतीत्यर्थः।

## न ॥२।२।१८॥

विनिमेयद्यूतपणौ दिवो व्याप्यौ कर्मसंज्ञौ न स्याताम्। शतस्य दीव्यति।

## उपसर्गाद्दिवः ॥२।२।१७॥

उपसर्गात्परस्य दिवो व्याप्यौ विनिमेयद्यूतपणौ वा कर्मसंज्ञौ स्तः। शतस्य शतं वा प्रदीव्यति।

## नवा सुजर्थैः काले ॥२।२।९६॥

सुजोऽर्थे वारलक्षणे प्रयुज्यमाने कालेऽधिकरणे सप्तमी वा स्यात्। पक्षे शेषे षष्ठी। द्विरह्नि भुङ्क्ते। पक्षे द्विरह्नो भुङ्क्ते। सुजर्थैः किम्? अह्नि भुङ्क्ते।

## कर्मणि कृतः ॥२।२।८३॥

कृदन्तस्य सम्बन्धिनि कर्मणि गौणादपि षष्ठी स्यात्। तीर्थस्य कर्ता। ग्रामस्य गमनम्। द्वितीयापवादः।

## कर्तरि ॥२।२।८६॥

कृदन्तस्य कर्तरि षष्ठी। भवतः शाया। भवत आसिका।

## वैकत्र द्वयोः ॥२।२।८५॥

द्विकर्मकधातोर्द्वयोः कर्मणोरेकत्र षष्ठी वा स्यात्। अजाया नेता ग्रामस्य। यद्वा अजां नेता ग्रामस्य।

## द्विहेतोरस्त्र्यणकस्य वा ॥२।२।८७॥

स्त्र्यधिकारविहिताभ्यामणकाभ्यामन्यस्य द्वयोः कर्तृकर्मषष्ठ्योः प्रसिद्धेतोः कृतः कर्तरि षष्ठी वा स्यात्। आश्चर्यो गवां दोहोऽगोपेनागोपस्य वा। भक्षण

कस्येति किम्? चिकीर्षा मैत्रस्य काव्यानाम्। भेदिका चैत्रस्य काष्ठानाम्। प्राप्ते विभाषेयम्। विचित्रा सूत्रस्य कृतिराचार्येणाचार्यस्य वा। वर्तमानक्तस्य योगेऽपि षष्ठी। राज्ञां मतो बुद्धः पूजितो वा।

## क्तयोरसदाधारे ॥२।२।९१॥

सतो वर्तमानादाधाराच्चान्यस्मिन्नर्थे विहितौ यौ क्तौ क्तक्तवतू तयोः कर्त्रोः षष्ठी न स्यात्। घटः कृतो मैत्रेण। घटं कृतवान्मैत्रः। असदाधार इति किम्? राज्ञां ज्ञातः। ज्ञानेच्छार्चार्थसूत्रेण वर्तमाने क्तः। आधार इति किम्? इदमेषां हसितं शयितं वा। अद्यर्थाच्चाधारे इति क्तः।

## वा क्लीबे ॥२।२।९२॥

क्लीबे विहितस्य क्तस्य कर्तरि षष्ठी वा न स्यात्। छात्रस्य छात्रेण हसितम्।

## तृन्नुदन्ताव्ययक्वसानातृश्शतृङिणकच्खलर्थस्य ॥२।२।९०॥

तृन उदन्तस्याव्ययस्य क्वसोरानस्यातृशः शतुर्ङि णकच्खलर्थस्य च कृतः कर्मकर्त्रोः षष्ठी न स्यात्। वदिता जनापवादान्। कन्यामलङ्करिष्णुः। कटं कृत्वा। ओदनं भोक्तुम्। पायं पायं पयो याति। ओदनं पेचिवान्। तरव चिह्वान्। आनेश्चानेन कानशानशानश्त्वश्चानुबन्धविशेषाणां ग्रहणम्। घटं चक्राणः। वचनमनूचानः। मलयं पवमानः। अपूपं पचमाणः। ओदनं पचमानः। कटं करिष्यमाणः। अधीयन् सूत्रम्। कटं कुर्वन् करिष्यन् वा। परीषहं सासहिः। रामं सोमं पपिः। कटं कारको याति। णकारनिर्देशात् णकोऽत्र न ग्राह्यः। घटस्य पूरकः। सुकरो घटस्त्वया। ईषत्करो घटो भवता।

## द्विषो वातृशः ॥२।२।८४॥

अतृशन्तस्य द्विषः कर्मणि षष्ठी वा। चौरस्य द्विषन् चौरं वा। सर्वोऽयं कारकषष्ठ्या निषेधः। शेषे षष्ठी तु स्यादेव। वदिता जनापवादस्य। गेहस्य जिष्णुः।

## अकमेरुकस्य ॥२।२।८३॥

कमधातुवर्जोकप्रत्ययान्तस्य कर्मणि न षष्ठी। भोगानभिलाषुकः। अकमेरिति किम्? दास्याः कामुकः।

## एष्यदृणेनः ॥२।२।९४॥

एष्यदर्थे ऋणे च विहितस्येनः कर्मणि षष्ठी न स्यात्। इन्णिनोर्ग्रहात्

ग्रामं गमी । ग्राम गामी । ग्राममागमी । ग्राममागामी । शतं दायी । पुष्यह गति किम्? अवश्यकारी कटस्य । साधुदायी वित्तस्य ।

## कृत्यस्य वा ॥२।२।८८॥

कृत्यस्य कर्तरि गौणान्नाम्नः षष्ठी वा स्यात् । मया मम वा पूज्यो जिनः । कर्तरि किम्? गेयो माणवको गाथानाम् ।

## नोभयोर्हेतोः ॥२।२।८९॥

उभयोः कर्तृकर्मणोः षष्ठीहेतुर्यः कृत्यस्तस्योभयोरेव षष्ठी न स्यात् । नेतव्या ग्राममजा मैत्रेण ।

## क्रियाश्रयस्याधारोऽधिकरणम् ॥२।२।३०॥

क्रियाश्रयस्य कर्तुः कर्मणो वा य आधारस्तत्कारकमधिकरणं स्यात् ।

## सप्तम्यधिकरणे ॥२।२।९५॥

अधिकरणे कारके गौणान्नाम्नः सप्तमी स्यात् । दिवि देवाः । कटे शेते कुमारी । तिलेषु तैलम् । गुरौ वसति । युद्धे सन्नह्यते । अङ्गुल्यग्रे करिशतम् । अत्र न्यत्र भावो विषयस्तस्मै प्रभवति वैषयिकम् । भुवि मनुष्याः । एकदेशमात्रसंयोग उपश्लेषस्तत्र भवमौपश्लेषिकम् । पर्यङ्के शेते । यथाधाराधेययोः सर्वावयवसंयोगस्तदभिव्यापकम् । दधि सर्पिः । तन्तुषु पटः । आधेयसन्निधिमात्रेण क्रिया हेतु तत्सामीपिकम् । गङ्गायां घोषः । वटे गावस्तिष्ठन्ति । निमित्तमेव नैमित्तिकम् । शरदि पुष्प्यन्ति वनानि । औपचारिक उपचारे भवम् । राजा मम मुष्टिमध्ये इत्यादि ।

## व्याप्येक्तेनः ॥२।२।९९॥

इष्टमनेनेत्याद्यर्थे तद्धिते इन्नुत्पद्यते । क्तप्रत्ययात्परो य इन् तदन्तस्य व्याप्ये वर्तमानाद्गौणान्नाम्नः सप्तमी स्यात् । अधीतं व्याकरणमनेनेत्यधीती व्याकरणे ।

## साधुना ॥२।२।१०२॥

अनेन योगे नाम्नः सप्तमी । साधुर्मैत्रो राजनि । साधुर्मातरि । अप्रत्यादावित्येव । तेन साधुर्मैत्रो राजानं प्रति राजानं परि राजानमनु राजानमभि तत्त्वा ख्याने विधिरयम् ।

## अप्रत्यादावसाधुना ॥२।२।१०१॥

असाधुशब्दयोगेऽप्येवम् । असाधुर्मैत्रो मातरि ।

## तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥२।२।११६॥

तुल्यार्थैर्योगे नाम्नस्तृतीया षष्ठी च स्यात् । मात्रा तुल्यः । मातुस्तुल्यः । अर्थग्रहणं पर्यायार्थम् । उपमा नास्ति देवस्येत्यादौ न तुल्यता, तेन न तृतीया ।

## तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि ॥२।२।६६॥

तदिति हितसुखयोः परामर्शः । हिताद्यर्थैर्युक्तान्नाम्नश्चतुर्थी वा स्यादाशिषि । हितं जीवानां जीवेभ्यो वा भूयात् । सुखं प्रजानां प्रजाभ्यो वा भूयात् । अथकथनात् दा सहाय सहस्य वा भूयात् । भद्रं हीराय हीरस्य वा भूयात् । कल्याणं श्रीवीराय वीरस्य वाऽस्तु । आयुष्यमस्तु चत्राय चैत्रस्य वा ।

## तद्युक्ते हेतौ ॥२।२।१००॥

हेतुर्निमित्तं कारणम् । तेन योगे हेतोर्नाम्नः सप्तमी स्यात् । हेतुतृतीयापवादः । 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥' सीमाऽण्डकोशः । पुष्कलको गन्धमृगः । तद्युक्त इति किम्? वेतनेन धान्यं लुनाति ।

## यद्भावो भावलक्षणम् ॥२।२।१०६॥

यस्य क्रिययाऽपरा क्रिया लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः । यत्र क्रियार्हाणां कारकत्वं तद्विपर्ययो वा । यथा आढ्येषु भुञ्जानेषु दरिद्रा आसते । आढ्येष्वासीनेषु दरिद्रा भुञ्जते । यत्र क्रियानर्हाणामकारकत्वं तद्विपर्ययो वा । यथा दरिद्रेष्वासीनेषु आढ्या भुञ्जते । दरिद्रेषु भुञ्जानेषु आढ्या आसते । तथापि भावलक्षणं स्यादिति सप्तमी ।

## षष्ठी वाऽनादरे ॥२।२।१०८॥

अनादरे गम्यमाने भावलक्षणे षष्ठी वा स्यात् । पक्षे पूर्वेण सप्तमी । रुदतो लोकस्य रुदति लोके वा प्राव्राजीत् पुत्रः ।

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥२।२।९८॥

एभिर्योगे गौणान्नाम्नः सप्तमी वा स्यात् । पक्षे योगे षष्ठी । गोषु गवां वा स्वामी । गोषु गवां वा दायादः इत्यादि । स्वामीश्वराधिपतीतिपर्यायग्रहणात् पर्यायान्तरयोगे न स्यात् । ग्रामस्य राजा । ग्रामस्य पतिः ।

## कुशलायुक्तेनासेवायाम् ॥२।२।९७॥

कुशलो निपुणः । आयुक्तो व्यापृतः । आभ्यां योगे आधारनाम्नः सप्तमी वा स्यात् आसेवायां तात्पर्ये गम्यमाने । कुशलो विद्याग्रहणे । आयुक्तस्तपस्य

रणे। पक्षे आधाराविवक्षणात् योगे षष्ठी। आसेवायामिति किम्? कुशलश्चित्र कर्मणि न च करोति। आयुक्तो गौः शकटे आकृष्य युक्तो न तु व्यापृत इत्यर्थः। अत्र सप्तम्येव।

## सप्तमी चाविभागे निर्धारणे ॥२।२।१०९॥

जातिगुणक्रियादिभिः समुदायादेकदेशस्य बुद्ध्या पृथक्करणं निर्धारणम्। तस्मिन् गम्यमाने गौणान्नाम्नः षष्ठी सप्तमी च स्यात्, अविभागेऽशांशिनोरैक्ये कथंचिच्छब्दाद्गम्यमाने। नृणां नृषु वा क्षत्रियः शूरः। शाल्यः शूकधान्यानां शूकधान्येषु वा पथ्यतमाः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन्तः शीघ्रतमाः। अविभाग इति किम्? माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। मैत्राच्चैत्रः पटुः। अयमस्मादधिकः। अत्र शब्दाद्भेदस्यैव प्रतीतिर्नतु कथंचिदैक्यस्येति पञ्चम्येव।

## निपुणेन चार्चायाम् ॥२।२।१०६॥

निपुणशब्देन साधुशब्देन च योगे सप्तमी स्यादर्चायां गम्यमानायाम्। षष्ठ्यपवादः। मातरि निपुणः। पितरि साधुः। अर्चायामिति किम्? निपुणो मैत्रो मातुः। मातैव तं निपुणं मन्यते इत्यनर्चायां न स्यात्। अप्रत्यादिभिरित्येव। निपुणः चैत्रो मातरं प्रति परि अनु अभि वा।

## प्रसितोत्सुकाववद्धैः ॥२।२।४९॥

एभिर्योगे आधारभूतेर्गौणान्नाम्नस्तृतीया वा स्यात्। केशैः केशेषु वा प्रसितः। गृहेणोत्सुकः। गृहे उत्सुकः। केशैरवबद्धः केशेषु वा। सम्बन्धविवक्षायां षष्ठीबाधनार्थं वचनम्।

## कालेभान्नवाधारे ॥२।२।४८॥

काले वर्तमानान्नक्षत्रवाचिनो गौणान्नाम्न आधारे तृतीया वा स्यात्। पुष्येण पुष्ये वा पायसमश्नीयात्। मघाभिर्मघासु वा मधुरौदनम्।

## क्रियामध्येऽध्वकाले पञ्चमी च ॥२।२।११०॥

क्रिययोर्मध्ये योऽध्वा कालश्च तस्मिन् वर्तमानाद्गौणान्नाम्नः पञ्चमी स्याद्वा सप्तमी। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्यति। अद्य भुक्त्वा मुनिर्द्व्यहाद् भोक्ता। द्व्यहे वा भोक्ता।

## अधिकेन भूयसस्ते ॥२।२।१११॥

अधिकशब्देन योगे भूयोवाचिनो गौणान्नाम्नस्ते सप्तमीपञ्चम्यौ स्याताम्। अधिको द्रोणः खार्याम्। खार्या वा।

## तृतीयाल्पीयसः ॥२।२।१०२॥

भूयोवाचिनाधिकेन योगेऽल्पीयोवाचकाद्गौणाद्भात्तृतीया स्यात्। अधिका खारी द्रोणेन । लोके लोकाद्वाऽधिको जैनधर्मः ।

## स्वेशेऽधिना ॥२।२।१०४॥

स्वे ईशितव्ये ईशे च स्वामिनि वर्तमानादधिना युक्ताद्गौणाद्भात्सप्तमी स्यात्। अधि मगधेषु श्रेणिकः । अधिश्रेणिके मगधाः । षष्ठीबाधार्थो योगः ।

## उपेनाधिकिनि ॥२।२।१०५॥

उपेन युक्तादधिकिनि वर्तमानाद्गौणाद्भात्सप्तमी स्यात् । उपखार्यां द्रोणः । द्रोणोऽधिकः खार्या इत्यर्थः । उपपरार्धेऽर्हद्गुणाः । परार्धादधिका इत्यर्थः ।

## स्वाम्येऽधि ॥३।१।१३॥

अधि इत्येतदव्ययं स्वामित्वे गम्यमाने कृञो धातोः सम्बन्धि गतिसंज्ञं वा स्यात् । चैत्रं ग्रामेऽधिकृत्याधिकृत्वा वा गतः । स्वामिनं कृत्वेत्यर्थः । स्वाम्य इति किम्? ग्राममधिकृत्योद्दिश्य गच्छामि । गतिसंज्ञाऽभावे धातोः प्राक्त्वनियमः । अधिकृतः कृतोऽधि ग्रामे चैत्रः ।

इति श्रीचन्द्रप्रभायां प्रक्रियायां विभक्त्यर्थाधिकारः ।

---

### अथ समासप्रकरणम् ।

सत्क्रियासुकृतकर्मणः फलं, सत्क्रियासुकृतकर्मणा स्थिती ।
धनुरास विमलः सुनोऽमरैर्मोहजित्तपनवस्तुनोमरैः ॥ १ ॥

विभक्त्यर्थनिर्णयात्पदनिर्णयः । अथ पदयोरमलक्षणः समासः प्रतिपाद्यते ।

## समर्थ पदविधि. ॥७।४।१२२॥

पदसम्बन्धी यो विधिः स समर्थाश्रितो ज्ञेयः ।

## नामनाम्नैकार्थ्ये समासो बहुलम् ॥३।१।१६॥

नाम नाम्ना सहैकार्थ्ये परस्परान्वयलक्षणे सामर्थ्ये सति समाससंज्ञं स्यात्। बहुल प्रवृत्त्यप्रवृत्त्यादिरूपं मन्तव्यम् । लक्षणमधिकारश्चेदम्। तेन विशेषसंज्ञाऽभावेऽपि यत्रैकार्थ्यं तत्राऽनेन समासविधिः। विस्पष्टं पटुः विस्पष्टपटुः। नामेति किम्? चरन्ति गावो धनमस्य । नाम्नेति किम्? मैत्र पचति । बहुलग्रहणात्कश्चिदनामापि समस्यते । भाष्यकोऽस्ति भाष्यके नमः । कश्चिन्नाम्नापि । अनुव्यचलत्। अथ अनु वि अग्रे अचलत् इतिस्थिते नित्यसन्धिः समासफलम्। स्यादिमोक्षस्यात्र स्यादिः । पदत्वार्थमुत्पन्नस्य सेः क्लीबत्वे लुप् ।

## ऐकार्थ्ये ॥३।२।८॥

ऐकार्थ्यमैकपद्यम्। तन्निमित्तस्य स्यादेर्लुप्स्यात्। पांशुलपादस्कन्धे इत्यादौ इत्येन नित्यसमासो विभक्त्यलोपश्च। ऐकपद्यं समासफलम्।

## विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम् ॥३।१।९॥

विभक्त्यादिष्वर्थेषु वर्तमानमव्ययं नाम नाम्ना सहैकार्थ्ये सति पूर्वपदार्थेऽभिधेये नित्यं समस्यते सोऽव्ययीभावसञ्ज्ञः स्यात्। विभक्तिशब्देन विभक्त्यर्थः कारकम्। स्त्रियां गृह्यकार्यं निषेयमिति वाक्ये स्त्रियामित्यत्र सप्तमी तदर्थद्योतकमधीत्यव्ययं स्त्रीनाम्ना समस्यते। स्त्री अधि इति स्थिते।

## प्रथमोक्तं प्राक् ॥३।१।१४॥

समासप्रकरणे प्रथमान्तपदेन यदुक्तं तत्प्राक् पूर्वं निपतति। द्वन्द्वैकत्वाव्ययीभावौ इति लिङ्गानुशासनात्क्लीबत्वे ह्रस्वः। अधिस्त्रि इति कृते नाम्नः प्रथमेति प्रथमा।

## अनतो लुप् ॥३।२।६॥

अकारान्तवर्ज्योऽव्ययीभावस्य स्यादेर्लुप् स्यात्। अधिस्त्रि पश्य कृतमित्यादि। समीपे, कुम्भस्य समीपे।

## अमव्ययीभावस्यातोऽपञ्चम्याः ॥३।२।२॥

अदन्तादव्ययीभावात्परस्यादेरम् स्यात् पञ्चमीं वर्जयित्वा। उपकुम्भमस्ति पश्य कृतम्। उपकुम्भं स्वामी।

## वा तृतीयायाः ॥३।२।३॥

अदन्ताव्ययीभावस्य तृतीयायाः स्थाने वाऽम् स्यात्। उपकुम्भेन कृतम् उपकुम्भं वा।

## सप्तम्यावा ॥३।२।४॥

अदन्ताव्ययीभावस्य सप्तम्या वा अम् स्यात्। योगविभाग उत्तरार्थः। उपकुम्भे उपकुम्भं वा निधेहि।

## ऋद्धनदीवंशस्य ॥३।२।५॥

यस्य समृद्धिः सुमद्राणामिदं मद्राणां समृद्धिरित्यर्थः। समृद्ध्यर्थेऽव्ययीभावस्य सप्तम्या अमादेशो भवति। मद्राणां समृद्धि' सुमद्र भवति। यवनानामृद्ध्यभावो दुर्यवनम्। एव दुर्भिक्षम्। मक्षिकाणामभावो निर्मक्षिकम्। अमक्षिकम्। अत्ययोऽतीतत्वम्। सतोऽतिक्रान्तिः। अतिवर्षम्। वर्षाणामतीतत्वम्। अतिहिमम्। हिमध्वस। असम्प्रतीति। सम्प्रति नोपयुज्यते। अतिनिद्रम्। अतिकम्बलम्। नाय निद्राया' कम्बलस्य वा समय'। पश्चादर्थे, अनुरथ याति। रथस्य पश्चादित्यर्थ'। पश्चाच्छब्दस्य नात्र समासः। भाष्ये तत्पश्चात्संसते इति प्रयोगात्। तेन पश्चाद्रथमिति न स्यात्। क्रम आनुपूर्व्यम्। अनुज्येष्ठं प्रविशन्तु। ज्येष्ठानुक्रमेणेत्यर्थः। ख्याति' प्रथा। इति भद्रबाहु। भद्रबाहुशब्दो लोके प्रकाशते इत्यर्थः। युगपदेककालार्थः।

## अकालेऽव्ययीभावे ॥३।२।१४६॥

सहस्य स' स्यात् न तु काले। सचक्रम्। चक्रेणैककाल गर्दा धेहि। चक्राणि वा युगपद्धेहि। सदृशर्थे, सब्रतम्। व्रतसदृशमित्यर्थ'। सस्या सदृशः ससखि। सम्पत् सिद्धिः। सक्षत्र माधूनाम्। सम्पन्न ब्रह्मेत्यर्थः। क्षत्राणां सम्पत्ति' सक्षत्रम्। भट्टेराधिक्य समृद्धि'। सम्पत्तिरनुरूप आत्मभावः। इत्यनयोर्भेदः। साकल्यमशेषता। सतृणमत्ति। न किञ्चित्त्यजतीत्यर्थ'। अन्त' समाप्ति'। सपिण्डैषणमधीते। पिण्डैषणापर्यन्तमधीते इत्यर्थः। समाप्तिर्विकलेऽप्यध्ययने प्रतीयते इति साकल्येऽन्तभावः। पूर्वपदार्थ इत्येव। समुद्रा मद्रा' सुमद्राः।

## योग्यतावीप्सानतिवृत्तिसादृश्ये ॥३।१।४०॥

एष्वर्थेष्वव्यय मात्रैकार्थ्ये सति पूर्वपदार्थे समस्यते सोऽव्ययीभाव'। अनुरूपं चेष्टते। रूपस्य योग्य कुरुते इत्यर्थ'। अर्थमर्थं प्रति प्रत्यर्थम्। वीप्सायां द्वितीयाविधानाद्वाक्यमपि। अर्थामतिवृत्ति पदार्थानतिक्रमः। यथाशक्ति पठ। शक्तिमनतिक्रम्य पठ। नाम्न विन्यासविशेष इति क्रमादेशः। सादृश्ये, सशीलममयो'। समान शीलमित्यर्थः। सदृगित्यनेन सिद्धे सादृश्यग्रहण मुख्यसादृश्यपरिग्रहणार्थम्।

## यथाऽथा ॥३।१।४१॥

याथात्म्यपरिहित यथेत्यव्ययमव्युत्पन्नं नाम्ना नित्यं समस्यते। यथारूप चेष्टते। रूपानुरूपमित्यर्थः। यथावृद्ध समर्चय। अथा इति किम्? यथा चैत्रस्तथा मैत्रः। पूर्वेणैव सिद्ध सादृश्ये निषेधार्थं वचनम्।

## यावदियत्त्वे ॥३।१।३१॥

यावदमत्रमतिथीन् भोजय। यावदित्यव्ययममव्यय सह गृह्यते।

## नित्यं प्रतिनाऽल्पे ॥३।१।३७॥

शाकस्याल्पस्य शाकप्रति । सूपस्य मात्रा सूपप्रति ।

## सङ्ख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ ॥३।१।३८॥

अन्यथावृत्तिः पराजयः । एकपरि । अक्षपरि । शलाकापरि । एकेन अक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जयो भवेत् ।

## पर्यपाङ्बहिरञ्चूः पञ्चम्या ॥३।१।३२॥

पर्यादीनि नामानि पञ्चम्यन्तेन समस्यन्ते । परित्रिगर्तम् । एवमपत्रिगर्तम् । आग्रामम् । एवं बहिर्ग्रामम् । प्राग्ग्राम वृष्टो मेघः ।

## लक्षणेनाभिप्रत्याभिमुख्ये ॥३।१।३३॥

अभिप्रती समस्येते सोऽव्ययीभावः । अभ्यग्नि प्रत्यग्नि शलभाः पतन्ति ।

## समीपे ॥३।१।३५॥

अनु इत्येतन्नाम समीपेऽर्थे समस्यते सोऽव्ययीभावः । अनुवनस्य अनुवनमशनिर्गतः ।

## दैर्घ्येऽनुः ॥३।१।३४॥

यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते । अनु गङ्गां दीर्घेत्यनुगङ्ग वाराणसी । अनुयमुन मथुरा ।

## तिष्ठद्गुप्रभृतयः ॥३।१।३६॥

निपात्या यथायोगमन्यपदार्थे पूर्वपदार्थे चाभिधेये । तिष्ठन्ति गावो यस्मिन् काले गर्भग्रहणाय दोहाय वत्सेभ्यो निवासाय जलपानार्थं वा स कालस्तिष्ठद्गु । वहद्गु । आयतीगवम् । खलेयवमित्यादि ।

## पारे मध्येऽग्रेऽन्तः षष्ठ्या वा ॥३।१।३०॥

एते षष्ठ्यन्तेन नाम्ना वा समस्यन्तेऽव्ययीभावोऽयम् । पारे गङ्गायाः पारेगङ्गम् । मध्ये गङ्गाया मध्येगङ्गम् । एकारान्तत्वं निपातनात् । पक्षे तत्पुरुषो वाक्यं च ।

## वंश्येन पूर्वार्थे ॥३।१।२९॥

वंशो द्विधा । विद्यया जन्मना च । तत्र भवो वंश्यः । तद्वाचिनाम्ना संख्यावाचि नाम समस्यते । एको मुनिर्व्याकरणस्यैकमुनि व्याकरणस्यास्ति । विद्याविद्यावतामभेदविवक्षया एकमुनि द्विमुनि त्रिमुनि व्याकरणम् । सप्तकाशयो वंश्या अस्य सप्तकाशि राज्यस्य ।

## नदीभिर्नाम्नि ॥३।१।२७॥

नदीभिः संज्ञायामन्यपदार्थे नाम समस्यते सोऽव्ययीभावः । उन्मत्तगङ्गं नाम देशः । शनैर्गङ्गम् ।

## सख्या समाहारे ॥३।१।२८॥

सख्या नदीवाचिभिः सह समस्यते समाहारे गम्ये । द्वयोर्यमुनयोः समाहारो द्वियमुनम् । त्रिगङ्गम् ।

## शरदादेः ॥७।३।९२॥

शरदाद्यन्तादव्ययीभावादटच् स्यात् समासान्तः । शरदः समीपमुपशरदम् । प्रतिविपाशम् ।

## जराया जरस् च ॥७।३।९३॥

उपजरसम् ।

## प्रतिपरोऽनोरव्ययीभावात् ॥७।३।८७॥

एतत्पूर्वादक्षिशब्दान्तात्प्राग्वत् । अक्षिणी प्रति प्रत्यक्षम् । अक्ष्णोः परः परोक्षम् । अत्रापेऽव्ययीभावः । अक्ष्णः समीपमन्वक्षम् ।

## अवर्णेवर्णस्य ॥

अवर्णान्तस्येवर्णान्तस्य चापदस्य तद्धिते परे लुक् स्यात् । परस् शब्दोऽव्ययमप्रत्यक्षार्थः । परोक्षः समय इति तु प्राद्यादेराकृतिगणत्वमत्रये न स्यात् ।

## सकटाभ्याम् ॥७।३।८६॥

प्राग्वत् । समक्षम् । कटाक्षः ।

## अनः ॥७।३।८८॥

अन्नन्तादव्ययीभावात् । उपराजम् ।

## नोऽपदस्य तद्धिते ॥७।४।६१॥

नकारान्तानामपदसंज्ञकानां तद्धिते परेऽव्ययस्यादेर्लोपः स्यात् ।

## नपुंसकाद्वा ॥७।३।८९॥

अन्नन्तान्नपुंसकात्प्राग्वद्वा । उपचर्मम् । उपचर्म ।

# गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा ॥७।३।९०॥

अत्समासान्त । गिरेरन्त अन्तर्गिरम् । अन्तर्गिरि । नद्याः समीपे उपन द्यम् उपनदि । उपसमिधम् । उपसमित् ।

इत्यव्ययीभाव ।

---

## श्रितादिभिः ॥३।१।६२॥

द्वितीयान्त नाम श्रितादिभि समस्यते सोऽय समासस्तत्पुरुष । धर्म श्रितो धर्मश्रित । ससारमतीत ससारातीत । ग्राम गमी ग्रामगमी ।

## प्राप्तापन्नौ तयाच्च ॥३।१।६३॥

प्राप्तापन्नौ सामर्थ्याप्रथमान्तौ तया द्वितीयान्तेन नाम्ना समस्येते । तत्पु रुषोऽयम् । तत्सन्नियोगेऽनयोरन्तस्याकार स्यात् । प्राप्तजीविका । आपन्नजी विका । प्राप्तगवी । आपन्नगवी स्त्री । अकारकरण अपेक्षार्योत्तरपदाभावात्परत स्त्रीपुंवत्त्वविनापि पुंवद्भावे प्राप्ते सिद्ध्यर्थम् । पुंलिङ्गे तु प्राप्तो जीविका प्राप्तजी विक पुमान् । श्रितादिभिरितिसमासे द्वितीयान्तस्यापि प्रथमोक्तत्वेन पूर्वनि पातः । ततो जीविकाप्राप्तः । जीविकापन्न इत्यपि भवति ।

## स्वय सामि क्तेन ॥३।१।५८॥

इदमव्ययद्वयं क्तान्तेन नाम्ना प्राग्वत् । स्वयधौतौ पदौ । स्वयविलीनमा ज्यम् । आत्मनेत्यर्थ । सामिकृतम् । सामिभुक्तम् । अर्धमित्यर्थः । समासादेक विभक्तित्वद्धितोत्पत्ति । स्वायधौति । सामिकृतस्यापत्य सामिकृति । सामि कृती । सामिकृतायनिः ।

## द्वितीया खट्वा क्षेपे ॥३।१।५९॥

द्वितीयान्त खट्वेतिनाम क्षेपे गम्ये क्तान्तेन प्राग्वत् । खट्वारूढो जाल्मो मूढे । नित्यसमासोऽयम् । नहि वाक्येन निन्दा गम्यते ।

## काल. ॥३।१।६०॥

कालवाचिद्वितीयान्त क्तान्तेन प्राग्वत् । मास प्रमितो मासप्रमितः प्रति पच्च द्रः । मास प्रमातुमारब्ध इत्यर्थः । अप्राप्त्यर्थ वचनम् ।

## व्याप्तौ ॥३।१।६१॥

व्याप्तौ या द्वितीया तदन्त व्यापकवाचिना समस्यते स तत्पुरुष । क्तान्त विनाऽपि समासः । मुहूर्त सुख मुहूर्तसुखम् ।

## तृतीया तत्कृतैः ॥३।१।६५॥

तृतीयान्तं नाम तत्कृतैर्गुणवचनैः समस्यते स तत्पुरुषः । शङ्कुलया खण्डः शङ्कुलाखण्डश्चैत्रः । तत्कृतैरिति किम्? अक्ष्णा काणः ।

## ऊनार्थपूर्वाद्यैः ॥३।१।६७॥

तृतीयान्तं नाम ऊनार्थैः पूर्वाद्यैश्च नामभिः प्राग्वत् । माषेणोनं माषोनम् । मासेन पूर्वः मासपूर्वः । मात्रा सदृशो मातृसदृशः । आकृतिगणोऽयम् । तेन माषेणाधिकं माषाधिकम् । धान्येनार्थो धान्यार्थः ।

## कारकं कृता ॥३।१।६८॥

कर्तृकरणरूपं कारकं तृतीयान्तं स्यात् । तत्कृदन्तेन नाम्ना प्राग्वत् । आत्मना कृतम् आत्मकृतम् । परकृतम् । कृत्सगतिकारकस्यापि ॥ न्यायोऽयम् । चैत्रेण नखनिर्भिन्नश्चैत्रनखनिर्भिन्नः । करणम्, नखैर्निर्भिन्नो नखनिर्भिन्नः । बहुलाधिकारात् स्तुतिनिन्दार्थतायां प्रायेण कृत्यैः सह समासः । कर्तरि, काकपेया नदी । पूर्णेत्यर्थः । श्वलेह्यः कूपः । करणे, बाष्पच्छेद्यं तृणम् । एवं मृदु इत्यर्थः । स्तुतिनिन्दाभ्यामन्यत्रापि बुसोपेन्ध्यम् । तृणोपेन्ध्यम् । तेजसोऽल्पता ऽऽख्याप्यते । घनघात्यः । कृत्यसाध्यत्वमुच्यते । तृतीयान्तमन्नेन समस्यते । दध्ना संस्कृत ओदनो दध्योदनः । गुडेन मिश्रा धाना गुडधानाः ।

## चतुर्थी प्रकृत्या ॥३।१।७०॥

चतुर्थ्यन्तमर्थाद्विकृतिवाचि नाम प्रकृतिवाचिना नाम्ना सह समस्यते स तत्पुरुषः । यूपाय दारु यूपदारु । प्रकृत्येति किम्? रन्धनाय स्थाली । अवहननायोलूखलम् ।

## हितादिभिः ॥३।१।७१॥

चतुर्थ्यन्तं नाम हितादिभिः प्राग्वत् । गोभ्यो हितं गोहितम् । गोसुखम् । गोरक्षितम् । गोबलिः ।

## तदर्थार्थेन ॥३।१।७२॥

चतुर्थ्यन्तं नाम तदर्थेनार्थशब्देन नाम्ना प्राग्वत् । पित्रे इदं पित्रर्थं पयः । मठार्थं धनम् । उदकार्थो घटः । केऽर्थ इति वाच्यलिङ्गता । नित्यसमासश्चायम् ।

## पञ्चमी भयाद्यैः ॥३।१।७३॥

पञ्चम्यन्तं नाम भयाद्यैः प्राग्वत् । वृकाद्भयं वृकभयम् । एवं सुखापेतः । कल्पनापोढ इत्यादि ।

## क्तेनाऽसत्त्वे ॥३।१।७४॥

असत्त्वे वर्तमानाद्या पञ्चमी तदन्त नाम क्तप्रत्ययान्तेन नाम्ना प्राग्वत्। स्तोकान्मुक्तः। दूरादागत'। असत्त्वे ङसेरित्यलुप।

## परःशतादिः ॥३।१।७५॥

निपात्या'। शतात्परे पर' शताः। परः सहस्राः।

## षष्ठ्ययत्नाच्छेषे ॥३।१।७६॥

शेषे या षष्ठी तदन्त नाम नाम्ना समस्यते स तत्पुरुष'। अयत्नात् न चेत्स शषो नाथ इत्यादिप्रयत्नाद्भवति। राज्ञ' पुरुषोराजपुरुष'। राज्ञो गोक्षीर राजगोक्षीरम्। राजगव्या' क्षीरं राजगवीक्षीरम्। अयत्नादिति किम्? सर्पिषो नाथितम्।

## याजकादिभिः ॥३।१।७८॥

षष्ठ्यन्त नाम याजकादिनामभि' प्राग्वत्। ब्राह्मणानां याजको ब्राह्मणयाजक'। देवपूजक'।

## सर्वपश्चादादयः ॥३।१।८०॥

एते षष्ठीतत्पुरुषा' साधवः स्यु'। सर्वेषां पश्चात् सर्वपश्चात्। सर्वचिरजीवति। तदनु। तदुपरिष्टात्। पर्द घसे। अव्ययस्य निषेधो वक्ष्यते तदपवादोऽयम्। सर्वेषां श्वेततरः सर्वश्वेत इति तरलोपाज्ञेयम्।

## कृति ॥३।१।७७॥

प्राग्वक्तं सूत्रद्वय कर्मणि कृत कर्तरि ( ) एतद्वयोक्ता कृत्प्रत्ययनिमित्ता या षष्ठी तदन्त नाम नाम्ना समस्यते। तत्पुरुषोऽयम्। सिद्धसेनकृति'। गणधरोक्तिः। इध्मनो प्रव्रश्चन इध्मप्रव्रश्चनः। पलाशशातन । सर्पिर्ज्ञानम्। मिथ्यारणषष्ठ्या तथा प्रतिपदविहितषष्ठ्या न समास । मृणां क्षत्रिय' शूरः। अज्ञाने ज्ञः षष्ठीतिप्रतिपदविहिता। सर्पिषो ज्ञानम्।

## तृप्तार्थपूरणाव्ययातृशशत्रानशा ॥३।१।८५॥

तृप्तार्थै पूरणप्रत्ययान्तैरव्ययैरतृशान्तै' शत्रन्तैरानशान्तैश्च नामभिः षष्ठ्यन्त नाम न समस्यते। फलानां तृप्तः। तीर्थकराणां षोडशः शान्तिः। राज्ञः साक्षात्। रामस्य द्विषन् रावणः। चैत्रस्य पचन्। अस्मकाना धावन्तः धीमतमाः। चैत्रस्य पक्ष्यन्। चैत्रस्य पचमान'। चैत्रस्य पक्ष्यमाण'। सर्वत्र सम्बन्धे षष्ठी।

## ज्ञानेच्छार्चार्थाधारक्तेन ॥३।१।८६॥

ज्ञानार्थादिच्छार्थादर्चार्थाच्च वर्तमाने च' क्तप्रत्ययो यश्च अधार्थाधारे

विहितस्तवन्तेन नाम्ना षष्ठ्यन्तं नाम न समस्यते । राज्ञां ज्ञातः । राज्ञामिष्टः । राज्ञां पूजितः । भूतार्थक्तान्तेन तृतीयासमासस्त्वेव ।

## अस्वस्थगुणैः ॥३।१।८७॥

ये गुणाः स्वात्मन्येवावतिष्ठन्ते न द्रव्ये ते स्वस्थाः । अस्वस्थगुणवाचिभि- र्नामभिः सह षष्ठ्यन्तं नाम न समस्यते । पटस्य शुक्लः । गुडस्य मधुरः । अर्था- र्थात्प्रकरणाद्वाऽपेक्षस्य वर्णादेर्निर्देशेऽपि च इमे शुक्लादयस्ते पटस्येति सामर्थ्यो- पपत्तेः समासः प्राप्नोतीति प्रतिषिध्यते ।

## तृतीयायाम् ॥३।१।८४॥

कर्तरि या तृतीया तस्यां सत्यां कर्मजा षष्ठी न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ।

## न कर्तरि ॥३।१।८२॥

योक्ता षष्ठी तदन्तं नामाकप्रत्ययान्तेन न समस्यते । भवतः शायिका । भवत आसिका ।

## कर्मजा तृचा च ॥३।१।८३॥

कर्मविहितषष्ठ्यन्तं नाम कर्तृविहिताकप्रत्ययान्तेन तथा तृजन्तेन नाम्ना न समस्यते । ओदनस्य भोजकः । सक्तूनां पायकः । अपां स्रष्टा । वज्रस्य भर्ता । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । भूभर्ता । त्रिभुवनविधातुश्च कल इति शेषषष्ठ्या समासः ।

## अकेन क्रीडाजीवे ॥३।१।८१॥

क्रीडायां जीविकायां च गम्यायां षष्ठ्यन्तं नामाकप्रत्ययान्तेन समस्यते । उद्दालकपुष्पभञ्जिका । क्रीडाविषयोऽयम् । जीविकायां, दन्तलेखकः । नित्यस- मासोऽयम् ।

## पत्तिरथौ गणकेन ॥३।१।७९॥

एतौ षष्ठ्यन्तौ गणकेन सह समस्येते । पत्तीनां गणकः पत्तिगणकः । एवं रथगणकः ।

## पूर्वापराधरोत्तरमभिन्नेनांशिना ॥३।१।५२॥

अथ एकदेशिसमासानाह । पूर्वादयः शब्दाः सामर्थ्यादंशवाचिनोऽंशिना सह समस्यन्ते न चरमोंऽशी भिन्नः प्रतीयते । स च तत्पुरुषः । पूर्वं कायस्य पूर्वकायः । एवमपरकाय इत्यादि । अभिन्नेनेति किम्? पूर्वं छात्राणामामन्त्रयस्व । प्रसज्यप्रतिषेधः किम्? पूर्वं पाणिपादस्य । अंशिनेति किम्? पूर्वो नाभेः कायस्य ।

# सायाह्नादयः ॥३।१।५३॥

…चे निपात्यन्ते । सायमह्नः सायाह्नः । मध्याह्नः । मध्यन्दिनम् । मध्यरात्रः । पाश्चमरात्रः । बहुवचनमाकृतिग्रहणार्थम् । षष्ठीसमासबाधनार्थं तु वचनम् । पूर्वे पश्चाला इत्यादिवत्समुदायवाचिनामप्येकोऽपि वृत्तिदर्शनात् सामानाधिकरण्ये सति कर्मधारयेणैव सिद्धं साय च तदहश्च सायाह्न इत्यादि ।

# समेंऽशेऽर्धं न वा ॥३।१।५४॥

समांशवाच्यर्धशब्दोंऽशिना प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली । परलिङ्गो द्वन्द्वोंऽशीति स्त्रीलिङ्गता । पक्षे पिप्पल्या अर्धम् । समेंऽश इति किम्? ग्रामार्धः । अभिनेनेत्येव । अर्धं पिप्पलीनाम् ।

# जरत्यादिभिः ॥३।१।५५॥

असमांशार्थ आरम्भः । अर्धशब्दो जरत्यादिभिरशिभिरभिन्नैः सह वा समस्यते स च तत्पुरुषः । अर्धा जरत्या अर्धजरती । बहुवचनमाकृतिग्रहणार्थम् । इदमपि षष्ठीसमासबाधनार्थं वचनम् ।

# द्वित्रिचतुष्पूरणाग्रादयः ॥३।१।५६॥

द्विप्रभृतेः पूरणप्रत्ययान्ता अग्र इत्यादयश्च शब्दा अशिना सह प्राग्वत् । द्वितीयं भिक्षाया द्वितीयभिक्षा । अग्रं हस्तस्य अग्रहस्तः । एवं तलपादः । पक्षे भिक्षाद्वितीयमित्यादि । तुसार्थेति बाधित्वा षष्ठीसमासो विकल्पात् ।

# कालो द्विगौ च मेयैः ॥३।१।५७॥

मेयवाचिना कालवाचिनामेकवचनान्तं द्विगौ च विषये वर्तमानं समस्यते तत्पुरुषोऽयम् । मासो जातस्य यस्य स मासजातः । एको मासो जातस्य यस्य स एकमासजातः । द्वे अहनी सुप्तस्य यस्य स द्व्यहसुप्तः । कथं द्व्यहजातः? द्वयोरह्नोः समाहारो द्व्यहः । द्व्यहो जातस्येति विग्रहात् । अन्यथा द्वे अहनी जातस्य द्व्यहजातः । काल इत्येकवचनं द्विगोरन्यत्र प्रयोजकम् । तेन मासौ मासा वा जातस्येत्यत्र न स्यात् । द्विगौ तु द्वौ मासौ जातस्य द्विमासजात इति स्यात् ।

# सप्तमी शौण्डाद्यैः ॥३।१।८८॥

सप्तम्यन्तं शौण्डाद्यैः प्राग्वत् । अक्षेषु शौण्डोऽक्षशौण्डः । ईश्वराधीनः । अधीनशब्दोऽयम् ।

# सिंहाद्यैः पूजायाम् ॥३।१।८९॥

सप्तम्यन्तं नाम सिंहाद्यैः समस्यते पूजायां गम्यमानायां स तत्पुरुषः । समरे सिंह इव इति समरसिंहः । रणव्याघ्रः ।

शमी। एतन्नामा ग्रामः। नित्यसमासोऽयम्। तद्धिते पूर्वस्यां शालायां 'भव' पौर्वशालः। आपरशालः। अधिकया षष्ट्या क्रीतः अधिकषाष्टिकः। नित्यसमासोऽयम्। उत्तरपदे, दक्षिणो गौर्धनमस्य दक्षिणगवधनः। पूर्वगवीप्रियः। अधिकगवीप्रियः। एषु तत्पुरुषलक्षणः समासान्तः। नित्यसमासः। त्रयाणामेकार्थीभाव एव उत्तरपदसम्भवात्। तत्र च द्वयोर्व्यपेक्षाभावात्।

## संख्या समाहारे च द्विगुश्चानाम्न्ययम् ॥३।१।९९॥

अनेकस्य कथञ्चिदेकत्व समाहारः। सख्या परेण नाम्ना प्राग्वत्, संज्ञायां तद्धितविषये उत्तरपदे च परे समाहारेऽभिधेये तत्पुरुषः कर्मधारयश्चायमेव चाऽनाम्नि असंज्ञायां द्विगुसंज्ञः स्यात्। पञ्चाम्राः। सप्तर्षयः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। पञ्चानां नापितानामपत्यं पाञ्चनापितिः। उत्तरपदे, पञ्च गावो धनमस्य पञ्चगवधनः। पञ्च नावः प्रिया यस्य स पञ्चनावप्रियः। पञ्चानां पूलानां समाहारः पञ्चपूली। पञ्चानां राज्ञां समाहारः पञ्चराजी। एवं पञ्चकुमारी। दशकुमारी। पञ्चानां गवां समाहारः पञ्चगवम्। पात्र्यादिवर्जिताबदन्तोत्तरपदः समाहारे द्विगुरत्राबन्तान्तो वाऽन्यस्तु सर्वो नपुंसकः।

## निन्द्यं कुत्सनैरपापाद्यैः ॥३।१।१००॥

निन्द्यं निन्दाहेतुभिः प्राग्वत्। वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः। अपापाद्यैरिति किम्? गणकपापितः। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्।

## उपमानं सामान्यैः ॥३।१।१०१॥

शस्त्रीव शस्त्री। शस्त्री चासौ श्यामा च शस्त्रीश्यामा स्त्री। शस्त्रीव श्यामेत्यर्थः। एवं घनश्यामः। इह पूर्वपदं तत्स्थयो लाक्षणिकमितिसूचयितुमिव शब्दः। उपमानमिति किम्? देवदत्ता श्यामा। सामान्यैरिति किम्? अग्निर्माणवकः। गौर्वाहीकः। उपमानं सामान्यैरेव पूर्वं निपततीति नियम्यते।

## उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥३।१।१०२॥

उपमेयवाच्येकार्थमुपमानवाचिभिर्व्याघ्राद्यैः साधारणधर्मानुक्तौ समस्यते तत्पुरुषः कर्मधारयश्चायम्। पुरुषश्चासौ व्याघ्रश्च पुरुषव्याघ्रः। पुरुषसिंहः। साम्यानुक्ताविति किम्? पुरुषो व्याघ्र इव शूरः।

## विशेषणं विशेष्येणैकार्थं कर्मधारयश्च ॥३।१।९६॥

विशेषणवाचि नाम विशेष्यवाचिना नाम्ना सह समस्यते तत्पुरुषः कर्मधारयश्च स्यात्। नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ गौश्च रक्तगवी। पुमाँश्चासौ गौश्च पुङ्गवः। कृष्णतिलम्। भक्सिंहः। व्यवच्छेद्यव्यवच्छेदकाभावेन समासः। तक्षकः सर्पः। लोहितलक्षकः। रामो जामदग्न्यः।

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ॥३।१।१०३॥

पूर्वनिपातनियमार्थं सूत्रम्। पूर्वश्चासौ पुरुषश्च पूर्वपुरुषः। अपरपुरुष इत्यादि। वीरपुरुषः। कथमेकवीर इति? स्पर्धे परमिति हि वीरैक इति युक्तमिति। बहुलाधिकारान्निष्पत्तिः।

## श्रेण्यादिकृताद्यैश्च्व्यर्थे ॥३।१।१०४॥

श्रेण्यादि नाम कृताद्यैरेकार्थं समस्यते च्व्यर्थे गम्यमाने स तत्पुरुषः कर्मधारयश्च। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः पुरुषाः। च्व्यर्थ इति किम्? श्रेणयः कृताः। नाऽत्र समासोऽनेन सूत्रेण। गतिकन्यस्तत्पुरुष इति तु स्यादेव। श्रेणिकृताः।

## क्त नञादिभिन्नैः ॥३।१।१०५॥

एकार्थं क्तान्तं नाम नञादिभिन्नैः प्राग्वत्। कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम्। इडा कार्यपदस्यैकदेशविकृतस्यानन्यत्वान्न भेदः। पूतापचितम्। आदिशब्दात्कृतापकृतम्।

## सेट्नानिटा ॥३।१।१०६॥

सेट् क्तान्तं नञादिभिन्नेनानिटा न समस्यते। पचितमपूतम्। शाकपार्थिवादयो मयूरव्यंसकादित्वात्। शाकप्रियः पार्थिवः शाकपार्थिवः। एवं देवब्राह्मणः।

## सन्महत्परमोत्तमोत्कृष्ट पूजायाम् ॥३।१।१०७॥

सदादि नामैकार्थं पूज्यमानमभि प्राग्वत्सत्कारे। सन्मुनिः। महापुरुषः। जातीयैकार्थेऽच्वेरित्यनेन आः। पूजायामिति किम्? उत्कृष्टो गौः। कर्दमादुद्धृत इत्यर्थः।

## वृन्दारकनागकुञ्जरैः ॥३।१।१०८॥

एभिः पूज्यनामैकार्थं प्राग्वत्। गोवृन्दारकः। व्याघ्रादेराकृतिगणत्वादेव सिद्धे पूजायामेवेति नियमार्थं वचनम्।

## युवाखलतिपलितजरद्वलिनैः ॥३।१।११३॥

युवेति नामैकार्थं खलत्यादिभिः प्राग्वत्। युवा चासौ खलतिश्च युवखलतिः। युवपलितः। युवजरन्। युववलिनः। युवतिः खलतिर्युवखलतिः। लिङ्गविशिष्टपरिभाषया युवजरती।

## कतरकतमौ जातिप्रश्ने ॥३।१।१०९॥

एतावेकार्थौ जातिनाम्ना प्राग्वत् । कतरश्चासौ कठश्च कतरकठः । कतम कलापः ।

## किंक्षेपे ॥३।१।११०॥

किमेतन्नामैकार्थं क्षेपे गम्ये निन्द्यनाम्ना प्राग्वत् । कुत्सितो राजा किंराजा यो न रक्षति ।

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तप्रशंसारूढैर्जातिः ॥३।१।१११॥

जातिनामैकार्थं पोटादिभिः प्रशंसारूढैश्च प्राग्वत् । इभ्या चासौ पोटा च इभ्यपोटा । पुरुषवेषा स्त्री पोटा । प्रशंसारूढैः । गोमतल्लिका गोमचर्चिका । गोम काण्डम् । गवोद्धः गोतल्लजः । मतल्लिकादयो नियतलिङ्गा न विशेष्यलिङ्गानुगाः ।

## कृत्यतुल्याख्यमजात्या ॥३।१।११४॥

कृत्यप्रत्ययान्तं तथा तुल्यार्थं नामैकार्थमजात्या प्राग्वत् । भोज्यं च तदुष्णं च भोज्योष्णम् । तुल्यश्वेतः । अजात्या किम् ? भोज्य ओदनः । विशेषणसमा सोऽपि नाऽत्र । वर्णो वर्णेन ॥ प्राग्वत् । कृष्णसारङ्गः ।

## कडारादयः कर्मधारये ॥३।१।१५८॥

कडारजैमिनिः । जैमिनिकडारः ।

## कुमारः श्रमणादिना ॥३।१।११५॥

कुमारी चासौ श्रमणा च कुमारश्रमणा । पुंस्यपि कुमारश्चासौ अध्याप कश्च कुमाराध्यापकः ।

## चतुष्पाद्गर्भिण्या ॥३।१।११२॥

चतुष्पाज्जातिजातिवाच्यपि नाम गर्भिणीति नाम्ना सह प्राग्वत् । गोग र्भिणी । महिषगर्भिणी ।

## मयूरव्यंसकेत्यादयः ॥३।१।११६॥

एते तत्पुरुषसमासा निपात्याः । व्यंसको धूर्तः । मयूरश्चासौ व्यंसकश्च मयूरव्यंसकः । उच्चक् चावचक् च उच्चावचम् । अचित चामचितं च वा । निश्चित

च प्रमितं च मितप्रमम् । नास्ति किंचनास्येत्यकिंचन । एहि ईडे इति जल्पो यस्मिन् कर्मणि काले वा तवेहीड वर्तते । एहियवम् । एहीडादयोऽन्यपदार्थे समासा । आख्यातमाख्यातेन क्रियासातत्ये ॥ अश्नीत पिबतेत्येवं यत्र सतत कथ्यते सा क्रिया अश्नीतपिबता । एवं खादतमोदता । पचतभृज्जता । उद्धरोत्सृजा । उद्धमविधमा । असातत्येऽपि अन्तः सकर्मणा बहुलमाभीक्ष्ण्ये कर्तरि समासाभिधेये ॥ जहिजोड । जहिस्तम्ब । मास्य कुतोऽपि भयमस्तीति अकुतोभय । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् ।

## ईषद्गुणवचनै ॥३।१।६४॥

ईषदित्यव्ययं गुणवचनैर्नामभिः समस्यते स तत्पुरुषः । ईषद्रक्तं पिङ्गलं ईषत्पिङ्गलं । ईषद्रक्तम् ।

## नञ् ॥३।१।५१॥

नञ् नाम्ना समस्यते समासोऽयं तत्पुरुषः ।

## नञत् ॥३।२।१२५॥

नञ्शब्दस्योत्तरपदपरेऽकारः स्यात् । न गौरगौः ।

## अन् स्वरे ॥३।२।१२९॥

नञ्स्वरादावुत्तरपदे परेऽन् स्यात् । अनुचैः । अनजः । अनन्तः ।

## त्यादौ क्षेपे ॥३।२।१२६॥

त्याद्यन्ते पदे परे निन्दार्थे नञ् अकारः स्यात् । अपचसि त्वं जाल्म । नैकभेत्यादौ नञान्येन नाम नामेतिसमासः ।

## नगोऽप्राणिनि वा ॥३।२।१२७॥

नग इत्ययं निपात्योऽप्राणिनि । नगः अगो वा पर्वतः । नगा अगा वा वृक्षाः ।

## नखादय. ॥३।२।१२८॥

एतदाद्याः शब्दा अकृताकाराद्यादेशा निपात्यन्ते । नख नभ्राट् नपात् नवेदा नासत्य नमुचि नकुल नपुंसक नक्षत्र नक्र नाकादयः ।

## गतिक्वन्यस्तत्पुरुषः ॥३।१।४२॥

कु इत्यव्ययं पापाल्पयोरस्ति । गतिसंज्ञकाः कुश्च नाम नाम्ना नित्यं समस्येते स च समासोऽन्यो बहुव्रीह्यादिविलक्षणरहितस्तत्पुरुषसंज्ञः स्यात् ।

## ऊर्याद्यनुकरणच्विडाचश्च गति. ॥३।१।२॥

ऊर्यादयोऽनुकरणानि च्व्यन्ता डाजन्ताश्च शब्दा उपसर्गाश्च धातोः सम्बन्धे सति गतिसंज्ञाः स्युः । ऊरीकृत्य । पररीकृत्य खाट्कृत्य । शुक्लीकृत्य । पटपटाकृत्य । प्रकृत्य ।

## कारिका स्थित्यादौ ॥३।१।३॥

गतिः । कारिकाकृत्य । स्थितिं यत्नं क्रियां वा कृत्वेत्यर्थः ।

## भूषादरक्षेपेऽलंसदसत् ॥३।१।४॥

अलं सत् असदित्येते शब्दा यथासंख्यं भूषादरक्षेपेष्वर्थेषु वर्तमाना धातोः सम्बन्धिनो गतिसंज्ञा भवन्ति । अलङ्कृत्य । सत्कृत्य । क्षेपे असत्कृत्य ।

## अग्रहानुपदेशेऽन्तरदः ॥३।१।५॥

अन्तरद् शब्दौ गतिसंज्ञौ अग्रहानुपदेशे चार्थे । अन्तर्हत्य । मध्ये हिंसित्वा शत्रून् गत इत्यर्थः । अदः कृत्येतत्करिष्यामीति चिन्तयति । अग्रहे किम्। अन्तर्हत्वा मूषिकान् श्येनो गतः । अनुपदेशे किम्? अदः कृत्वा गतः परस्य कथयति ।

## कणेमनस्तृप्तौ ॥३।१।६॥

गती । कणेहत्य पयः पिबति । तावत्पिबति यावत्तृप्तः । एवं मनोहत्य ।

## पुरोऽस्तमव्ययम् ॥३।१।७॥

गतिः । पुरस्कृत्य । पूर्वं कृत्वेत्यर्थः । अस्तङ्गत्याऽर्कः पुनरुदेति ।

## गत्यर्थवदोऽच्छः ॥३।१।८॥

अच्छेत्यव्ययमाभिमुख्यार्थे तद्गत्यर्थानां तथा वदश्च धातोः सम्बन्धे गतिः । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वोक्त्वा चेत्यर्थः ।

## तिरोऽन्तर्धौ ॥३।१।९॥

गतिः । तिरोभूय ।

## कृञो नवा ॥३।१।१०॥

तिरः कृत्य । तिरस्कृत्य । पक्षे तिरस्कृत्वा ।

## उपाजेऽन्वाजे ॥३।१।१२॥

वा गतिः । उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । भग्नस्य बलाधानं कृत्वेत्यर्थः ।

## साक्षादादिश्च्व्यर्थे ॥३।१।१४॥

कृञो धातोः सम्बन्धिनः साक्षात्प्रभृतयः शब्दा वा गतिसंज्ञाः । साक्षात्कृत्य । साक्षात्कृत्वा वा गतः । असाक्षाद्भूतं साक्षात्कृत्वेत्यर्थः ।

## मध्येपदेनिवचनेमनस्युरस्यनत्याधाने ॥३।१।११॥

एतान्यनुपश्लेषआश्चर्ये वा गतिसंज्ञानि। मध्येकृत्य मध्येकृत्वा वा इत्यादि ।

## नित्यं हस्ते पाणावुद्वाहे ॥३।१।१५॥

कृञि धातौ गती । हस्तेकृत्य । पाणीकृत्य । भार्यां कृत्वेत्यर्थः ।

## प्राध्वं बन्धे ॥३।१।१६॥

प्राध्वंकृत्य । बन्धनेनानुकूल्यं विधायेत्यर्थः ।

## जीविकोपनिषदौपम्ये ॥३।१।१७॥

गती । जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिवोपनिषत्कृत्य । कुत्सितः पुरुषः कुपुरुषः ।

## दुर्निन्दाकृच्छ्रे ॥३।१।४३॥

दुरित्यव्ययं निन्दायां कष्टार्थे च नाम्ना समस्यते सोऽव्ययतत्पुरुषः। निन्दितः पुरुषो दुष्पुरुषः । कृच्छ्रेण कृतं दुष्कृतम् ।

## सु पूजायाम् ॥३।१।४४॥

सुइत्यव्ययं प्राग्वत् । शोभनः पुरुषः सुपुरुषः । शोभनो राजा सुराजा ।

## अतिरतिक्रमे च ॥३।१।४५॥

प्राग्वत् । अतिस्तुतं भवता । अतिसिक्तं भवता । अतिक्रमेण स्तुतिसेकौ कृतावित्यर्थः ।

## आङल्पे ॥३।१।४६॥

प्राग्वत् । ईषत्कडारः आकडारः । आबद्धमाकुलमित्यादौ क्रियायोगाद्गतिसमास एव ।

## प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः ॥४।१।४७॥

प्रादयो गताद्यर्थे प्रथमया, अत्यादयः क्रान्ताद्यर्थे द्वितीयया, अवादयः क्रुष्टाद्यर्थे तृतीयया, परादयो ग्लानाद्यर्थे चतुर्थ्या, निरादयः क्रान्ताद्यर्थे पञ्चम्या, नित्यं समस्यन्ते सोऽव्ययतत्पुरुषः । प्रगतः प्रकृष्टो वाऽऽचार्यः प्राचार्यः । प्रकृष्टो गुरुः प्रगुरुः । अतिक्रान्तः खट्वामतिखट्वः । अवक्रुष्टः कोकिलया अवकोकिलः ।

परिग्लानोऽध्ययनाय पर्यध्ययनः । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । गतार्था इति किम्? वृक्षं प्रति विद्योतते विद्युत् ।

## अव्ययं प्रवृद्धादिभिः ॥३।१।४८॥

समस्यते । पुनः प्रवृद्धम् । भ्योपसीपसम् ।

## ङस्युक्तं कृता ॥३।१।४९॥

कृत्प्रत्ययविधायके सूत्रे ङसिना पञ्चम्यन्तेन नाम्नोक्तं ङस्युक्तं तत्कृदन्तेन नाम्ना नित्यं समस्यते सोऽन्यस्तत्पुरुषः । कुम्भं करोतीति कुम्भकारः । इह च गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समास इष्यते । तेन कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । णमा णमा वा तुल्यविधानं ङस्युक्तमव्ययेन समस्यते । अयथाकारं भुङ्क्ते । अतिथिवेदं भोजयति । ङस्युक्तमिति किम्? वेला भोक्तुम् । अग्रे भोजम् । अग्रे भुक्त्वा । सप्तमीनिर्देशेन ङस्युक्तत्वाभावान्न समासः ।

## तृतीयोक्तं वा ॥३।१।५०॥

दंशेस्तृतीयया इति सूत्रमारभ्य यत्तृतीयोक्तं नाम तन्नाम्ना वा समस्यते सोऽन्यस्तत्पुरुषः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं वा । क्त्वान्तेनाप्ययं वा क्वचित् । उच्चैः कृत्वा । उच्चैः कृत्य ।

## सङ्ख्याव्ययादङ्गुलेः ॥७।३।१२४॥

एतदन्तात्तत्पुरुषाड् डः समासान्तः स्यात् । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । द्वे अङ्गुली प्रमाणमस्येत्यत्र प्रमाणे मात्रट् । तस्य लुपि ततः समासान्ते द्व्यङ्गुलं दारु । अव्ययात्, निर्गतमङ्गुलिभ्यो निरङ्गुलम् ।

## संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत् ॥७।३।११९॥

एभ्यः सर्वांशेत्यादिभ्यश्च परात्रात्रिशब्दान्तात्तत्पुरुषादत्स्यात् । संख्याता रात्रिः संख्यातरात्रः । एकरात्रः । पुण्यरात्रः । पूर्वरात्रः । द्वयो रात्र्योः समाहारो द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः ।

## गोस्तत्पुरुषात् ॥७।३।१०५॥

अलुकि अट् स्यात् । राज्ञो गौः राजगवी । अलुकीत्येव । पञ्चभिर्गोभिः क्रीतः पञ्चगुः ।

## राजन्सखेः ॥७।३।१०६॥

एतदन्तात्तत्पुरुषादट् । देवराजः । अतिराजी । राजसखः ।

## अह्नः ॥७।३।११६॥

एतदन्तादप्यट् । उत्तमाहः । एकाहम् । पुण्याहम् ।

## सख्यातादह्नश्च वा ॥७।३।११७॥

सख्याताह्नः । सख्याताहः ।

## सर्वांशसख्याव्ययात् ॥७।३।११८॥

सर्वमहः सर्वाह्णः । पूर्वाह्णः । द्वयोरह्नोर्भवो द्व्यह्नः पटः । द्व्यह्नी अष्टका ।

## क्षुभ्नादीनाम् ॥२।३।१९६॥

एषु णत्व न । दीर्घाह्नी प्रावृट् ।

## अतोऽह्नस्य ॥२।३।७२॥

रेफादिमतोऽकारान्तात्पूर्वपदात्परस्याह्नशब्दस्य नकारस्य णत्वं स्यात् । सर्वाह्णः । अत इति किम्? निरह्नम् ।

## द्विगोरह्नोऽट् ॥७।३।९९॥

अहन्तादहन्शब्दाच्च द्विगोः समाहारेऽर्थेऽट् स्यात् । सातराजी । सातराजम् । द्व्यहः ।

## उरसोऽग्रे ॥७।३।११४॥

अग्रं मुख्यं प्रधानं वा तस्मिन्नुरसोऽट् स्यात् । अश्वानामुर इवाऽश्वोरसम् । मुख्योऽश्व इत्यर्थः ।

## सरोऽनोऽश्मायसो जातिनाम्नोः ॥७।३।११५॥

एतदन्तात्तत्पुरुषादट् स्याज्जातौ संज्ञायां च । जातसरसम् । उपानसम् । महानसम् । स्थूलाश्मः । अमृताश्मः । कनकाश्मः । जातिविशेषा एते । कोहि तापसमिति ना श्लोके ।

## ग्रामकौटात्तक्ष्णः ॥७।३।१०९॥

अट् । ग्रामस्य तक्षा ग्रामतक्षः । ग्रामसाधारणः । कौटतक्षः । स्वतन्त्रः । न केनाऽपि प्रतिबद्ध इत्यर्थः ।

## प्राणिन उपमानात् ॥७।३।१११॥

शुनोऽट् । व्याघ्र इव व्याघ्रः । स चासौ श्वा च व्याघ्रश्वः ।

## अप्राणिनि ॥७।३।११२॥

अप्राणिनि च उपमानवाचिनि श्वन्शब्दात्तदन्तादट् । श्वेव श्वा । आकर्षश्चासौ श्वा चाऽऽकर्षश्वः । फाकटश्वः ।

## पूर्वोत्तरमृगाच्च सक्थ्नः ॥७।३।११३॥

एभ्य उपमानवाचिनश्च शब्दात्परो यः सक्थिशब्दस्तदन्तादट्। पूर्वसक्थम्। उत्तरसक्थम्। मृगसक्थम्। फलकसक्थम्।

## नावः ॥७।३।१०४॥

अर्धशब्दात्परो यो नौस्तदन्तात्तथा द्विगोश्च नौशब्दान्तादट् स्यात्। अर्धनावं। अर्धनावी। द्विनावम्। त्रिनावम्। अलुकीत्येव। द्वाभ्यां नौभ्यां क्रीतो द्विनौ। पञ्चनौ।

## वार्धाच्च ॥७।३।१०३॥

खारीशब्दादलुकोऽट् वा स्यात्। अर्धं खार्याः अर्धखारम्। अर्धखारी।

## खार्य्या वा ॥७।३।१०२॥

द्विगोः खार्या अट् वा। द्विखारम्। द्विखारि।

## वाञ्जलेरलुकः ॥७।३।१०१॥

द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तदन्ताद्द्विगोरट् वा स्यात्, नचेद्द्विगुस्तद्धित लुगन्तः स्यात्। द्वयोरञ्जल्योः समाहारो द्व्यञ्जलं द्व्यञ्जलि वा। अलुक इत्येव। द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः।

## नञव्ययात्सङ्ख्याया डः ॥७।३।१२३॥

अनवाः। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः। निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि।

## राष्ट्राख्याद्ब्रह्मणः ॥७।३।१०७॥

राष्ट्रवाचिनः परो यो ब्रह्मन् तदन्तादट्। सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः।

## कुमहद्भ्यां वा ॥७।३।१०८॥

पापो ब्रह्मा कुब्रह्मः। कुब्रह्मा वा।

## जातीयैकार्थेऽच्वेः ॥३।२।७०॥

महतोऽच्व्यन्तस्य जातीयप्रत्यये एकार्थे चोत्तरपदे परे डान्तादेशः स्यात्। महान् प्रकारोऽस्य महाजातीयः। महाँश्चासौ वीरश्च महावीरः। महादेवः। एकार्थे इति किम्? महतः सेवा महत्सेवा। जातीय इति किम्? प्रकृष्टो महान् महत्तरः। वैयधिकरण्येऽपि।

## महतः करघासविशिष्टे डाः ॥३।२।६८॥

वा। महतः करो महत्करः। महाकरः।

## स्त्रियाम् ॥३।२।६९॥

पूर्वेण सिद्धे नियमार्थमिदम्। महत्याः करो महाकरः। महत्या घासो महाघासः।

## पुंवत्कर्मधारये ॥३।२।७०॥

इति पुंवद्भावेऽप्यात्वम्। महानवमी। अच्वेरिति किम्? अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रः।

## हविष्यष्टनः कपाले ॥३।२।७३॥

दीर्घोऽन्तादेशः स्यात्। अष्टाकपालं हविः।

## गवि युक्ते ॥३।२।७४॥

अष्टागवं शकटम्।

## नाम्नि ॥३।२।७५॥

अष्टापदम्।

## ऋषौ विश्वस्य मित्रे ॥३।२।७९॥

विश्वामित्रः।

## नरे ॥३।२।८०॥

विश्वानरः कश्चित्।

## वसुराटोः ॥३।२।८१॥

विश्वावसुः। विश्वाराट्। विश्वाराजौ।

## द्वित्र्यष्टानां द्वात्रयोऽष्टाः प्राक्शतादन-शीति बहुव्रीहौ ॥३।२।९२॥

द्वौ च दश च द्वादश। द्व्यधिका दशेति वा। द्वाविंशतिः। द्वात्रिंशत्। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्। अष्टादश। अष्टाविंशतिः। अष्टात्रिंशत्। प्राक्शतादिति किम्? द्विशतम्। द्व्यशीतिः। द्विर्दशा द्विदशा घटाः। प्राक् शतादित्यस्मिन् संख्यापरिग्रहादिह न भवति। द्वैमातुरः।

## चत्वारिंशदादौ वा ॥३।२।९३॥

प्राग्वत्। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वा रिंशत्। अष्टचत्वारिंशत्। अष्टाचत्वारिंशद्वा।

## न विंशत्यादिनैकोऽच्चान्तः ॥३।१।५९॥

एकशब्दस्तृतीयान्तो न विंशत्यादिना सार्द्धं समस्यते स तत्पुरुषः। एकश ब्दस्य चादन्तः स्यात्। एकेन न विंशतिः, एकान्नविंशतिः। पक्षे एकानूनविंशतिः। एकान्नत्रिंशत्। एकानूनत्रिंशत्। नविंशत्यादिनेतिनिर्देशान्नत्वस्य कारो न।

## एकादशषोडशषोडत्षोढा-
## षड्ढा ॥३।२।९१॥

एते निपात्याः कृतदीर्घत्वादयः। एकोत्तरा दश एकश्च दश चेति वा एका दश। अत्रैकस्य दीर्घत्वम्। षषोऽन्त्यस्योत्वं दस्य डत्वमिति। अत्र परलिङ्गो द्वन्द्वोंऽशीतिपरलिङ्गमेव। अर्धपिप्पली। द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु परलि ङ्गतानिषेधात्। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। अलङ्कुमार्यै अलङ्कुमारिः। निष्कौशाम्बिः। अश्वश्च वडवा च अश्ववडवं समाहारे। अन्यत्र अश्ववडवौ। वडवाशब्दस्य ह्रस्वोऽश्ववडवेतिसूत्रनि र्देशादेव। अश्ववडवान्। अश्ववडवैरिति। पूर्वरात्र इत्यादिषु रात्राह्नाहाः पुंसि पूर्वाह्णः। द्व्यहः। परलिङ्गापवादोऽयम्। संख्यापूर्वो द्विगुः॥ रात्रान्तः क्लीबे। द्विरात्रम्। त्रिरात्रम्। अपन्थाः। परलिङ्गः। अपथं तु पथशब्दादकारान्तात्। अर्धर्चादयः पुंसि क्लीबे च। अर्धर्चः। अर्धर्चम्। ध्वजः। ध्वजम्। एवं तीर्थ शरीरादयः।

## जात्याख्यायां नवैकोऽसंख्यो बहुवत् ॥२।२।१२१॥

एकोऽप्यर्थः संख्याद्यविशेषणरहितो बहुवत्स्यात्। सम्पन्नो यवः। स म्पन्ना यवाः। मुनिः पूज्यः। मुनयः पूज्याः।

## अविशेषणे द्वौ चास्मदः ॥२।२।१२२॥

अस्मदो द्व्येकार्थौ बहुवद्भवति, अविशेषणे। आवां ब्रूवः। अहं ब्रवीमि। वयं ब्रूम। विशेषणे तु। आवां गार्ग्यौ ब्रूव इत्येव।

## फाल्गुनी प्रोष्ठपदस्य भे ॥२।२।१२३॥

द्वित्वे बहुवद्वा स्यात्। पूर्वे फाल्गुन्यौ। पूर्वाः फाल्गुन्यः। पूर्वे प्रोष्ठपदे। पूर्वाः प्रोष्ठपदाः। पुष्यार्थाद्भे पुनर्वसुः॥ नक्षत्रार्थात्पुष्यशब्दात्परो नक्षत्रवाची पुनर्वसुशब्द एक एकार्थः स्यात्। उदितौ पुष्यपुनर्वसू। पर्यायेऽपि तिष्यपुनर्वसू।

## गुरावेकश्च ॥२।२।१२४॥

गौरवार्थे द्वावेकश्च बहुवत्स्यात्। त्वं गुरवः। यूयं गुरवः। युवां गुरू। यूयं गुरवः। पात्रादिवर्जिताबन्तोत्तरपदः समाहारे। त्रिपुरभावन्तान्तो वाऽन्यस्तु सर्वो नपुंसकम्॥ १ ॥ स्वल सुधि तथा लक्ष्य येष्योऽह स्तुदिनैकतः। भूमोऽसं स्यात एकार्थे पथः सकपाव्ययोत्तरः॥ २ ॥ द्वन्द्वैकत्वाव्ययीभावौ क्रियाव्यय विशेषणे। कृशा शाला च्छ जिन्भावे आत्याश्वादिः समूहजः॥ ३ ॥ नाव्यायण् स्वार्थेऽव्यक्तमथा नञ्कर्मधारयः। तत्पुरुषो बहूनां येच्छाया शाला विना सभा॥ ४ ॥ राजवर्जितराजार्थराक्षसादेः पराऽपि च। आद्यापुपक्रमोपज्ञे कन्योशीनरनाम्नि च॥ ५ ॥ सेना शाला सुरा छाया निशा योर्णा शशात्परा। माह्मणो यहतः स्थूणा मक्या वन्ता शतादिका॥ ६ ॥ इत्यादि लिङ्गानुशासनम्। तत्पुरुषो नञ्कर्मधारय इति वचनादृसेनो राजा। असेना। परमसेना।

इति तत्पुरुष ।

---

अथ बहुव्रीहि ।

## एकार्थं चानेक च ॥३।१।२२॥

एकमनेकं चैकार्थं नामाव्ययं च नाम्ना द्वितीयाद्यन्तस्यान्यपदस्यार्थे समस्यते स समासो बहुव्रीहिसंज्ञः। समानाधिकरणमेकार्थम्। नता इन्द्रा च स नतेन्द्रः। विश्रावितो घोषो येन स विश्रावितघोषः। दत्तं दानं येभ्यस्ते दत्तदानाः। वीतं वौस्त्य येभ्यस्ते वीतवौस्त्याः। अनन्तं ज्ञानं यषु तेऽनन्तज्ञानाः। आरूढा बहवो नरा यं स आरूढबहुनरो गजः। पञ्चेन्द्रियमस्य स पञ्चेन्द्रियः। एकार्थं इति किम्? पञ्चभिर्भुक्तमस्य। द्वितीयाद्यन्यार्थे इत्येव। वृष्टे मेघे गतः। बहुलाधिकाराद्राजन्वती भूरनेन, प्राग् ग्रामोऽस्मात्, पञ्च भुक्तवन्तोऽस्यैत्यादौ न समासः।

## उष्ट्रमुखादयः ॥३।१।२३॥

उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। प्रादिपूर्वं धातुजं पदं समस्यते, विकल्पेन चोत्तरपदलोपः। प्रपतितानि पर्णानि अस्येति प्रपतितपर्णः। प्रपर्णः। नञ्पूर्वमस्त्यर्थं पदं समस्यते वा चोत्तरपदलोपः। अविद्यमानः पुत्रः अपुत्रः। अस्तीत्यव्ययं विभक्तिप्रतिरूपकम्। अस्तिक्षीरमस्या अस्तिक्षीरा गौः।

## परतः स्त्री पुंवत्स्त्र्येकार्थेऽनूङ् ॥३।२।४९॥

परतो विशेष्यवशात्स्त्रीलिङ्गः शब्दः स स्त्रियां वर्तमाने एकार्थे तुल्या- धिकरणे उत्तरपदे परे पुंवत्स्यात्, अनेकूङन्तः। पचन्ती भार्या यस्य स पच-

र्यार्यः। कल्याणी चासौ पञ्चमी च कल्याणपञ्चमी । पट्वी च मृद्वी च ते पट्वीमृद्व्यौ। ते भार्ये अस्येति पट्वीमृदुभार्यः। अत्र द्वन्द्वपदानां परस्परार्थसङ्क्रमाद्यभावेन मृदुशब्दस्य द्वयर्थेन भार्याशब्देन सामानाधिकरण्यात् पुंवद्भावो न पट्वीशब्दस्य व्यवधानात्। एवं चित्राजरद्गुः। कर्मधारयपूर्वपदे तु द्वयोरपि पुंवद्भावः। जरच्चित्रगुः। कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः। परत इति किम्? गङ्गा भार्यः। स्त्रीति किम्? ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः। समानाधिकरण इति किम्? कल्याणी वस्त्रम्। स्त्रीग्रहणं किम्? कल्याणी प्रधानमस्य कल्याणीप्रधानः। एकार्थ इति किम्? कल्याण्या माता कल्याणीमाता। अनूङिति किम्? वामोरुभार्यः। प्रसज्यप्रतिषेधोऽयम्।

## पूरणीभ्यस्तत्प्राधान्येऽप् ॥७।३।१३०॥

पूरणप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्ताद्बहुव्रीहेरप् स्यात्, तस्याः पूरण्याः प्राधान्येन समासेनाऽभिधीयमानोऽर्थः प्रधानं स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः।

## प्रमाणीसङ्ख्याड्डः ॥७।३।१२८॥

प्रमाणीशब्दान्तात्सङ्ख्यावाचिशब्दान्ताच्च बहुव्रीहेर्डः स्यात्। स्त्रीप्रमाणी येषां ते स्त्रीप्रमाणाः कुटुम्बिनः।

## सुज्वार्थे सङ्ख्या संख्येये संख्यया बहुव्रीहिः ॥३।१।१९॥

सुचोऽर्थो वारः। वार्थो विकल्पः संशयो वा। सुज्वार्थे वर्तमान सङ्ख्यावाचि नाम सङ्ख्येये वर्तमानेन सङ्ख्यावाचि नाम समस्यते ऐकार्थ्ये स बहुव्रीहिः। द्वौ वा त्रयो वा द्वित्राः। पञ्चषाः। द्विदशाः। त्रिदशाः।

## आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे ॥३।१।२०॥

आसन्नादीनि नामानि अर्धशब्दपूर्वपदं च पूरणप्रत्ययान्तं नाम संख्येये कार्ये समस्यते, द्वितीयाद्यन्तस्यान्यपदस्यार्थे संख्येयरूपेऽभिधेये स समासो बहुव्रीहिः। आसन्ना दश दशानां वा येषां ते आसन्नदशाः। अदूरदशाः। अधिकदशाः। अध्यर्धविंशाः। अर्धपञ्चमा विंशतयो येषां तेऽर्धपञ्चमविंशाः। नवतिरित्यर्थः।

## ऋन्नित्यदितः ॥७।३।१७२॥

ऋकारान्तान्नित्यदितश्च शब्दाद्बहुव्रीहेः कच् समासान्तः स्यात्। कल्याण

पञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्याऽवयवार्पतया रात्रिरप्रधा मम्। बहुकर्तृको घटः। बहुकुमारीको देशः। बहुब्रह्मबन्धूको ग्रामः। नियमार्थं किम्? पृथुश्रीः। पृथुश्रीकः। कल्याणी। कल्याणप्रियः। न कपि॥ नञाऽऽपः। प्रियपञ्चाक। प्रियपञ्चकः।

## नाऽप्रियादौ ॥३।२।५३॥

पूरणप्रत्ययान्ते स्त्रीवाच्ये उत्तरपदे प्रियादौ च परे परतः स्त्री पुंवन्न स्यात्। कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः। कल्याणी प्रियाऽस्य कल्याणीप्रियः। अप्रियादाविति किम्? कल्याणपञ्चमीकः पक्षः। सामान्ये नपुंसकम्। दृढं भक्तिर्यस्य स दृढभक्तिः।

## क्यङ्मानिपित्तद्धिते ॥३।२।५०॥

क्यङि प्रत्यये मानिनि शब्दे चोत्तरपदे पिति तद्धिते च परे परतः स्त्री अनूङ् पुंवत्स्यात्। श्येनीवाचरतीति श्येतायते। दर्शनीयां मन्यते दर्शनीयमा न्यियमस्याः। तद्धितपितीति, अजाये हितमजव्यम्। पितिपदि, बह्वीनां पूरणी बहुतिथी। एवरहि, भूतपूर्वा पट्वी पटुचरी। पित्तसि, बह्वीभ्यो बहुतः। थप्, बह्वीषु बहुत्र। प्धाम्, बह्वीभ्यो देहि बहुशो देहि। पाशप्, निन्द्या दर्शनीया दर्शनीयपाशा। तमप्, इयमासामतिशयेन पक्वा पक्वतमा। तरप्, इयमनयो रतिशयेन पक्वा पक्वतरा। एव दर्शनीयरूपा। दर्शनीयकल्पा। दर्शनीयदेश्या। ह्रस्वा दर्शनीया दर्शनीयका। कथं पट्वीका मृद्वीका? ज्ञापितिवृतः के हस्वत्व नीम इत्थं पुंवद्भावबाधनार्थम्। तेन ह्रस्वः। पट्वितरा। पट्वितमा। पित्ग्रहणात्पट्वीमयम्।

## त्वते गुणः ॥३।२।५९॥

परतः क्यङ्गुणवचनः शब्दस्त्वतलयोः परतः पुंवत्। पट्व्या भावः पटुत्वम्। पटुता। गुण इति किम्? कर्त्रीत्वम्।

## एयेऽग्नायी ॥३।२।५२॥

तद्धिते एयप्रत्ययेऽग्नायी एव पुंवत्। अग्नायी देवताऽस्येत्याग्नेयः। इह न। श्यैनेयः। रौहिणेयः।

## जातिश्च णितद्धितयस्वरे ॥३।२।५१॥

पुंवत्। णौ, पट्वीमाचष्टे पटयति। तद्धिते ये, पण्यां साधुरेत्यः। कोकिल्यां साधु कौकिलम्। तद्धितस्वरे, भवत्या इदं भावत्कम्। इकण्। इकारलोपः। भवत्या इदं भवदीयम्। पारदीयः। इयमासामतिशयेन पट्वी पटिष्ठा। पटीयसी। हस्तिनीनां समूहो हास्तिकम्। सापत्न इत्यत्र सपत्न्यावाविति सूत्रे सपत्नीति समुदायनिपातनात्। अतएव सपत्नी भार्या यस्य स सपत्नीभार्यः इत्यत्र न पुंवद्भावः। सपत्नस्यायं सापत्न इति वा भविष्यति।

## रिति ॥३।२।५१॥

परतः स्त्र्यनूङ् रिति प्रत्यये पुंवत्। पट्वी प्रकारोऽस्याः पटुजातीया।

## सर्वादयोऽस्यादौ ॥३।२।६१॥

सर्वादिर्गणः परतः स्त्री पुंवत्, न चेत्ततः परः स्यादिः स्यात्। सर्वासां प्रियः सर्वप्रियः। एकस्याः क्षीरमेकक्षीरम्। एकस्या आगतमेकरूप्यम्। एकमयम्। तस्यां वेलायां तदा। सर्वामिच्छति सर्वकाम्यति। सर्विका भार्याऽस्य सर्वकभार्यः। सर्वा प्रियाऽस्य सर्वप्रियः।

## मृगक्षीरादिषु वा ॥३।२।६२॥

मृग्याः क्षीरं मृगक्षीरम् मृगीक्षीरं वा।

## तद्धिताककोपान्त्यपूरण्याख्याः ॥३।२।५४॥

तद्धितप्रत्ययस्याकप्रत्ययस्य च यः ककारस्तदुपान्त्याः पूरणीप्रत्ययान्ताः तथाऽऽख्याः संज्ञाश्च परतः स्त्रियः पुंवन्न स्युः। पाचिकाभार्यः। तद्धिते, मद्रिकाभार्यः। पूरणी, द्वितीयाभार्यः। आख्या, दत्ताभार्यः।

## तद्धितः स्वरवृद्धिहेतुररक्तविकारे ॥३।२।५५॥

स्वरस्याद्यस्य वृद्धेर्हेतुर्यस्तद्धितस्तदन्तः स्त्रीलिङ्गः पुंवन्न स्यात्, रक्तार्थविकारार्थं विना। माथुरीभार्यः माथुरीमानिनी। तद्धित इति किम्? कुम्भकारी भार्याऽस्य कुम्भकारभार्यः। अरक्तविकार इति किम्? कषायेण रक्ता काषायी। सा कन्था यस्य स काषायकन्थः। विकारे, हेम्नो विकारो हैमी। सा मुद्रिकाऽस्य स हैममुद्रिकः।

## स्वाङ्गान्ङीर्जातिश्चामानिनि ॥३।२।५६॥

स्वाङ्गाद्विहितो यो ङीस्तदन्तो जातिशब्दश्च परतः स्त्री न पुंवत्, अमानिनि। सुकेशीभार्यः। शूद्राभार्यः। अमानिनीति किम्? सुकेशमानिनी। कठमानिनी। अत्र जातिनिषेधाद्धस्तिनीनां समूहो हास्तिकमिति पुंवद्भावो न स्यादिति न वाच्यम्। तत्सूत्रे जातिश्चेत्यादौ तद्धितयकारे इति विशेषात्। आसन्नविंशा इत्यत्र प्रमाणीसंख्याड्डः इति डप्रत्यये।

## विंशतेस्तेर्डिति ॥७।४।६७॥

विंशतिशब्दस्यावयवस्य तिइत्यस्य सर्वस्य लुक् स्यात् डिति। एवमदूरविंशा।

## अव्ययम् ॥३।१।२१॥

अव्ययं संख्यया समस्यते। उप समीपे दश येषां ते उपदशाः। नव एकादश वेत्यर्थः। एवमुपविंशाः। उपत्रिंशाः।

## दिशो रूढ्यान्तराले ॥३।१।२५॥

दिग्नामस्यैव दिग्नाम्ना समस्यतेऽन्तरालेऽभिधेये । दक्षिणस्याः पूर्वस्याश्चान्तरालं या दिक् सा दक्षिणपूर्वा । एवं पूर्वोत्तरा ।

## तत्रादायमिथस्तेन प्रहृत्येतिसरूपेण युद्धेऽव्ययीभावः ॥३।१।२६॥

तत्रेति सप्तम्यन्तं मिथ आदायेति क्रियासमभिव्याहारे तथा तेनेति तृतीयान्तं मिथः प्रहृत्येति क्रियाव्यतिहारे सरूपेण नाम्ना युद्धविषयेऽन्यपदार्थे समस्यते सोऽव्ययीभावः । अन्यार्थत्वाद्बहुव्रीहिरपि इति केचित् । केशेषु केशेषु मिथो गृहीत्वा कृतं युद्धं केशाकेशि ।

## इच्युद्धे ॥७।३।७४॥

समासान्तः इच्प्रत्यये दीर्घं आच इच्प्रत्ययाद्युत्तरपदे परे पूर्वपदस्य दीर्घं आकारश्चान्तादेशः स्यात् । बाहुषु बाहुषु मिथो गृहीत्वा व्यासक्तं बाहूबाहवि । बाहाबाहवि ।

## अस्वयंभुवोऽव् ॥७।४।७०॥

स्वयंभूवर्जस्यापदस्योवर्णान्तस्य तद्धिते परेऽव् इत्यादेशः स्यात् । एवं मुष्टामुष्टि । मुष्टीमुष्टि । अस्वर इति किम् ? अस्वसि ।

## सहस्तेन ॥३।१।२४॥

सहेति नाम तुल्ययोगे विद्यमानार्थे च वर्तमानं तृतीयान्तेन प्राग्वत् ।

## सहस्य सोऽन्यार्थे ॥३।२।१४३॥

बहुव्रीहावुत्तरपदे परे सहस्य सो वा स्यात् । पुत्रेण सह सपुत्रः । सहपुत्रो वाऽऽगतः । सकर्मकः । सलोमकः ।

## नाशिष्यगोवत्सहले ॥३।२।१४८॥

आशिषि गम्यायां गवादिवर्जिते उत्तरपदे परे सहस्य सो न स्यात् । स्वस्ति श्रीविजयसेनाय सहपरिवाराय ।

## वहोर्डे ॥७।३।७३॥

बहुमसह्यो यत्र ततो बहन्तात्समासान्तो डः कच् न भवति । उपबहवाः । उपगणाः । इति तु बान्तमेव ।

## सक्थ्यक्ष्णः स्वाङ्गे ॥७।३।१२६॥

टः दीर्घे सक्थि यस्य स दीर्घसक्थः। विशालाक्ष । दित्यान्निशालाक्षी। पद्माक्ष । पद्माक्षी।

## बहुव्रीहेः काष्ठे टः ॥७।३।१२५॥

अङ्गुल्यन्तादस्माट्ट स्यात्। द्वे अङ्गुली यस्य तद् द्व्यङ्गुल काष्ठम्। बहुव्रीहे रिति किम्? द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः।

## द्वित्रेर्मूर्ध्नो वा ॥७।३।१२७॥

द्विमूर्ध । त्रिमूर्ध । पक्षे द्विमूर्धा। त्रिमूर्धा।

## भान्नेतुः ॥७।३।१३३॥

अप्। मृगो नेता यासां ता मृगनेत्राः। पुष्यनेत्रा।

## अन्तर्वहिर्भ्यां लोम्नः ॥७।३।१३२॥

अप्। अन्तर्लोम । बहिर्लोम ।

## अस्थूलाच्च नसः ॥७।३।१६१॥

स्थूलवर्जितात्पूर्वपदात्खरखुराभ्यां च परस्य नासिकाशब्दस्य नस इत्यादेशः स्यात् अवन्तो बहुव्रीहौ नाम्नि॥ द्रुरिव नासिकाऽस्य द्रुणसः। खरणस ।

## पूर्वपदस्थान्नाम्न्यगः ॥२।३।६४॥

पूर्वपदस्थाद्रष्टवर्णात्परस्य नस्य ण स्यात्तु गकारव्यवधाने। अस्थूला दिकम्? स्थूलनासिकः।

## खुरखराान्नासिकाया नस् ॥७।३।१६०॥

नाम्नि। खरा खरस्येव वा नासिका यस्य खरणा। खरणसौ। एव खुरणा। पक्षे नस इत्यन्तोऽपि। खुरणस।

## उपसर्गात् ॥७।३।१६२॥

प्राग्वत्। प्रगता प्रकृष्टा वा नासिका यस्य स प्रणसः। उन्नता उद्गता वा नासिका यस्य तदुन्नस मुखम्। असंज्ञार्थो योग।

## नसस्य ॥२।३।६५॥

पूर्वपदस्थान्निमित्तात्परस्य नसस्य नो ण् स्यात्।

## वेः खु ख्र ग्रम् ॥२।३।१६३॥

वे परस्य नासिकाशब्दस्य बहुव्रीहौ खुख्रग्र इत्येते आदेशाः स्युः। विखुः। विख्र । विग्र । ख्योऽपि इति केचित्। विख्य । गोनासस्तु नासाशब्दस्य।

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरस्त्रैणीपदाजपदप्रोष्ठपदभद्रपदम् ॥७।३।१२९॥

एते बहुव्रीहौ समासान्ता निपात्याः । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरस्रः । एण्या इव पादा अस्यैणीपदः । अजपदः । प्रोष्ठो गौः । तस्येव पादा अस्य प्रोष्ठपदः । भद्रपदः ।

## नञ्सुदुर्भ्यः सक्तिसक्थिहलेर्वा ॥७।३।१३६॥

एभ्यः परे ये सक्त्यादयस्तदन्ताद्बहुव्रीहेरप् स्यात् । असक्तः । असक्तिः । सुसक्तः । सुसक्तिः । दुःसक्तः । दुःसक्तिः । एवमसक्थः । अहल इत्यादि ।

## भृतिप्रत्ययान्मासादिकः ॥७।३।१४०॥

भृत्यर्थे विहितप्रत्ययान्तान्मासशब्दादिकः प्रत्ययः स्यात् । पञ्च भृतिरस्य पञ्चक । पञ्चको मासोऽस्य पञ्चकमासिकः ।

## प्रजाया अस् ॥७।३।१७३॥

प्रजादेः परस्य प्रजान्तस्य बहुव्रीहेरस् स्यात् । प्रप्रजाः । अप्रजसावित्यादि ।

## मन्दाल्पाच्च मेधायाः ॥७।३।१३८॥

प्राग्वत् । अमेधाः । सुमेधाः । मन्दमेधाः । अल्पमेधाः ।

## द्विपदाद्धर्मादन् ॥७।३।१४१॥

धर्मशब्दान्ताद्द्विपदादन् स्यात् । साधुधर्मा । परमः स्वो धर्मो यस्य स परमस्वधर्मकः । नात्रान् । सन्दिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । एवं परमस्वधर्मेत्यपि साधु ।

## सुहरिततृणसोमाज्जम्भात् ॥७।३।१४२॥

अन् तथैव । जम्भो भक्ष्ये दन्ते च । शोभनो जम्भो यस्य स सुजम्भा । सुजम्भामौ ।

## द्विदण्ड्यादि. ॥१।३।७५॥

गणोऽयमिजन्तः साधुरेव । द्वौ दण्डावस्मिन् प्रहरणे द्विदण्डि प्रहरति । द्विमुसलि । उभाहस्ति । उभयाहस्ति ।

## सम्राज्ञानोर्ज्ञुज्ञौ ॥७।३।१५५॥

सम्प्रपूर्वाज्जानोर्बहुव्रीहौ ज्ञुज्ञौ एतौ स्तः । प्रगते जानुनी अस्य प्रज्ञुः । सङ्गते जानुनी अस्य सज्ञुः । एवं प्रज्ञः । सज्ञः ।

## वोर्ध्वात् ॥७।३।१५६॥

ऊर्ध्वज्ञुः । ऊर्ध्वज्ञः । पक्षे ऊर्ध्वजानुः ।

## धनुषो धन्वन् ॥७।३।१५८॥

शार्ङ्गधन्वा ।

## वा नाम्नि ॥७।३।१५९॥

शतधन्वा । शतधनुः ।

## जायाया जानिः ॥७।३।१६४॥

युवतिर्जायाऽस्य युवजानिः ।

## सुपूत्युत्सुरभेर्गन्धादिद्गुणे ॥७।३।१४४॥

एभ्यः परात् गन्धशब्दाद्बहुव्रीहौ इत्समासान्तः स्यात् । सुगन्धिः । पूतिगन्धिः । उद्गन्धिः । सुरभिगन्धिः । नेह शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणिकः । अत्र द्रव्यार्थो गन्धशब्दो न तु गुणः ।

## वागन्तौ ॥७।३।१४५॥

स्वादिपूर्वादाहार्यगुणवृत्तिगन्धशब्दात् तादृग्बहुव्रीहेरिद्वा । सुगन्धि सुगन्धं वा शरीरम् ।

## वाऽल्पे ॥७।३।१४६॥

अल्पार्थे इत्समासान्तो वा । सूपस्य गन्धो लेशो यत्र सूपगन्धि सूपगन्धं वा भोजनम् । घृतगन्धि घृतगन्धं वा ।

## वोपमानात् ॥७।३।१४७॥

पद्मस्येव गन्धोऽस्य पद्मगन्धि पद्मगन्धं वा मुखम् ।

## पात्पादस्याहस्त्यादेः ॥७।३।१४८॥

उपमानात्परस्य पादस्य पात् इत्यादेशः स्यात् बहुव्रीहौ । व्याघ्रस्येव पादा अस्य व्याघ्रपात् । हस्त्यादिवर्जनाद्धस्तिपादः ।

## कुम्भपद्यादिः ॥७।३।१४९॥

अयं गणः कृतपदादेशो ङ्यन्तश्च बहुव्रीहौ निपात्यते । कुम्भपदी स्त्री । पुरुषः कुम्भपादः ।

## सुसंख्यात् ॥७।३।१५०॥

परस्य पादस्य पात्। शोभनौ पादावस्य सुपात्। द्विपात्। त्रिपात्।

## वयसि दन्तस्य दत् ॥७।३।१५१॥

सङ्ख्यासुपूर्वस्य दन्तशब्दस्य बहुव्रीहौ वयसि गम्यमाने दत् इत्यादेशः स्यात्। सुदन् बालः। सुदती स्त्री। चतुर्दन्। षड् दन्ता अस्य षोडन्।

## स्त्रियां नाम्नि ॥७।३।१५२॥

अय इव दन्ता यस्याः सा अयोदती। फालदती।

## श्यावारोकाद्वा ॥७।३।१५३॥

श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः। निर्दीप्तिका। निश्छिद्रा वा दन्ता यस्य स एवमुच्यते।

## वाऽग्रान्तशुद्धशुभ्रवराहाहिमूषिकवृषशिखरात् ॥७।३।१५४॥

अग्रान्तेभ्यः शुद्धादिभ्यश्च परस्य दन्तशब्दस्य दत् इत्यादेशो वा स्यात्। कुड्मलाग्रदन्। कुड्मलाग्रदन्तो वा। शुद्धदन्। शुद्धदन्त इत्यादि।

## ककुदस्यावस्थायाम् ॥७।३।१६७॥

वयसि गम्यमाने ककुदशब्दस्य लुक् स्यात् बहुव्रीहौ। अजातककुद् बालः। पूर्णककुत्तरुणः। सन्नककुद् वृद्धः।

## त्रिककुद्गिरौ ॥७।३।१६८॥

त्रिककुदोऽन्यः।

## व्युदः काकुदस्य लुक् ॥७।३।१६५॥

विगतं काकुदं तालु अस्येति विकाकुत्। एवमुत्काकुत्।

## पूर्णाद्वा ॥७।३।१६६॥

पूर्णकाकुत्। पूर्णकाकुदः।

## हृदयस्य हृल्लासलेखाण्ये ॥३।२।८४॥

हृदयस्य लासलेखयोरुत्तरपदयोरणि ये च प्रत्यये परे हृदादेशः। हृल्लासः। हृल्लेखः। लसोऽन्यत्र तो न तु घञन्तः। हृदयस्य लेखो हृदयलेखः। हृदयं लिखतीति हृल्लेखः। अणि तद्धिते हार्दम्। सौहार्दम्। हृदयस्य प्रियो हृद्यः। लेखग्रहणाज्ज्ञापकादुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति।

## सुहृद्दुर्हृन्मित्रामित्रे ॥७।३।१५७॥

सुहृत्। दुर्हृत्।

## दध्युरःसर्पिर्मधूपानच्छालेः ॥७।३।१७२॥

बहुव्रीहौ कच्। प्रियदधिकः। व्यूढोरस्कः। प्रियसर्पिष्कः। इत्यादि।

## पुमनडुन्नौपयोलक्ष्म्या एकत्वे ॥७।३।१७३॥

प्रियः पुमानस्य प्रियपुंस्कः। प्रियलक्ष्मीकः। एकत्वे इति किम्? द्वौ पुमांसौ यस्य भूयस्त्वे द्विपुमान्। द्विपुंस्कः। बहुपुमान्। बहुपुंस्कः।

## नञोऽर्थात् ॥७।३।१७४॥

अनर्थकम्। नञः किम्? अपार्थम्। अपार्थकम्।

## शेषाद्वा ॥७।३।१७५॥

अनुक्तसमासान्ताच्छेषाद्बहुव्रीहेः कच् वा स्यात्। महायशस्कः। महायशाः। बहुमालाकः। बहुमालः।

## इनः कच् ॥७।३।१७०॥

इन्नन्ताद्बहुव्रीहेः स्त्रियां कच् स्यात्। बहवो दण्डिनोऽस्यां पुर्यां बहुदण्डिका। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। बहुवाग्मिका। स्त्रियां किम्? बहुदण्डी, बहुदण्डिको ग्रामः। शेषादिति किम्? प्रियपथः।

## न नाम्नि ॥७।३।१७६॥

शेषादिति कच् संज्ञायां न स्यात्। विश्वे देवा अस्य विश्वदेवो नाम नरः। पद्मश्रीर्नाम स्त्री।

## ईयसो ॥७।३।१७७॥

ईयसन्तात्समासात्कच् न स्यात्। बहवः श्रेयांसोऽस्य बहुश्रेयान्। लिङ्गविशिष्टस्यापि ग्रहणात् बहव्यः श्रेयस्योऽस्य बहुश्रेयसी।

## सहात्तुल्ययोगे ॥७।३।१७८॥

सहादेव बहुव्रीहेः कच् न स्यात्। सपुत्र आगतः।

## भ्रातुः स्तुतौ ॥७।३।१७९॥

कच् न स्यात्। शोभनो भ्राताऽस्य सुभ्राता। स्तुतौ किम्? मूर्खभ्रातृकः।

## नाडीतन्त्रीभ्यां स्वाङ्गे ॥७।३।१८०॥

स्वाङ्गवाचिनाडीतन्त्रीशब्दान्तात्कच् न स्यात्। बहुनाडिः कायः। बहुतन्त्री ग्रीवा। तन्त्रीरिह धमनी। ङीप्रत्ययान्तत्वाभावान्न ह्रस्वः। स्वाङ्ग इति किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।

## निष्प्रवाणिः ॥७।३।१८१॥

निपातोऽयम्। निष्प्रवाणिः कम्बलः। तन्त्रादचिरोद्धृत इत्यर्थः। प्रवाणी तन्तुवायशलाका।

## सुख्वादिभ्यः ॥७।३।१९२॥

कच् न स्यात्। जातिवचना ऋकारान्ता एते। अत एवाऽऽमन्त्र्ये सौ ह्रस्वः। हे सुखु।

## विशेषणसर्वादिसंख्यं बहुव्रीहौ ॥३।१।१५०॥

प्राक् निपतति। चित्रगुः। कण्ठेकालः। सप्तम्यन्तं विशेषणम्। सर्वशुक्लः। त्रिशुक्लः। मिथोऽनयोः समासे संख्यापूर्वम्। द्व्यन्यः। त्र्यन्यः। स्पर्धे परमिति। संख्या समासे॥ समासमात्रे संख्यावाचिनामानुपूर्व्ये पूर्वं निपतति। आनुपूर्व्यां संख्यायाः। पूर्वनिपातार्थं वचनम्। द्वित्राः। द्वन्द्वेऽपि द्वादश।

## प्रियः ॥३।१।१५७॥

अयं प्राग्वा। गुडप्रियः। प्रियगुडः।

## गड्वादिभ्यः ॥३।१।१५६॥

एभ्यः सप्तम्यन्तं वा प्राक्। गडुः कण्ठे यस्य स गडुकण्ठः। कण्ठेगडुः। क्वचिन्न। बहुगडुरित्येव।

## क्तः ॥३।१।१५१॥

क्तान्तं नाम सर्वं बहुव्रीहौ प्राक्। कृतकटः।

## जातिकालसुखादेर्न वा ॥३।१।१५२॥

एभ्यः क्तान्तं वा प्राक्। पाणिगृहीता। गृहीतपाणिः। कालः, मासयाता। यातमासा। सुखजाता। जातसुखा।

## आहिताग्न्यादिषु ॥३।१।१५३॥

अत्र क्तान्तं वा प्राक्। आहितोऽग्निर्येन स आहिताग्निः। अग्न्याहितः।

## प्रहरणात् ॥३।१।१५४॥

प्रहरणार्थात् क्तान्तं वा प्राक्। उद्यतोऽसिरनेन असुद्यतः। उद्यतासिः।

## न सप्तमीन्द्वादिभ्यश्च ॥३।१।१५५॥

इन्द्वादेः प्रहरणवाचिनश्च सप्तम्यन्तं न प्राक् । चक्रपाणिः । इन्दुमौलिः । कचिन्न पाणिवज्रः ।

इति बहुव्रीहिः ।

---

## अथ द्वन्द्वसमासः ।

## चार्थे द्वन्द्वः सहोक्तौ ॥३।१।११७॥

नाम नाम्ना सहोक्तिविषये चार्थे वर्तमानं समस्यते समासो द्वन्द्वनामा स्यात् । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः ।तत्रैकस्मिन्नर्थेऽनेकस्य क्रिया देस्तुल्यबलतया बोधनं समुच्चयः । यथा मैत्रः पचति पठति च । चैत्रो मैत्रश्च पचति । गुणप्रधानभावमात्रविशेषे समुच्चय एवान्वाचयः । यथा बटो भिक्षामट गां चानय । अनयोर्विषये न समासः । अन्योन्यानपेक्षेण द्रव्याणामन्योन्यसा पेक्षाणामुद्भूतावयवभेदः समूह इतरेतरयोगः । मैत्रश्च चैत्रश्च घटं कुर्वाते इति चैत्रमैत्रौ घटं कुर्वाते । अस्यावयवानामुद्भूतत्वात्तन्निबन्धनं द्वित्वं बहुत्वं च स्यात् । न्यग्भूतावयवभेदः समूहः समाहारः । धवश्च खदिरश्च पलाशश्च तिष्ठति इति धवखदिरपलाशं तिष्ठति । युगपदधिकरणवचनता सहोक्तिः ।...। चैत्रमैत्रौ घटं कुर्वाते । अत्र चैत्रोऽपि द्व्यर्थो मैत्रोऽपि द्व्यर्थः । चकार-लभ्योऽप्यर्थः । समाहारस्य चैकत्वादेकवचनम् । सूत्रे लघ्वक्षरादौ एकग्रहणा द्बहूनामपि द्वन्द्वः । होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे होता पोतानेष्टोद्गातारः इत्येव ।

## राजदन्तादिषु ॥३।१।१४९॥

एषु पूर्वमप्रयोगार्हं परम् । दन्तानां राजा राजदन्तः ।

## धर्मार्थादिषु द्वन्द्वे ॥३।१।१५९॥

धर्मार्थादौ द्वन्द्वे प्राप्तपूर्वनिपातं वाऽनियतपूर्वम् । अर्थधर्मौ । धर्मार्थौ । आद्यन्तौ । अन्तादी ।

## लघ्वक्षरासखीदुत्स्वराद्यल्पस्वरार्च्यमेकम् ॥३।१।१६०॥

लघ्वक्षरं सखिवर्जेकारोकारान्तं स्वराद्यकारान्तमल्पस्वरमर्च्यवाचिशब्द-रूपं द्वन्द्वे समासे प्राक्निपतति । यत्र चानेकसम्भवस्तत्रैकमेव । शरशीर्षम् । अग्नीषोमौ । अग्निधूमम् । पतिसुतौ । वायुतोयम् । सखिवर्जनं किम् ? सुतस खायौ । सखिसुतौ । ग्रहणवता नाम्ना न तदन्तविधिरिति तदन्तनिषेधः । बहु

सखिपशुधर्मौ स्पर्धे परमेव । श्रीह्रियवौ । ऋतुतोः कामचार । पतिवसू । स्वरा पत् । अश्वशशम् । स्पर्धे परम् । उष्ट्रखरम् । इन्द्रवायू । अर्केन्दू । अल्पस्वर, प्लक्ष न्यग्रोधौ । स्पर्धे परम् । धवखदिरौ । वागग्नी । अभ्यर्च, अश्वमेधे ।

## मासवर्णभ्रात्रनुपूर्वम् ॥३।१।१६१॥

फाल्गुनचैत्रौ । वैश्यब्राह्मणौ । भीमार्जुनौ । रामकेशवौ ।

## भर्तुतुल्यस्वरम् ॥३।१।१६२॥

न नक्षत्रम् । ऋतुवाचि नाम तुल्यस्वरमक्षर द्वन्द्वे प्राक् । कृत्तिकारोहिण्यः । हेमन्तशिशिरौ ।

## प्राणितूर्याङ्गाणाम् ॥३।१।१३७॥

एषां द्वन्द्व एकार्थं स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । एषु समाहारनियमः ।

## सेनाङ्गक्षुद्रजन्तूनाम् ॥३।१।१३४॥

एषां बहुत्वे प्राग्वत् । अश्वरथम् । यूकालिक्षम् ।

## चरणस्य स्थेणोऽद्यतन्यामनुवादे ॥३।१।१३८॥

अद्यतन्या यौ स्था इण् इत्येतौ धातू तयोः कर्तृत्वे ये चरणास्तन्नाम्नां द्वन्द्व एकार्थः स्यात् । प्रत्यष्ठात्कठकलापम् । उदगात्कठकौथुमम् ।

## अक्लीबेऽध्वर्युक्रतौ ॥३।१।१३९॥

यजुर्वेदविहितो यः क्रतुस्तन्नाम्नामनपुंसकानां द्वन्द्व प्राग्वत् । अर्कश्व मेधम् । अक्लीब इति किम्? राजसूयवाजपेये । अध्वर्युग्रहणं किम्? इषुवज्रौ ।

## निकटपाठस्य ॥३।१।१४०॥

येषामध्येतॄणां निकटाः पाठास्तद्वाची द्वन्द्व प्राग्वत् । पदमधीते पदकः । एव क्रमकः । पदकश्च क्रमकश्च पदकक्रमकम् । पदानन्तरं क्रमस्य पाठात्पाठयो निकटपाठत्वम् ।

## फलस्य जातौ ॥१।३।१३५॥

फलवाचिनां बहुत्वे जातौ विवक्षितायां स्वैर्द्वन्द्वः प्राग्वत् । बदराणि चाम लकानि च बदरामलकम् ।

## अप्राणिपश्वादेः ॥३।१।१३६॥

प्राणिभ्य पश्वादिभ्यश्चोक्तेभ्यश्च येऽन्ये द्रव्यभूताः पदार्थास्तेषां जातिवा-च्यानां स्वैर्द्वन्द्वः प्राग्वत् । आरा च शस्त्री च आराशस्त्रि । व्यक्तिविवक्षायामा राशस्त्र्यि आराशस्त्र्याविमे ।

## नदीदेशपुरां विलिङ्गानाम् ॥३।१।१४२॥

विभिन्नलिङ्गानां नदीदेशपुरवाचिनां स्वैर्द्वन्द्वः प्राग्वत्। उद्ध्यश्चेरावती चोद्ध्येरावति। गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। ग्रामवर्जं चेदम्। जाम्बवं च शालूकिनी च जाम्बवशालूकिन्यौ ग्रामौ।

## विरोधिनामद्रव्याणां न वा द्वन्द्वः स्वैः ॥३।१।१३०॥

येषां नित्यविरोधस्तेषां स्वैर्द्वन्द्वः प्राग्वद् वा। सुखदुःखम्। सुखदुःखे। शीतोष्णम्। शीतोष्णे।

## पशुव्यञ्जनानाम् ॥३।१।१३२॥

एषां स्वैर्द्वन्द्वः प्राग्वद्वा। गोमहिषम्। गोमहिषौ। दधिघृतम्। दधिघृते।

## नित्यवैरस्य ॥३।१।१४१॥

जन्तोः स्वैर्द्वन्द्वः प्राग्वत्। अहिनकुलम्।

## पात्र्याशूद्रस्य ॥३।१।१४३॥

पात्रार्हशूद्रवाचिनः स्वैर्द्वन्द्वः प्राग्वत्। तक्षायस्कारम्। यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते। पात्रमर्हन्तीति पात्र्याः।

## गवाश्वादिः ॥३।१।१४४॥

अयं द्वन्द्वः प्राग्वत्। गवाश्वम्। अजाविकम्।

## तरुतृणधान्यमृगपक्षिणां बहुत्वे ॥३।१।१३३॥

एषां बहुत्वे प्रत्येकं द्वन्द्वः स्वैः प्राग्वद् वा। प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः। कुशकाशम्। कुशकाशाः। तिलमाषम्। तिलमाषाः। ऋश्यैणम्। ऋश्यैणाः। शुकबकम्। शुकबकाः।

## अश्ववडवपूर्वापराधरोत्तराः ॥३।१।१३१॥

एतेऽप्येते द्वन्द्वाः स्वैरेकार्था वा स्युः। अश्ववडवम्। अश्ववडवौ। ह्रस्वत्वं निपात्यते। पूर्वापरम्। पूर्वापरे।

## न दधिपयआदिः ॥३।१।१४५॥

दधिपयःप्रभृतिर्द्वन्द्वो नैकार्थः स्यात्। दधिपयसी। सर्पिर्मधुनी। हरिवासवौ। सूर्याचन्द्रमसौ। एवं चण्डालमृतपादयः।

## संख्याने ॥३।१।१४६॥

इयत्तापरिच्छेदः संख्यानम्। वर्तिपदार्थानां संख्याने गम्यमाने द्वन्द्व एकार्थो

न भवति । दृषगोमहिषा । पतावन्ति दृषिपुतानि । बहूव पाणिपादाः । इयन्तो गवाश्वाः ।

## वान्तिके ॥३।१।१४७॥

प्रथ्यसकषायगमे द्वन्द्व एकार्थो वा स्यात् । उपगता दश यस्य येषां वा उपदशं गोमहिषम् । उपदशा गोमहिषाः । एव दन्तोष्ठम् । दन्तोष्ठाः ।

## आद्वन्द्वे ॥३।२।३९॥

विद्यायोनिसम्बन्धवाचिनामृतां द्वन्द्वे पूर्वपदस्याकारः स्यात् उत्तरपदे परे। होतापोतारौ । मातापितरौ । पुत्रे, पितापुत्राविति ।

## वेदसह श्रुतावायुदेवतानाम् ॥३।२।४१॥

इहोत्तरपदे आकारः स्यात् । इन्द्रासोमौ । शुनासीरौ । अग्नामरुतौ । अग्नेन्द्रौ । देवतेति किम्? स्कन्दविशाखौ । वायुवर्जनात् वाय्वग्नी । अग्निवायू ।

## ईः षोमवरुणेऽग्नेः ॥३।२।४२॥

अस्य षोमे वरुणे च परे ईः स्याद्देवताद्वन्द्वे । षोमेतिनिर्देशादेव ईकारस नियोग षत्वम् । अग्नीषोमौ । अग्नीवरुणौ । देवताद्वन्द्व इत्येव । अग्निसोमौ माणवकौ ।

## समासेऽग्नेः स्तुतः ॥२।३।१६॥

सस्य षः । अग्निष्टुत् ।

## ज्योतिरायुर्भ्यां च स्तोमस्य ॥२।३।१७॥

सस्य षः । ज्योतिष्टोमः । आयुष्टोमः ।

## इर्वृद्धिमत्यविष्णौ ॥३।२।४३॥

विष्णुवर्जे वृद्धिमत्युत्तरपदे परे देवताद्वन्द्वेऽग्नेरिकारोऽन्तादेशः स्यात् । ईकाराकारयोरपवादः । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । एवमग्नीव रुणौ देवते अस्याग्निवारुणं कर्म । वृद्धिमतीति किम्? आग्नेन्द्रं कर्म । भातो ने प्रवरुणस्येति वृद्धिर्न । विष्णुमित्येवाग्नावैष्णवम् ।

## दिवो द्यावा ॥३।२।४४॥

देवताद्वन्द्वे दिवशब्दस्योत्तरपदे परे द्यावा इत्यादेशः स्यात् । द्यौश्च भूमिश्च द्यावाभूमी ।

## दिवस् दिवः पृथिव्या वा ॥३।२।४५॥

दिवस्पृथिव्यौ । दिवःपृथिव्यौ । द्यावापृथिव्यौ । सकारनिर्देशान्न सस्य रुत्वम् ।

## उपासोपसः ॥३।२।४६॥

उषाश्च सूर्यश्चोपासासूर्यम्।

## मातरपितर वा ॥३।२।४७॥

माता च पिता च मातरपितरौ। पक्षे मातापितरौ।

## चवर्गदषहः समाहारे ॥७।३।९८॥

चवर्गान्ताद्दकारषकारहकारान्ताद्द्वन्द्वात्समाहारेऽत्समासान्तः स्यात्। वाक्त्वचम्। श्रीस्रजम्। सम्पद्विपदम्। वाक्त्विषम्। छत्रोपानहम्। समाहार इति किम्? प्रावृट्शरदौ॥

इति द्वन्द्वः।

---

## अथैकशेषः।

## समानामर्थेनैकशेषः ॥३।१।११८॥

देवौ। देवाः। वक्रश्च कुटिलश्च वक्रौ कुटिलौ। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डौ वा।

## वृद्धो यूना तन्मात्रभेदे ॥३।१।१२४॥

वृद्धो यूना सहोक्तावेकः शिष्यते। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। तदर्थं प्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। वृद्धः किम्? गर्गगार्ग्यायणौ। यूना किम्? गर्गगार्ग्यौ। तन्मात्रभेद इति किम्? गार्ग्यवात्स्यायनौ। भागवि त्तिभागवित्तिकौ। अत्रार्थभेदः।

## स्त्रीपुंवच्च ॥३।१।१२५॥

वृद्धस्त्रीवाचि युववाचिना सहोक्तौ शिष्यते स च स्त्रीशब्दः पुंलिङ्गः स्यात्। गार्गी च गार्ग्यायणश्च गार्ग्यौ। गार्गी च गार्ग्यायणी च गर्गाः। पुंवद्भावात्स्त्री-भिधानो यञो लुप्। गर्गान्। शसोऽतास्सश्चनः पुंसि इति नत्वम्।

## पुरुषः स्त्रिया ॥३।१।१२६॥

सहोक्तौ शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।

## भ्रातृपुत्राः स्वसृदुहितृभिः ॥३।१।१२१॥

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

## क्लीबमन्येनैकं च वा ॥३।१।१२८॥

क्लीबं सामान्येन क्लीबेन सहोक्तौ प्राग्वत् तन्मात्रभेदे तच्च वैकवत्स्यात्।

शुक्लं च वस्त्रं शुक्लश्च कम्बलः तदिदं शुक्लम्। ते इमे शुक्ले वा। स्त्रीपुंसयोर्यो-गेऽपि। शुक्लं च वस्त्रं शुक्लश्च कम्बलः शुक्ला च शाटी तदिदं शुक्लम्। तानीमानि शुक्लानि वा।

## पिता मात्रा वा ॥३।१।१२२॥

माता च पिता च पितरौ। मातापितरौ वा।

## श्वशुरः श्वश्र्वा वा ॥३।१।१२३॥

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते। श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ वा।

## त्यदादिः ॥३।१।१२०॥

त्यदादिरेकः शिष्यतेऽन्येनात्यदादिना सहोक्तौ। स च चैत्रश्च तौ। त्यदादीनां मिथः सहोक्तौ यत्परं तस्यैकशेषः। स च यश्च यौ। यश्च एष च एतौ। त्यदामादिरित्यर्थे पूर्वशेषोऽपि। स च यश्च तौ। स्त्रीपुंनपुंसकानां सहवचने स्यात्परलिङ्गमिति। सा च चैत्रश्च तौ। स च देवदत्ता च तौ। सा च कुण्डे च तानि। स च कुलं च ते। स च कुक्कुटः सा च मयूरी ते कुक्कुटमयूर्याविमे। परलिङ्गो द्वन्द्वोऽशीतिसमासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्य त्यदादेरपि तल्लिङ्गतैव न्याय्येति।

## ग्राम्याशिशुद्विशफसङ्घे स्त्रीप्रायः ॥३।१।१२७॥

ग्राम्याणामशिशूनां द्विखुराणां पशूनां सङ्घे स्त्री प्रायवत्। गावश्च स्त्रियो गावो वृषभा इमा गावः। एकशफपक्षवाहरणे पुरुषैकशेषः। अश्वाश्चेमे अश्वाश्चेमा अश्वेमेऽश्वा इति पुल्लिङ्गं शिष्टम्।

## स्यादावसंख्येयः ॥३।१।११९॥

सर्वस्मिन् स्यादौ विभक्तौ तुल्यरूपाणामेकः शिष्यते सङ्ख्येयवाचिनं वर्जयित्वा। अक्षश्च शकटस्य अक्षश्च देवनः अक्षश्च बिभीतकः अक्षाः। एवं पादाः। माषाः। श्येनी च श्येनी च श्येन्यौ।

इत्येकशेषः।

---

परार्थाभिधानं वृत्तिः। सा पञ्चधा। कृत्तद्धितसमासैकशेषसनाद्यन्तधातु-रूपात्। तदर्थप्रतिभासमर्थो वाग्व्यापारो वाक्यं विग्रहः। स लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्प्रयोगार्हो लौकिकः साधुः तदन्योऽलौकिकोऽसाधुः। यथा राज्ञः पुरुषः प्रथमः। द्वितीयो राजन् ङस् पुरुष सु इति। अविग्रहो नित्यसमासोऽस्वपदविग्रहो वा। समासश्चतुर्धेति प्रायोवादः। अव्ययीभावस्तत्पुरुषो बहुव्रीहिर्द्वन्द्वश्च। यथां लक्षणासम्भवे नाम नाम्नेति समासः केवलः। सूपप्रति वम्म

सप्तम्यादौ पूर्वपदार्थाऽप्राधान्येऽपि अव्ययीभावः । अतिमालादावुत्तरपदार्थाऽप्राधान्येऽपि तत्पुरुषः । द्विमा इत्यादावन्यपदार्थाऽप्राधान्येऽपि बहुव्रीहिः । दन्तोष्ठमित्यादावुभयपदार्थाऽप्राधान्येऽपि द्वन्द्वः । नाम नाम्ना तथाऽऽख्यातैर्युक्तं नाम नामभिः । धातुनाऽऽख्यातमाख्यातेन चाऽऽख्यातं च नामभिः ॥ १ ॥ नाम नाम्ना, राज्ञः पुरुषः । आख्यातेन नाम, पर्यभूषयत् । युक्तं नाम नामभिः, कुम्भकारः । धातुना, कटम् । आख्यातमाख्यातेन, पिबतखादता क्रिया । नाम्नाऽऽख्यातम्, कृन्तविचक्षणा । एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादित्वात्समासः ।

इति सर्वसमासक्षेपः ॥

---

## ऋक्पूःपथ्यपोऽत् ॥७।३।७६॥

ऋच् पुर् पथिन् अप इत्येतदन्तात्समासादकारः समासान्तः प्रत्ययः स्यात् । अर्धोऽर्धमर्धर्चः । ऋचः समीपमुपर्चम् । श्रियः पूः श्रीपुरम् । जलपथः । विमलापं सरः ।

## द्व्यन्तरनवर्णोपसर्गादप ईप् ॥३।२।१०९॥

द्वि अन्तर् आभ्यामनवर्णान्तेभ्यश्चोपसर्गेभ्यः परस्यापशब्दस्योत्तरपदस्य ईप् इत्यादेशः स्यात् । द्विधा गता आपो यस्मिन्निति द्वीपम् । अन्तरीपम् । समीपम् । नीपम् । उपसर्गादिति किम्? शोभना आपः स्वापः । पूजिता आपोऽस्वापः । स्वती पूजायां नोपसर्गौ तेन न समासान्तः । अनवर्णेति किम्? प्रापम् । परापम् । अवर्णान्ताद्वेति पाणिनिः । प्रेपम् । परेपम् ।

## अनोर्देशे उप् ॥३।२।११०॥

अनो परस्याऽऽपो देशेऽभिधेये उप् स्यात् । अनूपो देशः ।

## धुरोऽनक्षस्य ॥७।३।७७॥

समासादत्स्यात् । राज्यधुरा । अक्षे तु अक्षधूः ।

## प्रत्यन्ववात्सामलोम्नः ॥७।३।८१॥

एतत्पूर्वसामलोमान्तात्समासादत्स्यात् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ।

## सख्यापाण्डूदककृष्णाद्भूमेः ॥७।३।७८॥

अत्समासान्तः स्यात् । द्वयोर्भूम्योः समाहारो द्विभूमम् । द्वे भूमी अस्य द्विभूमः प्रासादः । पाण्डुभूमम् । पाण्डुभूमो देशः ।

## सख्याया नदीगोदावरीभ्याम् ॥७।३।५१॥

संख्यापूर्वान्नदीगोदावर्यन्तादव्ययीभावादत् स्यात्। पञ्चनदम्। सप्तगोदावरम्।

## अक्ष्णोऽप्राण्यङ्गे ॥७।३।८५॥

अक्षिशब्दान्तात्समासादत्स्यात्समासान्तः। गवामक्षीव गवाक्षः।

## नाभेर्नाम्नि ॥७।३।१३४॥

नाभ्यन्ताद्बहुव्रीहेरप् स्यात्संज्ञायाम्। पद्मनाभः।

## ऋक्सामर्ग्यजुषधेन्वनडुहवाङ्मनसाहोरात्ररात्रिंदिवनक्तंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम् ॥७।३।९७॥

एतेऽत्प्रत्ययान्ता निपात्यन्ते। ऋक् च साम च ऋक्सामम्। ऋग्यजुषम्। धेनुश्चानड्वांश्च धेन्वनडुहौ। वाक् च मनश्च वाङ्मनसे। अहश्च रात्रिश्चाहोरात्रः। रात्रिश्च दिवा च रात्रिन्दिवम्। नक्तं च दिवा च नक्तन्दिवम्। अहश्च दिवा चाहर्दिवम्। ऊरू चाष्ठीवन्तौ च ऊर्वष्ठीवम्। पादौ चाष्ठीवन्तौ च पादष्ठीवम्। अक्षिणी च भ्रुवौ चाक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्।

## नञ्सुव्युपत्रेश्चतुरः ॥७।३।१३१॥

एभ्यः पराच्चतुरन्ताद्बहुव्रीहेरप् स्यात्। अचतुरः। सुचतुरः। विचतुरः। उपचतुराः। त्रिचतुराः।

## स्त्रियाः पुंसो द्वन्द्वाच्च ॥७।३।९६॥

स्त्रीपूर्वपुंसशब्दान्ताद्द्वन्द्वात्कर्मधारयाच्चात्स्यात्। स्त्री च पुमांश्च स्त्रीपुंसम्। स्त्री चासौ पुमांश्च स्त्रीपुंसः।

## द्वित्रेरायुषः ॥७।३।१००॥

समाहारे द्विगोरत् समासान्तः। द्व्यायुषम्। त्र्यायुषम्।

## पुरुषायुषद्विस्तावत्रिस्तावम् ॥७।३।१२०॥

एतेऽत्प्रत्ययान्तास्तत्पुरुषा निपात्यन्ते।

## श्वसोवसीयसः ॥७।३।१२१॥

वसुमच्छब्दाद्वीयसौ मतो अन्त्यस्वरादेश्च लोपे वसीयस्। श्वोभवं वसीयः। श्वस्शब्दः प्रशंसायाम्॥ श्वोवसीयसोऽत्समासान्तः। श्वोवसीयसम्।

## निसश्च श्रेयसः ॥७।३।१२२॥

निस् शब्दात् श्वस् शब्दाच्च परात्श्रेयसस्तत्पुरुषादत्स्यात्। निश्चितं श्रेयो निःश्रेयसम्। शोभनं श्रेयः श्वःश्रेयसम्।

## जातमहद्वृद्धादुक्ष्णः कर्मधारयात् ॥७।३।१९५॥

एभ्यः परादुक्षान्तात्कर्मधारयादत्स्यात्। जातश्चासौ उक्षा च जातोक्षः। महोक्षः। वृद्धोक्षः।

## सरजसोपशुनानुगवम् ॥७।३।१९४॥

एतेऽव्ययीभावा अदन्ता निपात्यन्ते। सह रजसा सरजसम्। साकल्ये समासः। शुनः समीपे उपशुनमस्ति। गामन्वायतमनुगवं यानम्। दैर्घ्येऽनुः। अन्यत्र गोः पश्चादनुगु यानम्।

## गोष्ठातेः शुनः ॥७।३।११०॥

गोष्ठमति आभ्यां परात् श्वन् शब्दान्तात्तत्पुरुषादट् स्यात्। गोष्ठे श्वा गोष्ठश्वः। अतिश्वो वराहः। अतिश्वी सेवा। अतिनीचैस्सर्पः।

## ब्रह्महस्तिराजपल्याद्वर्चसः ॥७।३।८३॥

एभ्यः पराद्वर्चस्शब्दात्समासादत्स्यात्। ब्रह्मणो वर्चो ब्रह्मवर्चसम्।

## समवान्धात्तमसः ॥७।३।८०॥

एभ्यः परात्तमसः समासेऽत्स्यात्। सन्तमसम्। अवतमसम्। अन्धतमसम्।

## तप्तान्ववाद्रहसः ॥७।३।८२॥

एतत्पूर्वाद्रहस्शब्दात्समासेऽत्स्यात्। तप्तरहसम्। अनुरहसम्। अवरहसम्।

## प्रतेरुरसः सप्तम्याः ॥७।३।८४॥

प्रत्युरसम्। विभक्त्यर्थेऽव्ययीभावः।

## उपसर्गादध्वनः ॥७।३।७९॥

धातुयोगे उपसर्गस्तस्मात्परादध्वनोऽत्समासान्तः स्यात्। प्रगतोऽध्वानं प्राध्वो रथः।

## पूजास्वतेः प्राक्टात् ॥७।३।७२॥

पूजार्थात्स्वतिभ्यां परात्समासान्तो न स्याट्टचीदृ। काष्ठे ट इत्यतः प्रागेवायं निषेधः। सुराजा। अतिराजा। स्वतेरिति किम्? परमराजः। पूजेति किम्? गामतिक्रान्तमतिगवम्। प्राक्टादिति किम्? स्वङ्गुलम्। स्वक्षः।

## न किमः क्षेपे ॥७।३।७०॥

निन्दायां या किम् तस्मात्परे ये ऋगाद्यस्तदन्तात्समासान्तो न स्यात्। किंभूः या न तथा धुर्या। किंराजा यो न रक्षति। किंसखा।

## नञ्तत्पुरुषात् ॥७।३।७१॥

समासान्तो न स्यात्। अनृक्। अराजा। असखा। अपन्था: अपथम् पथ इत्यदन्तशब्दस्य। पथो विभाषेति पाणिनिः।

## बहोर्डे ॥७।३।७२॥

डमसङ्गे बहन्तात्समासात् कः कच न स्यात्। आसन्ना बहवो येषां ते आसन्नबहवः।

इति समासान्ताः।

---

न चत्तरपदे लुप इतिपदत्रयमनुवर्तनीयम्।

## असत्त्वे ङसेः ॥३।२।१०॥

असत्त्वे विहितो यो ङसिस्तस्योत्तरपदे परे लुप न स्यात्। स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः परङसेरपि। अन्तिकादागतः। विदूरादागतः। कृच्छ्रान्मुक्तः।

## ब्राह्मणाच्छंसी ॥३।२।११॥

अत्र ङसर्लुबभावो निपात्यते। ऋत्विग्विशेषो ब्राह्मणाच्छंसीतिनाम।

## ओजोऽञ्जः सहोऽम्भस्तमस्तपसष्टः ॥३।२।१२॥

एभ्यस्तृतीयैकवचनस्य लुप् न। ओजसा कृतम्। अञ्जसा कृतम्। आर्जवेन कृतमित्यर्थः। इत्यादि।

## पुंजनुषोऽनुजान्धे ॥३।२।१३॥

पुंसाऽनुजः। यस्याग्रजः पुमान् स एवमुच्यते। जनुषान्धो जात्यन्धः।

## आत्मनः पूरणे ॥३।२।१४॥

आत्मना द्वितीयः।

## मनसश्चाज्ञायिनि ॥३।२।१५॥

मनसाऽऽज्ञातुं शीलमस्येति मनसाज्ञायी।

## नाम्नि ॥३।२।१६॥

मनसादेवी ।

## परात्मभ्यां ङेः ॥३।२।१७॥

परस्मैपदम् । आत्मनेपदम् ।

## अद्व्यञ्जनात्सप्तम्या बहुलम् ॥३।२।१८॥

अकारान्ताद्व्यञ्जनान्ताच्च परस्याः सप्तम्याः प्रायो लुप् न स्यात् नाम्नि। युधिष्ठिरः । बहुलग्रहणात्क्वचिद्भवति । जलकुक्कुटः । ग्रामसूकरः । क्वचिद्विकल्पः । त्वचिसारः ।

## गवि युधेः स्थिरस्य ॥२।३।२५॥

आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अरण्येतिलकाः । गवीतिव-चनादलुप् । पिष्ठादिपाठाद्वा ।

## तत्पुरुषे कृति ॥३।२।२०॥

व्यञ्जनात्परस्याः सप्तम्याः कृदन्ते उत्तरपदे तत्पुरुषे लुप् न स्यात् । हृदिस्पृक् । दिविस्पृक् । स्तम्बेरमः । कर्णेजपः ।

## प्राक्कारस्य व्यञ्जने ॥३।२।१९॥

प्राच्यां देशे यः कारनामा रक्षानिर्वेशस्तस्य प्राक्पदाद्व्यञ्जनात्परस्याः सप्तम्या न लुप् स्याद् व्यञ्जनाद्युत्तरपदे । मुकुटेकार्षापणः । दृषदिमाषकः । प्रागिति किम् ? यूपे देयः पशुः यूपपशुः । व्यञ्जनादौ किम् ? अविकटे देयं उरणः अविकटोरणः । अविकटः अविसमूहः । प्रत्येकं तेषु देयः । अद्व्यञ्जनादिति किम् ? नद्यां दोहः नदीदोहः । प्रत्येकं देयः ।

## मध्यान्ताद्गुरौ ॥३।२।२१॥

सप्तम्या न लुप् । मध्येगुरुः । अन्तेगुरुः । लुपमपि कश्चित् ।

## अमूर्धमस्तकात्स्वाङ्गादकामे ॥३।२।२२॥

कण्ठेकालः । उरसिलोमा । अमूर्धमस्तकादिति किम् ? मूर्धशिखः । मस्तकशिखः । स्वाङ्गादिति किम् ? अक्षशौण्डः । अकाम इति किम् ? मुखकामः ।

## बन्धे घञि नवा ॥३।२।२३॥

हस्तेबन्धः । चक्रेबन्धः । हस्तबन्धः । चक्रबन्धः ।

### कालात्तनतरतमकाले ॥३।२।२४॥

अदन्तात्कालवाचिनः शब्दात्परस्याः सप्तम्या वा न लुप् तनादौ परे कालशब्दे चोत्तरपदे परे। पूर्वाह्णेतनः। पूर्वाह्णतनः। एवं तरादौ।

### वर्षक्षरवराप्सरःसरोरोमनसो जे ॥३।२।२६॥

एभ्यः सप्तम्या वा अलुप् जे उत्तरपदे परे। वर्षेजः। वर्षजः। मनसिजः। मनोज इत्यादि।

### द्युप्रावृड्वर्षाशरत्कालात् ॥३।२।२७॥

दिवप्रभृतेः शब्दात्परस्याः सप्तम्या न लुप्। दिविजः। प्रावृषिजः।

### शयवासिवासेष्वकालात् ॥३।२।२५॥

एतेषु परेषु सप्तम्या अलुप् वा स्यात्। बिलेशयः। बिलशयः। वने वासी। वनवासी। [illegible]। इत्यादि।

### अपो ययोनिमति चरे ॥३।२।२८॥

अप्शब्दात्परस्याः सप्तम्या यप्रत्यये योनिमतिचरेषूत्तरपदेषु न लुप्। अप्सु भवः अप्सव्यः। अप्सुयोनिः। अप्सुमतिः। अप्सुचरः।

### नेन्सिद्धस्थे ॥३।२।२९॥

इन् प्रत्ययान्ते परे सिद्धस्थे इति चोत्तरपदे परे सप्तम्या लुप् नेति न, किन्तु स्यादेव। स्थण्डिलशायी। सांकाश्यसिद्धः। समस्थः।

### षष्ठ्या. क्षेपे ॥३।२।३०॥

चौरस्य कुलमित्यादौ न लुप्। दासस्य भार्या। क्षेपे इति किम्? द्विजकुलम्।

### पुत्रे वा ॥३।२।३१॥

दास्याः पुत्रः। दासीपुत्रः।

### पश्यद्वाग्दिशो हरयुक्तिदण्डे ॥३।२।३२॥

एभ्यः परस्याः षष्ठ्याः क्रमेण हरयुक्तिदण्डेषु उत्तरपदेषु न लुप् स्यात्। पश्यतोहरः। वाचोयुक्तिः। दिशोदण्डः।

### अदसोऽकञायनणो ॥३।२।३३॥

अदसः षष्ठ्या अकञ्प्रत्ययविषये उत्तरपदे तथा आयनणप्रत्यये च परे

लुप् न स्यात् । अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका । आमुष्यकुलिका । चौरादित्वादकञ् । आमुष्यायणः । नडादित्वादायनण् ।

## देवाना प्रियः ॥३।२।३४॥

निपातोऽयम् ।

## शेपपुच्छलाङ्गूलेषु नाम्नि शुनः ॥३।२।३५॥

श्वन्शब्दात्परस्याः षष्ठ्या लुप् न स्यात् शेपादावुत्तरपदे परे । शुनःशेप मिव शेपमस्य शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । नाम्नीति किम्? श्वशेपम् ।

## वाचस्पतिवास्तोष्पतिदिवस्पतिदिवोदासम् ॥३।२।३६॥

एते षष्ठ्या अलुपि निपात्यन्ते नाम्नि ।

## ऋतां विद्यायोनिसम्बन्धे ॥३।२।३७॥

ऋकारान्तानां विद्याकृते योनिकृते च सम्बन्धे वर्तमानानां तत्सम्बन्धिन्येवोत्तरपदे परे षष्ठ्या न लुप् । होतुः पुत्रः । होतुरन्तेवासी । पितुः पुत्रः । पितुरन्तेवासी । नेह । पितृधनम् ।

## स्वसृपत्योर्वा ॥३।२।३८॥

ऋदन्तात् षष्ठ्या वाऽलुप् । होतुःस्वसा । होतृस्वसा । स्वसुःपतिः । स्वसृपतिः ।

## मातृपितुः स्वसुः ॥२।३।१८॥

मातृपितृभ्यां परस्य स्वसृशब्दस्य सस्य षः स्यात् समासे । मातृष्वसारः । पितृष्वसारः । असमासे तु मातुःस्वसा । पितुःस्वसा ।

इत्यलुप् समासः ।

---

## ऋदुदित्तरतमरूपकल्पब्रुवचेलड्गोत्रमतहतेषु वा ह्रस्वश्च ॥३।२।६३॥

ऋदुदितः परतः स्त्रीङ्यः तरादिप्रत्ययेषु ब्रुवादिषु एकार्थेषु उत्तरपदेषु ह्रस्वान्तः पुंवच्च वा स्यात् । पचन्तीतरा । पचन्तितरा । पचत्तरा । श्रेयसीतरा । श्रेयसितरा । श्रेयस्तरा । विदुषीतरा । विदुषितरा । विद्वत्तरा । पचन्ती चासौ ब्रुवा च पचन्तीब्रुवा । पचन्तिब्रुवा । पचद्ब्रुवा ।

## ङ्यः ॥३।२।६४॥

ङ्यन्तस्य परतः स्त्रीलिङ्गस्य तरादौ प्रत्यये ब्रुवादिषु चोत्तरपदेषु ह्रस्वोऽन्तादेशः स्यात् । गौरितरा । गौरितमा । नर्तकिरूपा । कुमारिकल्पा । ब्राह्मणिब्रुवा । गार्गिचेली । गार्गिमता । ङ्य इति किम्? दत्तातरा । मद्रिकातरा । परतः स्त्रीत्येव । आमलकीतरा । अनेकस्वरस्यैवाऽयं विधिः ।

## न वैकस्वराणाम् ॥३।२।६६॥

बहुवचनात् । परस्त्रीतिनिवृत्तम् । एकस्वरस्य ङ्यन्तस्य तरादिषु प्रत्ययेषु ब्रुवादिपूत्तरपदेषु कथेकार्थेषु वा ह्रस्वः स्यात् । श्रीतरा । श्रितरा । ज्ञस्य भार्या ज्ञी । ज्ञितमा । ज्ञीतमा । अस्यापत्यं स्त्री ई । इरूपा । ईरूपा । कस्य भार्या की । किकल्पा । कीकल्पा । श्रिब्रुवा । श्रीब्रुवा । इत्यादि । ङ्यन्तस्येत्येव । भीतरा । भीतमा ।

## ऊङः ॥३।२।६९॥

ऊङन्तस्य प्राग्वत् । ब्रह्मबन्धूतरा । ब्रह्मबन्धुतरा । पक्षे पूर्वार्थं ।

## पदः पादस्याज्यातिगोपहते ॥३।२।९५॥

पादशब्दस्य आजि आति ग उपहत इत्येषु परेषु पद इत्यादेशः स्यात् । पादाभ्यामजति अतति वा पदाजिः । पदातिः । पदगः । पदोपहतः । अजेर्व्यभावो निपातनात् ।

## हिमहतिकाषिये पद् ॥३।२।९६॥

एषूत्तरपदेषु पादस्य पद्भवति । पादयोर्हिमम् पद्धिमम् । पद्धतिः । पादकषणशीलः । पत्काषी । पादौ विध्यन्ति पद्याः शर्कराः । पादयोर्भवाः पद्याः पांसवः । पद्यं घृतम् । पादार्थे पाद्यमिति पादार्घ्ये इति निपातनात् । पादशब्दसम्बन्धिन्येव परस्ये विधिः । द्विगुसमाससम्बन्धिनि तु द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम् । पणपादमाषात्य इति यः ।

## ऋचः शसि ॥३।२।९७॥

ऋचः पादस्य पद् । पादं पादं गायत्र्याः शंसतीति पच्छो गायत्रीं शंसति ।

## शब्दनिष्कघोषमिश्रे वा ॥३।२।९८॥

पदादेशः । पच्छब्दः । पादशब्दः । पन्निष्कः । पादनिष्कः । पद्घोषः । पादघोषः ।

## नाम्न्युत्तरपदस्य च ॥३।२।१०७॥

उदकस्य पूर्वपदस्य उत्तरपदस्य च नाम्नि उद इत्यादेशः । उदमेघः । उत्तरपदस्य, क्षीरोदः ।

## उदकस्योदः पेषंधिवासवाहने ॥३।२।१०४॥

उदपेषं पिनष्टि । उदधिर्घटः । उदवासः । उदवाहनः ।

## वैकव्यञ्जने पूर्ये ॥३।२।१०५॥

उदकुम्भः । उदककुम्भः । उदपात्रम् । उदकपात्रम् । स्वरे, उदकामत्रम् ।

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे वा ॥३।२।१०६॥

उदकमन्थः । उदमन्थः । इत्यादि ।

## ङ्यापो बहुलं नाम्नि ॥२।४।९९॥

ईकारोकारयोरुत्तरपदे ह्रस्वो वा स्यात् गवेत्याद्यव्ययभूतौ ईयूपो भीइयुव्स्थानी च भवतः । लक्ष्मिपुत्रः । लक्ष्मीपुत्रः । ग्रामणिपुत्रः । ग्रामणीपुत्रः । ब्रह्मबन्धुपुत्रः । ब्रह्मबन्धूपुत्रः । अव्ययादिवर्जनं किम्? काण्डीभूतम् । स्त्रीकृत्य । ईय्, कारीषगन्धीपुत्रः । भी, गार्गीपुत्रः । इयुव्, श्रीकुलम् । ह्रीस्तुतिः । भ्रूमध्यी । यवक्रीपुत्रम् ।

## भ्रुवोऽच्च कुंसकुट्योः ॥२।४।१०१॥

भ्रूशब्दे कुंसकुट्योरुत्तरपदयोः परयोरीकारोऽकारश्च स्यात् । भ्रुकुंसः । भ्रकुंसः । भ्रुकुटिः । भ्रकुटिः । भ्रूकुंसः । भ्रूकुटिरित्यप्यन्ये ।

## ष्या पुत्रपत्योः केवलयोरीच् तत्पुरुषे ॥२।४।८३॥

ह्रस्व आपन्तः ष्या पुत्रपतिशब्दयोः केवलयोः परयोस्तत्पुरुषे समासे ईच् भवति । कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रः । कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न । परमकारीषगन्धीपुत्रः ।

## बन्धौ बहुव्रीहौ ॥२।४।८४॥

ह्रस्व आपन्तः ष्या बन्धुशब्दे केवले परे बहुव्रीहावीच् भवति । कारीषगन्ध्या बन्धुरस्याः कारीषगन्धीबन्धुः ।

## मातमातृमातृके वा ॥२।४।८५॥

कारीषगन्ध्या माता यस्य स कारीषगन्धीमातः । कारीषगन्ध्यामातः । एवं

कारीषगन्धीमाता । कारीषगन्ध्यामाता । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । मात इतिनिर्देशान्मातृशब्दस्य पुंवद्भावसामर्थ्यं विनाऽपि पक्षे मात इत्यन्त आदेशः । अन्यथा मातृशब्देनैव गतार्थत्वान्मातशब्दोपादानमनर्थकं स्यात् । ऋदन्तलक्षणः कच् प्रत्ययोऽप्यत एव विकल्प्यते ।

## मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते ॥२।४।१०२॥

मालादीनामन्ते वर्तमानानां केवलानां च भारितूलचितेषूत्तरपदेषु ह्रस्वः स्यात् । मालां बिभर्ति इत्येवंशीलो मालभारी । मालभारिणी । पद्मपूर्वायां मालायां तथैव । इषीकतूलम् । मुञ्जेषीकतूलम् । इष्टकचितम् । पक्वेष्टकचितम् । इदमेवान्तग्रहणं ज्ञापकं ग्रहणवता नाम्ना न तदन्तविधिरिति । तेन द्विपपादोपहत सौत्रनाडिरिखादौ पदादेशापनण् प्रत्ययादयो न स्युः ।

## सत्यागदास्तोः कारे ॥३।२।११२॥

सत्यादिभ्यः कारे परे मोऽन्तः स्यात् । सत्यं करोति सत्यङ्कारः । अगदङ्कारः । अस्तुङ्कारः ।

## धेनोर्भव्यायाम् ॥३।२।११८॥

मोऽन्तो वा स्यात् । धेनुम्भव्या । धेनुभव्या । नित्यमिति पाणिनिः ।

## लोकपृणमध्यन्दिनानभ्याशमित्यम् ॥३।२।११३॥

एते शब्दाः कृतमोऽन्ता निपात्यन्ते । लोकं पृणाति लोकस्य वा पृणो लोकम्पृणः । मध्यं दिनस्य मध्यन्दिनम् । अश्नोतेर्घञि अभ्याश इति रूपम् । अनभ्याशं दूरमित्यं गन्तव्यमनभ्याशमित्यः । दूरात्परिहार्य इत्यर्थः ।

## भ्राष्ट्राग्नेरिन्धे ॥३।२।११४॥

भ्राष्ट्राग्निशब्दाभ्यामिन्धे उत्तरपदे परे मोऽन्तः स्यात् । भ्राष्ट्रस्य इन्धः भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

## अगिलाद्गिलगिलयोः ॥३।२।११५॥

गिलान्तशब्दवर्जितात्पूर्वपदात्परे गिलशब्दे गिलगिले चोत्तरपदे मोऽन्तः स्यात् । तिमिं गिलतीति तिमिङ्गिलः । तिमीनां गिलगिलः तिमिङ्गिलगिलः । अगिलादिति किम् ? तिमिङ्गिलं गिलतीति तिमिङ्गिलगिलः । पूर्वगिलशब्दापेक्षयात्र मोऽन्तः ।

## भद्रोष्णात्करणे ॥३।२।११६॥

उष्णङ्करणम् । भद्रङ्करणम् ।

## नवाऽखित्कृदन्ते रात्रेः ॥३।२।११७॥

मोऽन्त स्यात्। रात्रिंचरः। रात्रिचरः। रात्रिमटः। रात्र्यटः। खिद्ग्रहणं किम्? रात्रिंमन्यमहः।

## खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च ॥३।२।१११॥

अनव्ययस्यारुषोऽस्वरान्तस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तः स्यात्। यथासम्भवं ह्रस्वश्चास्यादेशः स्यात्। श्रमन्यः। परत्वात्पुंवद्भावो ह्रस्वेन बाध्यते। कालिंमन्या। अनव्ययस्येति किम्? दोषामन्यमहः। अरुष इत्येव। अरुन्तुदः। मतः शब्दोपादानाभावादनव्ययस्य व्यञ्जनान्तस्य मोऽन्तो न स्यात्। गीर्मन्यः।

## नाम्नि ॥३।२।१४४॥

सहस्य स स्यात्संज्ञायाम्। सपलाशं वनम्।

## अदृश्याधिके ॥३।२।१४५॥

सहस्य सः। साग्नि कपोतम्। सपिशाचा वात्या। सराक्षसीका निशा। राक्षसी निशायाऽनुमेया। अधिके, सद्रोणा खारी।

## ग्रन्थान्ते ॥३।२।१४७॥

उत्तरपदेऽस्मिन्नव्ययीभावे सहस्य सः। समुहूर्तं ज्योतिषमधीतम्।

## समानस्य धर्मादिषु ॥३।२।१४९॥

समानस्य स इत्यादेशो धर्मादिषूत्तरपदेषु। सधर्मा। सजातीयः। सह पक्षेण सपक्षः। सहधर्मेण सधर्मा। तस्य भावः साधर्म्यम्। अथवा सादृश्यार्थः सहशब्दः सदृशं सख्या ससखीति यथा। तेनायमन्यपदविग्रहो बहुव्रीहिः समासः। सदृशः पक्षोऽस्येत्यादि इति केचित्। सब्रह्मचारी। निपातोऽयम्।

## दृग्दृशदृक्षे ॥३।२।१५१॥

समानस्य सः स्यात्। समान इव दृश्यते सदृक्, सदृशः, सदृक्षः।

## भीरुष्ठानादयः ॥२।३।३३॥

समासे कृतषत्वाः साधवः। भीरूणां स्थानं भीरुष्ठानम्। असमासे भीरोः स्थानम्। अङ्गुलीनां सङ्गोऽङ्गुलिषङ्गः। अन्यत्र अङ्गुलेः सङ्गः।

## एत्यकः ॥२।३।२६॥

ककारवर्जितान्नाम्यन्तस्थास्कवर्गात्परस्य सस्य षः स्यादेकारे परे नाम्नि। हरिषेणः। भीषेणः। अक इत्येव। विष्वक्सेनः। नाम्यन्तस्थाकवर्गादिति किम्? सर्वसेनः।

## मादितो वा ॥२।३।२७॥

इकारान्तानामक्षत्रवाचिनो वा भाद्युक्तम् । रोहिणिषेणः । रोहिणिषेनः । ङ्यापो बहुलं नाम्नि इति ह्रस्वः । इत इति किम्? शतभिषक्सेनः ।

## आशीराशास्थितास्थोत्सुकोतिरागे ॥३।२।१२०॥

अषष्ठीतृतीयान्तादन्यशब्दादाशिषप्रभृतिषु उत्तरपदेषु दोऽन्तः स्यात् । अन्याआशीः अन्यदाशीः । अन्यदाशा ।

## ईयकारके ॥३।२।१२१॥

अन्यशब्दादीये कारके च परे दोऽन्तः स्यात् । अन्यस्यायमन्यदीयः । गहादित्वादीयः । अन्यस्यान्येन कारकः अन्यत्कारकः ।

## अन्यत्यदादेराः ॥३।२।१५२॥

अन्यशब्दस्य त्यदादेश्च दृग्दृशदृक्षेषु आकारोऽन्तादेशः स्यात् । अन्य इव दृश्यतेऽन्यादृक् । अन्यादृशः । अन्यादृक्षः । तादृक् । तादृशः । तादृक्षः । यादृक् । यादृशः । यादृक्षः । अमूदृक् । अमूदृशः । अमूदृक्षः ।

## इदं किमीत्की ॥३।२।१५३॥

इदम ईकारस्य किम् कीकारस्य स्याद् दृगादिषूत्तरपदेषु । अयमिव दृश्यते ईदृक् । ईदृशः । ईदृक्षः । क इव दृश्यते कीदृक् । कीदृशः । कीदृक्षः ।

## को कत्तत्पुरुषे ॥३।२।१३०॥

स्वरादावुत्तरपदे परे कोः कत् स्यात् । कुत्सितोऽश्वः कदश्वः । कदन्नम् ।

## रथवदे ॥३।२।१३१॥

कद्रथः । कद्वदः ।

## तृणे जातौ ॥३।२।१३२॥

कत्तृणम् ।

## त्रौ ॥३।२।१३३॥

कुशब्दस्य किं शब्दस्य च त्रिशब्दे परे कत् स्यात् । कुत्सितास्त्रयः के वा त्रयः कत्त्रयः ।

## काक्षपथोः ॥३।२।१३४॥

अक्षपथिन् इत्येतयोरुत्तरपदयोः कोः का स्यात् । कुत्सितोऽक्षः पाशकादिः काक्षः । कुत्सितः पन्थाः कापथम् । कुत्सितः पन्था अस्मिन्देश इति कापथो देशः । ईषदर्थेऽपि कुः कुत्सितोऽक्षः (?) काक्षः । पथिन्शब्दनिर्देशादात्पर्यायेऽप्युत्तरपदे पथशब्दे च स्यात् । कुत्सितः पथोऽस्य कुपथं धनम् । अनीपथपर्याये पथनम् ।

## पुरुषे वा ॥३।२।१३५॥

कापुरुषः । कुपुरुषः ।

## अल्पे ॥३।२।१३६॥

ईषदर्थे कुशब्दस्य उत्तरपदे परे कादेशः स्यात् । ईषन्मधुरम् कामधुरम् । ईषदम्लं काम्लम् ।

## काकवौ वोष्णे ॥३।२।१३७॥

उष्णे उत्तरपदे परे कुशब्दस्य काकवौ वा स्याताम् । ईषत्कुत्सितं वा उष्णं कोष्णम् । कवोष्णम् । ईषत्कुत्सितं वा उष्णमत्र कोष्णः कवोष्णो वा देशः । तत्पुरुषे कदुष्णम् । बहुव्रीहौ कवादेशो न । कुष्णो देशः ।

## दिक्शब्दात्तीरस्य तारः ॥३।२।१४२॥

दक्षिणस्या दिशः, दक्षिणस्य देशस्य वा तीरं दक्षिणतारम् । वाऽनुवर्तना दक्षिणतीरम् । पूर्वतारम् । पूर्वतीरम् ।

## स्वामिचिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य कर्णे ॥३।२।८४॥

स्वामिचिह्नवाचिनो विष्टादिवर्जितस्य कर्णशब्दे उत्तरपदे दीर्घान्तादेशः स्यात् । द्विगुणाकर्णः । चिह्नस्येति किम् ? शोभनकर्णः । नेह । विष्टकर्णः । अष्टकर्णः । इत्यादि ।

## गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ ॥३।२।८५॥

गतिसंज्ञकस्य कारकवाचिनो नहादिषु क्विबन्तेषूत्तरपदेषु परेषु दीर्घान्तादेशः स्यात् । उपनह्यति उपनह्यते वा उपानत् । परीणत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । तुराषाट् । छान्दसोऽयं दीर्घः । नीरुढानादित्वात्पत्वम् । परीतत् । गमां क्वाविति नलोपः । गतिकारकस्येति किम् ? पटुरुक् । तिग्मरुक् ।

## कोटरमिश्रकसिध्रकपुरगशारिकस्य वणे ॥३।२।१६॥

एषां कृतणत्वे वणशब्दे परे दीर्घः स्यात् नाम्नि । अञ्जनागिरिः । किंशुकागिरिः ।

## वलच्यपित्रादेः ॥३।२।८२॥

वलचि प्रत्यये परे पित्रादिविवर्जितानां अरान्तानां दीर्घः स्यात्। कृषीवलः।

## अनजिरादिबहुस्वरशरादीनां मतौ ॥३।२।७८॥

अजिरादिविवर्जितानां बहुस्वराणां शरादीनां च मतौ प्रत्यये दीर्घः स्यात्। अमरावती। शरादि, शरावती। मणीवती। चार्वीचालमगिरिः। बहुवचनमाकृतिगणार्थम्। तेन मृगावती। पद्मावतीत्यादि। बहुस्वरेति किम्? व्रीहिमती। माषीत्येव। वलयवती कन्या। शरवती तूणा।

## अपील्वादेर्वहे ॥३।२।८९॥

नाम्यन्तस्य वहे उत्तरपदे दीर्घः स्यात्। ऋषीवहम्। कपीवहम्। एवंनामनी नगरे। प्रान्ते बहुत्वाद् ऋषीवह'। मुनीवहः। अपील्वादेरिति किम्? पीलुवहम्।

## शुनः ३।२।९०॥

श्वन्शब्दस्योत्तरपदे दीर्घः स्यात्। शुनो दन्ताः श्वादन्ताः। श्वाकर्णः। क्वचित्तु। श्वापुच्छः। श्वपुच्छ'। श्वापदम्। श्वपदम्।

## घञ्युपसर्गस्य बहुलम् ॥३।२।८६॥

घञन्ते उत्तरपदे उपसर्गस्य बहुलं दीर्घः स्यात्। परीपाकः। नीहारः। प्रतीहार'। प्रभावः प्रभार इत्यादौ न दीर्घ'।

## नामिनः काशे ॥३।२।८७॥

नाम्यन्तस्योपसर्गस्याजन्ते काशशब्दे उत्तरपदे दीर्घः स्यात्। नीकाशः। वीकाशः। घञ्युपसर्गस्यादौ अमनुष्य इति पाणिनि'। अमनुष्यपति किम्? निषादः।

## निष्प्राग्रेऽन्तः खदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य ॥२।३।६६॥

णत्वं स्यात्। निर्वण'। प्रवणम्। पारमर्ष्येऽग्रेऽन्तः पञ्चमी वेषम्यपीमाये पूर्वपदस्यैकार'। अग्रेवणम्। अन्तर्वणम्।

## द्वित्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः ॥२।३।६७॥

द्वित्रिस्वरेभ्य इरिकादिवर्जेभ्य ओषधिवृक्षवाचिभ्यः परस्य वनस्य नस्य णो वा स्यात्। दूर्वावनम्। दूर्वावणम्। शिग्रुवणम्। शिग्रुवनम्। नेह इरिकावनम्।

## वाह्याद्वाहनस्य ॥२।३।७२॥

वाह्यवाचिनो रेफादिमतः पूर्वपदात्परस्य वाहनशब्दस्य नस्य णः स्यात्। इक्षुवाहणम्। वाह्यादिति किम्? सुरवाहनम्। वाह्यशब्देनात्र भारमात्रमारोप्य यदुह्यते तदेव।

## पानस्य भावकरणे ॥२।३।७१॥

पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं वा स्यात्। क्षीरपाणम्। क्षीरपानम्। करणेऽपि। कषायपाणः। कषायपानः। कंसः। भावकरण इति किम्? पीयतेऽस्मिन्निति पानः। क्षीरपानो घोषः।

## देशे ॥२।३।७०॥

समुदायेन चेद्देशो गम्यते तदा पानशब्दस्य णत्वम्। पीयते इति पानम्। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। सुरापाणाः प्राच्याः।

## गिरिनद्यादीनाम् ॥२।३।६८॥

एषां नकारस्य वा णः स्यात्। गिरिणदी। गिरिनदी। चक्रणितम्बा। चक्रनितम्बा। गिरिणखः। गिरिनखः। माषोनः। माषोणः।

## वोत्तरपदान्तनस्यादेरयुवपक्वाह्नः ॥२।३।७५॥

पूर्वपदस्थान्निमित्तात्परस्योत्तरपदान्तस्थस्य तथा नागमस्य स्यादेश्च नकारस्य णो वा स्यात्, चेत्स नकारो युवादिभ्यसम्बन्धी स्यात्। माषवापिणी। माषवापिनी। नागमे, व्रीहिवापाणि। व्रीहिवापानि कुलानि। स्यादेः, माषवापेण। माषवापेन। नेह, गर्गाणां भगिनी गर्गभगिनी। उत्तरपदेति किम्? गर्गाणां भगः गर्गभगः। सोऽस्यास्तीतिसमासपदादिन्, गर्गभगिणी। अत्रोत्तरपदस्यान्तो नकारो न भवति इति विकल्पो न स्यात्। कवर्गैकस्वरवतीति प्रागुक्तम्। वृत्रहणी। स्वर्गकामिणी। स्वर्गकामाणि। उरःकेण। गुरुसुम्नेण। क्षीरपेण।

## पदेऽन्तरेऽनङ्तद्धिते ॥२।३।९३॥

ङान्तं तद्धितान्तं च वर्जयित्वाऽन्यस्मिन् पदे निमित्तनिमित्तिनोरन्तरे णो णत्वं न। माषकुम्भवापेन। अनाङिति किम्? प्राणद्धम्। पर्याणद्धम्। अतद्धित इति किम्? आर्द्रगोमयेण।

## वर्चस्कादिष्ववस्करादयः ॥३।२।४८॥

कुत्सितं वर्चो वर्चस्कम्। निन्द्यादिष्वर्थेषु अवस्करादयः शब्दाः कृतसप सा पूर्वपदाः साधवः। अवस्करः अन्नमलं तत्संयोगाद्देशोऽप्यवस्करः। अपस्करो ऽन्यः। कुस्तुम्बुरूणि फलानि। कुस्तुम्बुरुः। तिण्डुकवृक्षः। अपरस्परा अपरस्परा

पा । क्रियासातत्ये अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । अन्यत्रापरपरा गच्छन्ति जनाः । आश्चर्यमद्भुते ॥ अन्यत्राचर्यं शोभनं कर्म । गोष्पदं गोसेविते प्रमाणे च ॥ गावः पदन्तेऽस्मिन् गोष्पदो देशः । गोभिः सेवितो ग्रामसमीप । प्रमाणे गोष्पदपूरं वृष्टो मेघः । गोष्पदमात्रम् । अन्यत्र गो पदम् । प्रतिष्कशः सहाय । मस्करिणि परिव्राड्रूपी मस्करो वेणुदण्डयोः । अन्यत्र मकरः । किष्किरः शकुनौ । अन्यत्र किकिरः । कास्तीराजस्तुन्दे नगरे ॥ अन्यत्र कारतीरम् (?)। अजतुन्द । कारस्करो वृक्षे ॥ अन्यत्र कारकरः । पारस्करो देशनाम्नि ॥ तस्कर चोर । अन्यत्र तस्करः । बृहस्पति । प्रायो बुभिखस्य चित्त प्रायश्चित्त व्रतम् । वनस्य पतिरित्यादिराकृतिगणोऽयम् ।

## ऋफिडादीनां डश्च लः ॥२।३।१०४॥

ऋफिडादीनामृरो लृर्डो डकारस्य लश्च भवति । लृफिडः । लृफिड । ऋफिडः । ऋतकः । लृतकः इत्यादि ।

## जपादीनां पो वः ॥२।३।१०५॥

एषां पस्य वो वा भवति । जवा । जपा । त्रिविष्टपः । त्रिपिष्टपः । जवापी । जपापी । जपादयः प्रयोगतोऽनुसर्तव्या ।

## पृषोदरादयः ॥३।२।१५५॥

एवं प्रकारा शब्दा विहितलोपागमवर्णविकाराः शिष्टप्रयोगास्साधव एव स्युः । पृषत् उदरमुदरे वाऽस्य । तलोपः । जीवनस्य मूतः पुटबन्धः । जीमूत । वनलोपः । वारिणो वाहको बलाहको घन । पूर्वपदस्य बः । उत्तरपदादेर्ल इत्यादेशः । दूराश । दुर्जनः । दुष्टो दाशः दूडाश । मह्यां रौतीति मयूर । कुन्तोऽस्यां सीदतीति बृसी । भ्रमन् रौतीति भ्रमरः । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् १

श्रीजैनधर्माम्बुदपाय बालप्रबोधनेमोऽञ्जलपुण्यका त्वा ।
चन्द्रप्रभा धीरकृपानुपातश्चकार मेघः शरदि प्रसन्न ॥ १ ॥

श्रीहीर कनकम्बितौ परिणत श्रीशीलसिद्धौ यथा, लोके स्वात्कमलाधि वास विलसच्चारित्रभाज श्रियः । धर्मः श्रीजिनदेशितः शतरवि श्रीहेमचन्द्र प्रभा-रम्य प्राणिकृपामय स हि तथा चित्ते सतां भासताम् ॥ १ ॥ नित्यं श्रीवृषभार्हत प्रणमनात् तत्पादपद्मश्रिया छन्नीभूय मनोम्बुजमण्डलस्सङ्गासा तु दीप्तप्रभः । श्रीमेघाद्विजयाह्वयापकवरो वृत्तिं व्यधादादिमां शुद्धश्रीगुरुसिद्धहेमवचनेभ्य प्रभभाषामिमाम् ॥ २ ॥ इति श्रीमन्महोपाध्यायश्रीमेघविजयगणि विरचितायां चन्द्रप्रभाख्यायां प्रक्रियायां प्रथमवृत्ति सम्पूर्णा ।

इति समासाश्रयविधय ।

## अथ तद्धितप्रकरणम् ।

श्रीमत्प्रमेयममेयवर्द्धमानजिनागमम् ।
तत्तद्धितोपदेशेन तानेव प्रस्तुवे सदा ॥ १ ॥

### तद्धितोऽणादिः ॥६।१।१॥

इतो वक्ष्यमाणा अणादिप्रत्ययास्तद्धितसंज्ञाः स्युः । मात्रेयः । आश्वसेनिः । श्रैघ्रसेयः ।

### पौत्रादि वृद्धम् ॥६।१।२॥

परमप्रकृतेरपत्यवतो यत्पौत्राद्यपत्यं तद्वृद्धसंज्ञं स्यात् । गर्गस्यापत्यं पौत्रादि गार्ग्यः । एवं वात्स्यः । पौत्रादीति किम्? अनन्तरापत्ये गार्गिः । वात्सिः ।

### वंश्यज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा ॥६।१।३॥

वंशे भवो वंश्यः । पित्रादिर्ज्यायान् भ्राता वयोधिकः एकपितृकः एकमातृको वा प्रपौत्रः । परमप्रकृतेश्चतुर्थं स्त्रीवर्जितप्रपौत्राद्यपत्यं जीवति वंश्ये ज्येष्ठभ्रातरि वा युवसंज्ञः स्यात् । गार्ग्यायणः । वात्स्यायनः । वंश्यज्यायोभ्रात्रोरिति किम्? अन्यस्मिन् जीवति गार्ग्यः । कनिष्ठेऽपि गार्ग्यः । जीवतीति किम्? मृते गार्ग्यः । प्रपौत्रादीति किम्? पौत्रो गार्ग्यः । अस्त्रीति किम्? स्त्री गार्गी ।

### सपिण्डे वयः स्थानाधिके जीवद्वा ॥६।१।४॥

ययोरेकस्सप्तमः पुरुषस्तावन्योन्यस्य सपिण्डौ स्तः । वयो यौवनादि स्थानं पितापुत्रादीत्यादि परमप्रकृतेः स्त्रीवर्जं प्रपौत्राद्यपत्यं वयःस्थानाभ्यां द्वाभ्यामन्यधिके सपिण्डे जीवति जीवदेव युवसंज्ञं वा स्यात् । पितृव्ये पितामहस्य भ्रातरि वा वयोधिके जीवति जीवद्गार्ग्यस्यापत्यं गार्ग्यः गार्ग्यायणो वा । एवं वात्स्यः वात्स्यायनो वा । सपिण्ड इति किम्? अन्यत्र गार्ग्यः । वयःस्थानाधिके इति किम्? द्वाभ्यामन्यतरेण वा न्यूनत्वे गार्ग्यः । जीवदिति किम् । मृते गार्ग्यः । प्रपौत्रादि किम्? पौत्रो गार्ग्यः । स्त्री गार्गी ।

### युववृद्धं कुत्सार्चे वा ॥६।१।५॥

युवा च वृद्धं चापत्यं यथासंख्यं कुत्सायामर्चायां च विषये युवसंज्ञं वा स्यात् युवापत्ये कुत्सायां पक्षे युवत्वं निवर्तते । तत्र वृद्धप्रत्ययेनाभिधानं स्यात् । गार्ग्यस्यापत्यं युवा कुत्सितो गार्ग्यः गार्ग्यायणो वा जाल्मः । युवापत्यो मूत्वा स्वतन्त्रो य स एवमुच्यते । कुत्सायाम् अन्यत्र गार्ग्यायण वृद्धस्यार्चायां पक्षे युवत्वं स्यात्तदा युवप्रत्ययेनाभिधानं स्यात् । वृद्धस्यापत्यं वृद्धमर्चितं तत्प्रधान्

गार्ग्यायणो गार्ग्यो वा अर्षायामन्यत्र गार्ग्य एव । गर्गस्यापत्यं पौत्रादि स्त्री गार्गी ।

## संज्ञा दुर्वा ॥६।१।६॥

या संज्ञा हठात् अस्त्री इत्येव नियुज्यते सा दुसंज्ञा वा स्यात् । दैवद त्तीयाः । दैवदत्ताः । सिद्धसेनीयाः । सैद्धसेनाः ।

## त्यदादिः ॥६।१।७॥

दुसंज्ञं स्यात् । त्यदीयम् ।

## वृद्धिर्यस्य स्वरेष्वादिः ॥६।१।८॥

यस्य शब्दस्य स्वराणां मध्ये आदिः स्वरो वृद्धिसंज्ञः स्यात्स शब्दो दुसंज्ञः स्यात् । औपगवस्येदमौपगवीयम् । आम्रगुप्तायनिः ।

## प्राग्जितादण् ॥६।१।१३॥

तेनजितजयदीव्यत्खनत्सु एतस्मात्प्राग्येऽर्थे अपत्यादपत्येऽन्यपत्यादिवि षयं विनाऽण्प्रत्ययो वा स्यात् ।

## ङसोऽपत्ये ॥६।१।२८॥

षष्ठ्यन्तान्नाम्नोऽपत्येऽर्थेऽणादयः स्युः । उपगोरपत्यमौपगवः ।

## आद्यात् ॥६।१।२९॥

अपत्यार्थप्रत्यया आद्यात्परमप्रकृतेरेव पौत्राद्यपत्यपूर्वजानामपि परमप्रकृतेः पारम्पर्येण सम्बन्धादपत्यं स्यात् । तत्र तेषां सम्बन्धविवक्षायामनन्तरवृद्धयुव भ्योऽपि प्रत्ययः प्राप्नोतीति नियमार्थोऽयं योगः । ऐकार्थ्ये इति विभक्तिलुकि उपगु अण् इतिस्थिते, णकारो वृद्ध्यर्थः ।

## वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते ॥७।४।१॥

ञिति णिति तद्धिते आद्यस्वरस्य वृद्धिः स्यात् ।

## अस्वयम्भुवोऽव् ॥७।४।७०॥

अस्वयम्भूवर्जोवर्णान्तस्यापत्यस्य तद्धितपरेऽव् स्यात् । औपगवः । स्त्री चेदौपगवी ।

## धनादेः पत्युः ॥६।१।१४॥

धनादिर्गणस्तस्मात्परो यः पतिशब्दस्तदन्ताद्वनपतीयप्रमादे प्राग्जितीयेऽर्थेऽञ् प्रत्ययो वा स्यात् । धनपतेरपत्यं तत्र भवः तत आगतो वा धानपतः । आश्व पतः । गाणपतः । शादयस्मिन्पुत्तरत्रयेण ।

## अनिदम्यणपवादे च दित्यदित्यादित्ययमपत्यु-त्तरपदाञ्ण्यः ॥६।१।१५॥

दिति अदिति आदित्ययमशब्देभ्यः पत्युत्तरपदाच्च प्राग्जितीयेऽर्थे इदमर्थे वर्जितेऽपत्याद्यर्थे योऽणोऽपवादस्तस्यापवादविषये ण्य स्यात्। दितेरपत्यं दैत्यः। अदितेरपत्यमादित्यः। दितिर्देवताऽस्येति दैत्यम्। अदितिर्देवताऽस्येत्यादित्यम्। आदित्यो देवताऽस्येत्यादित्य्यम्। यमस्य याम्यम्। पत्युत्तरपदम्, बृहस्पतिर्देवतोऽस्य बार्हस्पत्यम्। अणाणोऽपवादः।

## पृथिव्या आञ् ॥६।१।१८॥

पृथिव्या भवः पार्थिवः। अञ्प्रत्यये पार्थिवी घटिका। अण्प्रत्यये पार्थिवा।

## देवाद्यञ् च ॥६।१।२१॥

चकारादञपि। देवस्येदं देवादागतं वा दैव्यम्। दैवम्। यञन्तादञन्ताच्च ङी। दैवी वाक्। मतान्तरे ण्योऽपि। दैव्या।

## बहिषष्टीकण् च ॥६।१।१६॥

बहिस् इत्येतस्मात्प्राग्जितीयेऽर्थे टीकण्, चकाराद् अ। बहिर्जातो बाहीकः। बाह्यः।

## प्रायोऽव्ययस्य ॥७।४।६५॥

अव्यये तद्धितेऽन्त्यस्वरादिलुक्। टकारो व्यर्थः। बाहीकी।

## अः स्थाम्नः ॥६।१।२२॥

स्थामन् शब्दात्प्राग्जितीयेऽर्थे अः प्रत्ययः स्यात्। अश्वस्थाम्नोऽपत्यमश्वस्थामः।

## लोम्नोऽपत्येषु ॥६।१।२३॥

अः स्यात्। उडुलोमाः। उडुलोमैः। बहुवचनात्स्त्रीत्वैकत्वद्वित्वे च बाह्वादित्वादिञ्। औडुलोमिना। औडुलोमिभ्याम्।

## उत्सादेरञ् ॥६।१।१९॥

उत्सस्येदमौत्सम्। औदपानम्। अणपवादे च उत्सस्यापत्यमौत्सः। तरुण्या अपत्यं तारुणः। तालुनः।

## कल्यग्नेरेयण् ॥६।१।१७॥

आभ्यामेयण् स्यात्। कलिर्देवताऽस्य, कलौ भव, कलेरिदं, कलेरागतं काले-

पम् । एवमाग्नेयम् । भवदष्ट इत्यम् । अणपवादः । आगत निमित्तमुत्पातः संयोगो हित' ॥ पञ्चर्येषु तथैव ।

## प्राग्वतः स्त्रीपुंसान्नञ्स्नञ् ॥६।१।२५॥

प्राग्वतो येऽर्थास्तेष्वनिदम्यणपवादे च स्त्रीशब्दात्पुंसशब्दाच्च क्रमान्नञ्स्नञौ प्रत्ययौ स्याताम् । स्त्रिया अपत्यं स्त्रैणः । स्त्रीणां समूहः स्त्रैणम् । स्त्रीषु भवं स्त्रैणं । स्त्रीणामियं स्त्रैणी । एवं पौंस्नः । पौंस्नम् । पौंस्नी । एवं निमित्तोत्पातसंयोगहितेष्वर्थेषु । प्राग्वत इति किम् ? स्त्रियामर्हं कृत्यं स्त्रिया तुल्यमिति वा स्त्रीवत् । पुंवत् ।

## द्विगोरनपत्ये यस्वरादेर्लुबद्विः ॥६।१।२४॥

अपत्यवर्जेऽन्यत्र प्राग्जितीयेऽर्थे उत्पन्नस्य द्विगोः परस्य यकारादेः स्वरादेश्च प्रत्ययस्य लुप् स्यात् न तु द्विः । द्वयो रथयोर्द्विरथ्या वाऽयं वोढा द्विरथः । रथात्सादेरिति यः । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । यस्वरादेः किम् ? पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गमयम् । अद्विरिति किम् ? पञ्चसु कपालेषु संस्कृतः पञ्चकपालः तस्येदं पाञ्चकपालम् । एवं त्रैवेदम् । द्विगोरिति किम् ? पौर्वशाला । प्राग्जितादित्येव । द्वौ रथौ वहति द्विरथ्यः । वहतीरथादिना यः । तस्य न लुप् । अनपत्ये किम् ? द्वैमातुरः ।

## न प्राग्जितीये स्वरे ॥६।१।१३५॥

गोत्रे उत्पन्नस्य यञादेर्बहुषु वा लुप् वक्ष्यते सा प्राग्जितीयेऽर्थे यो विधीयते स्वरादिस्तस्मिन् विषयभूते न स्यात् । गर्गाणां छात्रा गार्गीयाः । वात्सीयाः । गर्गभार्गविका द्वन्द्वात्प्राग्जितीये विवाहेऽकञ्प्रत्ययस्तस्मिन्यञो लुप्प्रतिषेधो निपात्यते । गर्गाणां वृद्धानां भृगूणां च वृद्धानां यूनां विवाहः । गर्गभार्गविका ।

## तद्धितयस्वरेऽनाति ॥२।१।९२॥

व्यञ्जनात्परस्यापत्यस्य यकारस्य तद्धिते यकारादौ आकारवर्जे स्वरादौ च परे लुक् स्यात् । गार्ग्ये साधुः गार्ग्यः । गर्गाणां समूहो गार्गकम् । प्राग्जितीय इति किम् ? अग्निभ्यो हितः आग्नीयः । गार्गीयः । गार्गीयमिति दीक्षितः । स्वर इति किम् ? गर्गेभ्य आगतं गर्गमयम् । गर्गरूप्यम् ।

## यूनि लुप् ॥६।१।१३७॥

यून्यपत्ये विहितस्य प्रत्ययस्य प्राग्जितीये स्वरादौ प्रत्यये विवक्षितेऽनुत्पन्न एव लुप्स्यात् । लुपि सत्यां यो यतः प्राप्नोति स ततः उत्पद्यते । पांटाहृतः । तस्यापत्यं युवा पांटाहृतः । पांटाहृतिः । मिमताण्णश्चेति णः । तस्य छात्रा इति प्राग्जितीये स्वरादौ चिकीर्षितेऽस्य णप्रत्ययस्य लुप् । ततः इञन्तं प्रकृतिरूपं सम्पन्नमिति वृद्धेऽञ् इत्यण् । पांटाहृताः ।

## पीलासाल्वामण्डूकाद्वा ॥६।१।६८॥

एभ्योऽपत्येऽण् वा स्यात्। पैलः। पैलेयः।

## द्विस्वरादणः ॥६।१।१०९॥

द्विस्वरादणन्तादपत्ये आयनिञ्प्रत्ययः स्यात्।

## पैलादेः ॥६।१।१४२॥

अस्माद्यूनि विहितस्य प्रत्ययस्य लुप्स्यात्। पीलाया अपत्यं पैलः। तस्यापत्यं युवा पैलायनिः। आयनिञो लुपि पैलः पुत्रः पिता च।

## पुरुमगधकलिङ्गसूरमसद्विस्वरादण् ॥६।१।११६॥

एभ्यो द्विस्वरेभ्यश्च राष्ट्रक्षत्रियवाचिभ्यः सरूपेभ्यो राजन्यपत्ये चार्थेऽण् स्यात् स च द्रिः। अञोऽपवादः। अङ्गस्य राज्ञोऽङ्गस्यापत्यं वा आङ्गः। तस्यापत्यमिति द्विस्वरादण इत्यायनिञ्। तस्य,

## अब्राह्मणात् ॥६।१।१४१॥

अब्राह्मणवाचिनो वृद्धप्रत्ययान्ताद्यूनि विहितस्य प्रत्ययस्य लुप् स्यादिति नित्यं लुप्। आङ्गः पिता पुत्रश्च।

## प्राच्ये ञोऽतौल्वल्यादेः ॥६।१।१४३॥

प्राच्यगोत्रे य इञ् तदन्तात्तौल्वल्यादिवर्जिताद्यून्यपत्ये विहितस्य प्रत्ययस्य लुप्स्यात्। पन्नागारस्यापत्यम्।

## अत इञ् ॥६।१।३१॥

अकारान्ताद् ङसन्तान्नाम्नोऽपत्येऽर्थे इञ् स्यात्।

## यञिञः ॥६।१।५४॥

वृद्धे विहितौ यौ यञिञौ तदन्ताद्यून्यपत्ये आयनण् स्यात्। पान्नागारायणः। अनेन लुपि पान्नागारः पिता पुत्रश्च। प्राच्य इति किम्? दाक्षिः पिता। दाक्षायणः पौत्रः। तौल्वल्यादिवर्जनं किम्? तौल्वलिः पिता। तौल्वलायनः पुत्रः।

## वायनणायनिञोः ॥६।१।१३८॥

आयनण आयनिञश्च यून्यपत्ये विहितस्य प्राग्जितीये स्वरादौ प्रत्यये विषयभूते लुब्वा स्यात्। गर्गस्यापत्यं गार्ग्यः। तस्यापत्यं युवा गार्ग्यायणः। यञिञ इत्यायनण्। तस्य च्छात्रा गार्गीया गार्ग्यायणीया वा। दोरीयः ॥ यूनि लुपि इति नित्यलुपि प्राप्ते विकल्पोऽयम्।

## यस्कादेर्गोत्रे ॥६।१।२८॥

यस्कादिभ्यो य' प्रत्ययो विहितस्तदन्तस्य बहुत्वे गोत्रार्थे वर्तमानस्य य-स्कादेर्यं स प्रत्ययस्तस्यास्त्रिया विषये लुप्स्यात्। यस्कस्यापत्यं यास्कः।

## शिवादेरण् ॥६।१।२९॥

शिवादिभ्यो ङसन्तेभ्योऽपत्यमात्रेऽण् स्यात्। यास्कस्याऽपत्यं युवा यास्का-यनिः। द्विस्वरादण इत्यायनिञ्। गोत्र इति किम्? यास्काश्छात्राः। यस्कस्याऽ-पत्यानि यस्काः। तत्प्रतिकृतयो यास्का इत्यत्र गोत्रे उत्पन्नस्यापि प्रत्ययस्य भेदानीं तदन्त प्रतिकृतिषु वर्तमाने गोत्रे इति न भवति। स्त्रियां तु यस्काः स्त्रियः। ङ्मोऽपत्यमात्रं विवक्षित न लिङ्गसङ्ख्यादि। तेन द्वयोर्बहुषु स्त्रीलिङ्गत्वे च स्यात्। औपगवा। औपगवी। तस्येदमित्येवमादिभिरुत्त्रापत्यविवक्षायां तस्या-पत्यादर्थापर्येत्युत्सर्गत्वेन भानोरपत्यं भानवः। अत्र दोरीय इति ईयो न। आद्या विति सूत्रादारम्भः प्राक् नियमार्थं वक्ष। उपगोरपत्यमनन्तरं वृद्धं वा औपगवः। तस्याप्यौपगविः। औपगवेरप्यौपगवः। गर्गस्याऽपत्यं पौत्रादिर्गार्ग्यः। गार्ग्यस्यापि गार्ग्यः। गार्ग्यायणस्यापि गार्ग्यः। अनन्तरादयोऽपि परमप्रकृतिरूपेणैवाऽपत्ये प्रत्ययानुत्पादयन्ति।

## वृद्धाद्यूनि ॥६।१।३०॥

यून्यपत्ये विवक्षिते यः प्रत्ययः स आद्याद्वृद्धात्परमप्रकृतेर्यो वृद्धप्रत्ययस्तद-न्तात्स्यात्। आद्यादितिसूत्रापवादः। वृद्धादिति यूनि प्रकृतिर्विधीयते। गर्ग-स्यापत्यं वृद्धं गार्ग्यः। तस्यापत्यं युवा गार्ग्यायणः। दक्षस्यापत्यं पौत्रादिर्दाक्षिः। तस्यापत्यं युवा दाक्षायणः। नडस्यापत्यं नाडायनः। तस्यापत्यं युवा नाडायनिः। यूनीति किम्? गार्ग्यः। नाडायनः। आद्यादित्येव। उपगोरपत्यं वृद्धमौपगवः। तस्यापत्यं युवा औपगविः। गार्ग्यायणस्यापत्यं युवा गार्ग्यायणः। अत्रायनण् इञ् च न स्यात्।

## अत इञ् ॥६।१।३१॥

अदन्तात्षष्ठ्यन्तादपत्ये इञ् स्यात्। अणोपवादः। दक्षस्यापत्यं दाक्षिः। अस्यापत्यमिः।

## बाह्वादिभ्यो गोत्रे ॥६।१।३२॥

स्वापत्यसन्तानस्य स्वव्यपदेशसंज्ञाकारणस्यपिरस्यपिर्वा प्रथमपुरुषस्तदपत्य गोत्रं बाह्वादिभ्यो ङसन्तेभ्यो गोत्रेऽपत्येऽर्थे इञ् स्यात्। अनकारान्तार्थो बाधक बाधनार्थमारम्भः। बाहोरपत्यं बाहविः। आकृतिगणः।

## वर्मणोऽचक्रात् ॥६।१।३३॥

चक्रशब्दवर्जितात्परो यो वर्मन्शब्दस्तदन्तादपत्येऽर्थे इञ्। ऐन्द्रवर्मिः।

## अजादिभ्यो धेनोः ॥६।१।३४॥

आजाधेनवि ।

## ब्राह्मणाद्वा ॥६।१।३५॥

ब्राह्मणधेनवि । ब्राह्मणधेनव ।

## भूयः सम्भूयोऽम्भोऽमितौजसः स् लुक् च ॥६।१।३६॥

भूयसोऽपत्य भौयि । साम्भूयिः । आम्भि । आमितौजि ।

## व्यासवरुटनिपादसुधातृविंवचण्डालादन्त्यस्य चाक् ॥६।१।३८॥

एभ्योऽपत्ये इञ् स्यात् अन्ते चाक् । व्यासस्यापत्य वैयासकि ।

## शालङ्क्यौदिपाडिवाड्वलिः ॥६।१।३७॥

एते निपाताः । शलङ्कोरपत्य शालङ्कि । उदकस्यौदि । पण्णां पाडि । वाच वदति वाग्वाद तस्यापत्यं वाड्वलि ।

## य्वः पदान्तात्प्रागैदौत् ॥७।४।५॥

ञ्णिति तद्धिते इवर्णोवर्णयोर्वृद्धिप्रसङ्गे तयोरेव स्थाने य्वौ यकारवकारौ पदान्ते ताभ्यां प्राक् ऐदौतौ अन्तौ स्याताम् । नैयायिकः । इद्ध—शोभनोऽश्व सश्वस्तस्यापत्य सौवश्वि । वैयाघ्रकि ।

## कुञ्जादेर्ञायन्यः ॥६।१।४७॥

वृद्धे । कुञ्जस्यापत्यं वृद्ध कौञ्जायन्य । कौञ्जायन्यौ । बहुत्वेषु ।

## स्त्री बहुष्वायनञ् ॥६।१।४८॥

कुञ्जादिभ्यो बहुत्वे वृद्धे आयनञ् स्यात् स्त्रियां तु अबहुत्वेऽपि । कुञ्जस्या पत्यानि कौञ्जायना । स्त्री चेत् कौञ्जायनी । अनन्तरापत्ये कौञ्जि ।

## नडादिभ्य आयनण् ॥६।१।५३॥

वृद्धे । नाडायन । चारायण । अनन्तरे नाडि ।

## हरितादेरञः ॥६।१।५५॥

वृद्धे । विहितो योऽञ् तदन्ताद्धरितादे यून्यपत्ये आयनण् । हरितस्यापत्य युवा हारितायनिः । बिदादिरन्तर्गणोऽयम् ।

## यञिञः ॥६।१।५४॥

गार्ग्यायण । अनातीस्युक्तेर्यञ्लुक् नैव ।

## दर्भकृष्णाग्निशर्मरणशरद्वच्छुनकादाग्रायणब्राह्मणवार्षगण्यवासिष्ठभार्गववात्स्ये ॥६।१।५७॥

एभ्य आग्रायणादिषु वृद्धेष्वपत्येषु आयनण् स्यात्। दर्भस्यापत्यमाग्रायण आग्रायणः। अन्यो दार्भिः। कृष्णाद्ब्राह्मणे। कार्ष्णायणो ब्राह्मणः। अन्यः कार्ष्णिः। शारद्वतायनो भार्गवः। शौनकायनो वात्स्यः।

## जीवन्तपर्वताद्वा ॥६।१।५८॥

वृद्धे आयनण्। जैवन्तायनः। जैवन्तिः। पार्वतीयः पार्वतिः।

## द्रोणाद्वा ॥६।१।५९॥

द्रौणिः। द्रौणायनः। मात्र वृद्धार्थः।

## विदादेर्वृद्धे ॥६।१।४१॥

विदस्यापत्यं वृद्धं वैदः। अनन्तरो वैदिः। वैदौ। विदाः।

## राष्ट्रक्षत्रियात्सरूपाद्राजापत्येद्रिरञ् ॥६।१।११४॥

राष्ट्रवाचिनो राष्ट्रवाचिसरूपाच क्षत्रियवाचिनः क्षत्रियवाचिसरूपाच यथासंख्यं राजनि क्षत्रियेऽपत्ये चाऽञ् स्यात्। स च द्रिसंज्ञः स्यात्।

## बहुष्वस्त्रियाम् ॥६।१।१२४॥

द्र्यन्तस्य शब्दस्य बहुषु वर्तमानस्य योऽद्रिस्तस्याऽस्त्रियां लुप्स्यात्। विदेहानां राजानो विदेहाः। पाञ्चालः। पाञ्चालौ। पञ्चालाः। राज्ञोऽपत्यानि पञ्चालाः। स्त्रियां तु पञ्चालस्यापत्यानि पाञ्चाल्यः। विद उर्व कश्यप इत्यादि विदादिः।

## गर्गादेर्यञ् ॥६।१।४२॥

वृद्धापत्ये। गार्ग्यः। वात्स्यः। अनन्तरो गार्गिः। गोत्र इत्येव। अन्यो गार्गिः। गर्गमात्रः कस्यापि पुत्रो गार्ग्यः गार्ग्यौ। बहुत्वे,

## यञञोऽश्यापर्णान्तगोपवनादेः ॥६।१।१२६॥

यञन्तस्याञन्तस्य च बहुत्वे गोत्रार्थे यः प्रत्ययस्तस्याऽस्त्रियां लुप्स्यात्। श्यापर्णगोपवनादिगण विदादेरन्तर्गतम् विहाय गर्गाः वत्साः विदाः उर्वाः। स्त्रियां तु गार्ग्यः। गोत्र इत्येव। औत्साः। पौनर्भवाः पौत्राः दौहित्राः।

## मधुबभ्रोर्ब्राह्मणकौशिके ॥६।१।४३॥

वृद्धापत्ये यञ्। माधव्यो ब्राह्मणः। माधवोऽन्यः। बाभ्रव्यः कौशिकः। बाभ्रवोऽन्यः। बभ्रोर्गर्गादिपाठात् सिद्धे नियमार्थमिदम्। गर्गादिफलं तु लोहि

तादिगकछान्तात् डायन् चान्त' । पाञ्च्यायणी । यञोडायञ् च षष्ठी स्यात्स-
योगे डायन् अन्तो वा । गार्गि । गार्ग्यायणी वा ।

## कपिबोधादाङ्गिरसे ॥६।१।४४॥

अङ्गिरसा प्रसिद्धे वृद्धापत्ये यञ् । कपेरपत्यं वृद्ध आङ्गिरस' काप्य' । कापे-
योऽन्यो बोध्य' ।

## वतण्डात् ॥६।१।४५॥

वतण्डस्यापत्यं वृद्धमाङ्गिरसो वातण्ड्य' ।

## स्त्रियां लुप् ॥६।१।४६॥

वतण्डी आङ्गिरसी चेत् । जातिलक्षणो ङी । अनाङ्गिरसे तु शिवादिपा-
ठात् अणि वातण्डी । लोहितादित्वाद्वातण्ड्यायनी ।

## अश्वादेः ॥६।१।४९॥

वृद्धापत्ये आयनञ् । आश्वायन' ।

## भर्गात्त्रैगर्ते ॥६।१।५१॥

तथैव । भार्गायण त्रैगर्तोऽन्यो भार्गि । शिवादेरण् अतइञादेरपवाद' ।
शिवस्यापत्यं शैव' । गाङ्ग' । पक्षे तिकादेरायनिञ् । गाङ्गायनि' । अपत्ये एयण् ।
गाङ्गेय' ।

## अदोर्नदीमानुषीनाम्नः ॥६।१।६७॥

अपत्येऽण् स्यात् । नैयण् । यामुन' । नार्मद' । अदोरिति किम्? वासव-
दत्तेय' । नामग्रहणं किम्? शौभनेय' ।

## शपभरद्वाजादात्रेयः ॥६।१।५०॥

आयनञ् । शापायनः । भारद्वाजायन' । आत्रेय' ।

## ऋषिवृष्ण्यन्धककुरुभ्यः ॥६।१।६१॥

अपत्येऽण् । मेञ् । वासिष्ठ' । गौतम' । वृष्णि, वासुदेव' । अन्धकगोत्रे,
श्वाफल्क' । कुरु, नाकुल' । साहदेव' । शौरिर्योऽहादि' । इञपवादोऽप यश्येपवा
दन्यायात् ।

## इतोऽनिञः ॥६।१।७२॥

इञन्तवर्जनाद्विस्वराद्विकारान्तादपत्ये एयण् । नाभय' । आत्रेय' ।

## सङ्ख्यासम्भद्रान्मातुर्मातुर्च ॥६।१।६६॥

संख्यावाचिन' सम्भद्र इत्येताभ्या परस्य मातृशब्दस्याऽपत्येऽण् स्यात् ।

मातुश्च मातुर् इत्यादेशः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । षाण्मातुरः । धान्यमाले धान्यामात्रोर्द्वयोरपत्यं द्वैमात्रः ।

## कन्यात्रिवेण्याः कनीनत्रिवण च ॥६।१।६२॥

अपत्येऽण् । तद्योगे एतावादेशौ स्तः । कानीनो व्यासः कर्णश्च । त्रिवेण्या अपत्यं त्रैवणः ।

## विकर्णछागलाद्वात्स्यात्रेये ॥६।१।६४॥

क्रमादेतदर्थयोरपत्येऽण् । वैकर्णो वात्स्यः । वैकर्णिरन्यः । छागल आत्रेयः । छागलिरन्यः ।

## शुङ्गाभ्यां भरद्वाजे ॥६।१।६३॥

शुङ्गात् शुङ्गाया वाऽपत्येऽण् । शौङ्गो भारद्वाजः । शौङ्गिः शौङ्गेयो वाऽन्यः । नामग्रहणे लिङ्गविशिष्टस्यापीतिसिद्धे परस्यादित्वराद्यथा इत्यस्य बाधार्थं शुङ्गाभ्याम् इत्यादीयते ।

## पीलासाल्वामण्डूकाद्वा ॥६।१।६८॥

पैलः । पैलेयः । माण्डूकः । माण्डूकेयः । माण्डूकिः ।

## ङ्यापूत्यूङः ॥६।१।७०॥

एयण् । सौपर्णेयः । वैनतेयः । यौवतेयः । कामण्डलेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ।

## द्विस्वरादनद्याः ॥६।१।७१॥

द्विस्वरात् ङ्यास्यूङन्तादनद्यभिधानोऽपत्ये एयण् । दत्ताया अपत्यं दात्तेयः । पार्थ इत्यत्र तस्येदमित्यण् । विकर्णकुषीतकात्काश्यपे अविशेषे एयण् । वैकर्णेयः काश्यपः । वैकर्णिरन्यः ।

## भ्रुवो भ्रुव् च ॥६।१।७६॥

अस्मादपत्ये एयण् भ्रुव् इत्यादेशश्चास्य । भ्रौवेयः ।

## प्राद्वाहणस्यैये ॥७।४।२१॥

प्रशब्दात्परस्य वाहणशब्दस्य एय प्रत्यये ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् । आदेः पूर्वस्य तु प्रशब्दस्य वा वृद्धिः । प्रवाहयतीति प्रवाहणः । तस्यापत्यं प्रवाहणेयः । वाहणेति आकारे वृद्धिकरण पुंवद्भावनिषेधार्थम् । तेन प्रवाहणयी भार्या यस्य स प्रवाहणेयीभार्य इति ।

## एयस्य ॥७।४।२२॥

एयप्रत्ययान्तायपयात् प्रशब्दात्परस्य वाहणशब्दस्य ञ्णिति तद्धिते स्वरे-

त्यादेः स्वरस्य वृद्धिः स्यात् । आदेस्तु प्रवाह्णस्य वा । प्रवाहणेयस्यापत्यं युवा प्रवाहणेयिः । प्रावाहणेयिः । कल्याण्यादेरिन् चान्तस्य अपत्ये एयण् स्यात् । इन् इत्यय चान्तस्यादेशः । काल्याणिनेयः ।

## कुलटाया वा ॥६।१।७८॥

कौलटिनेयः । कौलटेयः । कुलटाऽत्र भिक्षुकी सती । व्यभिचारिण्यां तु क्षुद्रालक्षण एरणेव । कौलटेरः । सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं सौभागिनेयः । हृद्भगसिन्धोरिति पूर्वोत्तरपदयोर्वृद्धिः । चटकाण्णैरः स्त्रियाम् तु लुप् ॥ लुप् । चटकस्य चटकाया वाऽपत्यं चाटकैरः ।

## स्त्र्यपत्ये ॥६।१।७९॥

चटका । अजादित्वात् आप् ।

## क्षुद्राभ्य एरण्वा ॥६।१।८०॥

अपत्ये । नाणेयणौ । काणाया अपत्यं काणेरः । पक्षे काणेयः । दास्याः, दासेरः । दासेयः । नट्या नाटेरः । नाटेयः ।

## गोधाया दुष्टे णारश्च ॥६।१।८१॥

गौधारः । गौधेरः । योऽहिना गोधायां जन्यते । गौधेयोऽन्यः ।

## जण्टपण्टात् ॥६।१।८२॥

जाण्टारः । पाण्टारः । आण्डारः । पाण्डार इत्यपि ।

## चतुष्पाद्भ्य एयञ् ॥६।१।८३॥

सुरभेः सौरभेयः । शाबलेयः ।

## गृष्ट्यादेः ॥६।१।८४॥

गृष्टेरपत्यं गार्ष्टेयः । पाडवेयो वृषे निपातोऽयम् । वृषोऽत्र यो गर्भे बीजं निषिञ्चति ।

## रेवत्यादेरिकण् ॥६।१।८६॥

रैवतिकः ।

## वृद्धस्त्रिया क्षेपे णश्च ॥६।१।८७॥

वृद्धप्रत्ययान्तात्स्त्रीवाचिन शब्दादपत्ये णः प्रत्ययः स्यात् । चकारादिकण् च निन्दायां गम्यायाम् । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य क्षेपः । गार्ग्या अपत्यं युवा गार्गो गार्गिको जाल्मः ।

## भ्रातुर्व्यः ॥६।१।८८॥

अपत्ये भ्रातुर्व्यः । भ्रातृव्यः ।

## ईयः स्वसुश्च ॥६।१।८९॥

भ्रातृशब्दात्स्वसृशब्दाच्चापत्ये ईयः । स्वस्रीयः । भ्रात्रीयः ।

## मातृपित्रादेर्डेयणीयणौ ॥६।१।९०॥

मातृष्वसुरपत्यं मातृष्वसेयः । मातृष्वस्रीयः । पैतृष्वसेयः । पैतृष्वस्रीयः ।

## श्वशुराद्यः ॥६।१।९१॥

श्वशुरशब्दादपत्ये यः स्यात् । श्वशुर्यः ।

## जातौ राज्ञः ॥६।१।९२॥

राज्ञोऽपत्यं राजन्यः ।

## क्षत्रादियः ॥६।१।९३॥

क्षत्रस्यापत्यं क्षत्रियः । क्षात्रिरन्यः ।

## मनोर्याणौ षश्चान्तः ॥६।१।९४॥

जातौ । मनुष्याः । मानुषाः । मानुषी ।

## माणवः कुत्सायाम् ॥६।१।९५॥

अणि निपातोऽयम् ।

## कुलादीनः ॥६।१।९६॥

कुलस्यापत्यं कुलीनः । राजकुलीनः ।

## यैयकञावसमासे वा ॥६।१।९७॥

कुलान्तात्केवलशब्दाच्च अपत्ये य-एयकञ् एतौ वा स्तः । इनश्च । कुल्यः । कौलेयकः । कुलीनः । बहुकुल्यः । बहुकौलेयकः । बहुकुलीनः ।

## दुष्कुलादेयण्वा ॥६।१।९८॥

दौष्कुलेयः । दुष्कुलीनः ।

## महाकुलाद्वाऽञीनञौ ॥६।१।९९॥

ईनञ्च । माहाकुलः । माहाकुलीनः । महाकुलीनः ।

## कुर्वादेर्ञ्यः ॥६।१।१००॥

अपत्ये । कौरव्यः । असक्षत्रियवचनोऽपि कुरुः । क्षत्रियवचनात्तु ।

## दुनादिकुर्वित्कोशलाजादाञ्ञ्यः ॥६।१।११८॥

अम्बष्ठानामपत्यमाम्बष्ठ्यः । अम्बष्ठाः । नाथि, निषधस्यापत्यं नैषध्यः ।

निषधाः । कुरोरपत्यं कौरव्यः । बहुत्वे कुरवः । इकारान्त, अवन्तेरपत्यमावन्त्यः । अवन्तयः । कौन्त्यः । कुन्तयः । कोशलस्यापत्यं कौशल्यः । कोशलाः । एवम् आजाद्यः । अजादाः । द्रिसंज्ञत्वाद्बहुत्वे लुप् । कुर्वादेर्ञ्ये तु कौरव्याः ।

## सम्राजः क्षत्रिये ॥६।१।१०१॥

अस्मादपत्ये ञ्यः । सम्राजोऽपत्यं साम्राज्यः क्षत्रियः । साम्राजोऽन्यः । बाह्वादित्वात्साम्राजिरपि ।

## सेनान्तकारुलक्ष्मणादिञ्च ॥६।१।१०२॥

हरिषेणस्यापत्यं हारिषेणिः । हारिषेण्यः । वार्द्धकिः । वार्द्धक्यः । लाक्ष्मणिः । लाक्ष्मण्यः ।

## सुयाम्नः सौवीरेष्वायनिञ् ॥६।१।१०३॥

सौयामायनिः । सौयामोऽन्यः ।

## पाण्टाहृतिमिमताण्णश्च ॥६।१।१०४॥

आभ्यां सौवीरेषु जनपदार्थेऽपत्येऽण् आयनिञ् च प्रत्ययौ स्तः । पाण्टाहृतेरपत्यं युवा सौवीरगोत्रः पाण्टाहृतः । पाण्टाहृतायनिर्वा ।

## भागवित्तितार्णबिन्दवाऽकशापेयान्निन्दायामिकण्वा ॥६।१।१०५॥

भागवित्त्यादेर्यून्यपत्ये इकण्वा । पक्षे आयनञ् इञ् च । भागवित्तिकः । भागवित्तायनो वा जाल्मः । तार्णबिन्दविकः । तार्णबिन्दविर्वा । आकशापेयिकः । आकशापेयिर्वा ।

## सौयामायनियामुन्दायनिवार्ष्यायणेरीयश्च वा ॥६।१।१०६॥

सौयामायन्यादेरीयश्च वा । सौयामायनिकः । सौयामायनिः । वाणो लुक् ।

## दगुकोशलकर्मारच्छागवृषाद्यादि ॥६।१।१०८॥

दगुकोशलादेरपत्ये यकारादिरायनिञ् । दागव्यायनिः ।

## अवृद्धाद्दोर्न वा ॥६।१।११०॥

आम्रगुप्तायनिः । आम्रगुप्तिः ।

## पुत्रान्तात् ॥६।१।१११॥

गार्गीपुत्रायणिः । गार्गीपुत्रिः ।

## चर्मिवर्मिगारेटकार्कट्यकाकलङ्कावाकिनाच्च कश्चा-न्तोऽन्त्यस्वरात् ॥६।१।११२॥

चर्मिन्वर्मि प्रभृतिभ्य पुमान्ताच्च हुसक्काकादपत्ये आयनिञ्, तयोरेवोत्तम रात्पर' ककारोऽन्त' । चार्मिकायणि' । चार्मिण । संयोगादिन' ॥ इत्यन्तस्य संयो गादेरणि परेऽन्त्यस्वरादेर्लुप्त स्यात् ।

## अदोरायनिः प्रायः ॥६।१।११३॥

यिपुष्ठायनि' । यैपुष्ठिः । श्रीविजयायनि' । श्रीवैजयि' । कन्थिः । दाक्षि प्लाक्षि' । अथ द्रिसंज्ञा ।

## गान्धारिसाल्वेयाभ्याम् ॥६।१।११५॥

राष्ट्रक्षत्रिया सरूपराजापत्ये द्रि'संज्ञे दुसक्षणस्यापवादोऽञ् । गान्धारीणां राजा गान्धारे राज्ञोऽपत्य वा गान्धार । गान्धारी । गान्धारय' । पुरुमगधादि भ्यण् प्राग्युक्तो द्रि' ।

## साल्वांशप्रत्यग्रथकलकूटाऽश्मकादिञ् ॥६।१।११७॥

द्रि' संज्ञः । उदुम्बराणां राजा, उदुम्बरस्याऽपत्यमौदुम्बरिः । बहुषु लुप् । साल्वा नाम जनपदस्तदंशा उदुम्बरादय' इति राष्ट्रवाचिन' ।

## पाण्डोर्ड्यण् ॥६।१।११९॥

स च द्रि' । पाण्डूनां राजा पाण्डोरपत्यं वा पाण्ड्य' । पाण्ड्यौ । पाण्डवः । पाण्डवा इति । कुरवो जनपदस्तस्य राजा पाण्डुरिति शिवायण ।

## शकादिभ्यो द्रेर्लुप् ॥६।१।१२०॥

शकानां राजा शकस्यापत्य वा शकः ।

## कुन्त्यवन्तेः स्त्रियाम् ॥६।१।१२१॥

आभ्यां द्रेर्न्यस्य लुक् स्त्रियां वाच्यायाम् । कुन्तेरपत्य स्त्री कुन्ती । एव मवन्ती ।

## द्रेरञणोऽप्राच्यभर्गादेः ॥६।१।१२३॥

प्राच्यान् भर्गादींश्च मुक्त्वाऽन्यस्मात्परस्याञोऽणश्च द्रे' स्त्रियां लुप् । शूर सेनस्यापत्यं शूरसेनी । अणो लुप् । मद्री । मत्सी । अणो लुप् ।

## कुरोर्वा ॥६।१।१२२॥

कुरुशब्दाद्द्रेर्न्यस्य वा लुप् । कुरोरपत्यं स्त्री कुरूः । कौरव्यायणी ।

## कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती च ॥६।१।१२७॥

कौण्डिन्य आगस्त्य इत्येतयोर्बहुत्वे गोत्रार्थयञोऽणश्चास्त्रियां लुप्स्यात्। तद्योगे कुण्डिन अगस्ति इत्यादेशौ स्तः। कुण्डिन्या अपत्यं कौण्डिन्यः। गर्गादित्वाद्यञ्। कौण्डिन्यौ। कुण्डिनाः। आगस्त्यः। आगस्त्यौ। अगस्तयः।

## भृग्वङ्गिरसकुत्सवसिष्ठगोतमात्रेः ॥६।१।१२८॥

एभ्यो यः प्रत्ययस्तदन्तस्य बहुत्वे गोत्रेऽर्थे वर्तमानस्य यः प्रत्ययस्तस्यास्त्रियां लुप्। भार्गवः। भार्गवौ। भृगवः। एवमङ्गिरसः। कुत्साः। वसिष्ठाः। गोतमाः। एभ्यो णो लुप्। स्त्रियां तु भार्गव्यः।

## प्राग्भरते बहुस्वरादिञः ॥६।१।१२९॥

बहुस्वरान्नाम्नो य इञ् तदन्तस्य बहुत्वे प्राग्गोत्रे भरतगोत्रे वर्तमानस्य यः प्रत्ययस्तस्यास्त्रियां लुप्स्यात्। पान्नागारिः। पान्नागारी। पन्नागाराः। भरते गोत्रे, आर्जुनिः। अर्जुनाः।

## वोपकादेः ॥६।१।१३०॥

भागवत्। उपकाः। औपकायनाः। लमकाः लामकायनाः। स्त्रियः औपकायन्यः।

## तिककितवादौ द्वन्द्वे ॥६।१।१३१॥

अस्मिन् गोत्रापत्ये वर्तमाने बहुत्वे तैकायनि कैतवायनि प्रभृतीनां यः समप्रत्ययस्तस्यास्त्रियां लुप्। तैकायनश्च कैतवायनश्च तिककितवाः।

## द्व्यादेस्तथा ॥६।१।१३२॥

आङ्गश्च वाङ्गश्च सौह्मश्च अङ्गवङ्गसुह्माः। अत्र द्विस्वरलक्षणस्याणो लुप् बहुष्वस्त्रियामित्यत सूत्रादारभ्य ये लोपनीयाः प्रत्ययास्ते द्व्यादयो ज्ञेयाः।

## वाऽन्येन ॥६।१।१३३॥

द्व्यादेरन्येन सह द्व्यादीनां द्वन्द्वे बहुत्वे वर्तमाने यः स द्व्यादिप्रत्ययस्तस्य तथा वा लुप्स्यात्पथा पूर्वमङ्गवङ्गदाक्षयः आङ्गवाङ्गदाक्षयः।

## द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा ॥६।१।१३४॥

षष्ठीतत्पुरुषे परपदं तस्याः षष्ठ्या विषये द्वयोरेकस्मिन् वर्तते यञादिः प्रत्ययस्तस्य तथा वा लुप्स्यात्। यथा पूर्वम्। गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलम्। गार्ग्यकुलम्।

## घर्मिवर्मिगारेटकार्कट्यकाकलङ्कावाकिनाच कश्चा-न्तोऽन्त्यस्वरात् ॥६।१।११२॥

घर्मिन्वर्मिन्प्रभृतिभ्यः पुत्रान्ताच द्रुसंज्ञकादपत्ये आयनिञ्, तद्योगेऽन्त्यस्व रात्परः ककारोऽन्तः । घार्मिकायणिः । घार्मिणः । सयोगाविम ॥ इञन्तस्य संयो गादेरपि परेऽन्तस्वरादेर्लुक् स्यात् ।

## अदोरायनिः प्रायः ॥६।१।११३॥

त्रिपुष्टायनिः । त्रैपुष्टिः । श्रीविजयायनिः । श्रीवैजयिः । कपिलः । दाक्षि र्दाक्षिः । अथ द्रिसंज्ञा ।

## गान्धारिस्वाल्वेयाभ्याम् ॥६।१।११५॥

राष्ट्रक्षत्रियात् सरूपराजापत्ये द्रिसंज्ञे पुरुमगधस्यापत्यादोऽञ् । गान्धारीणां राजा गान्धारे राज्ञोऽपत्यं वा गान्धारः । गान्धारी । गान्धारयः । पुरुमगधादि भ्यण् मागधको द्रिः ।

## साल्वांशप्रत्यग्रथकलकूटाऽश्मकादिञ् ॥६।१।११७॥

द्रिः संज्ञः । उदुम्बराणां राजा, उदुम्बरस्याऽपत्यमौदुम्बरिः । बहुषु लुप् । साल्वा नाम जनपदस्तदंशा उदुम्बरादय इति राष्ट्रवाचिनः ।

## पाण्डोर्ड्यण् ॥६।१।११९॥

स च द्रिः । पाण्डूनां राजा पाण्डोरपत्यं वा पाण्ड्यः । पाण्ड्यौ । पाण्डवः । पाण्डवा इति तु कुरवो जनपदस्तस्य राजा पाण्डुरिति शिवाद्यण् ।

## शकादिभ्यो द्रेर्लुप् ॥६।१।१२०॥

शकानां राजा शकस्यापत्यं वा शकः ।

## कुन्त्यवन्तेः स्त्रियाम् ॥६।१।१२१॥

आभ्यां द्रेर्न्यस्य लुप् स्त्रियां वाच्यायाम् । कुन्तेरपत्यं स्त्री कुन्ती । एव मवन्ती ।

## द्रेरञणोऽप्राच्यभर्गादेः ॥६।१।१२३॥

प्राच्यान् भर्गादींश्च मुक्त्वाऽन्यस्मात्परस्याञोऽणश्च द्रेः स्त्रियां लुप् । शूर सेनस्यापत्यं शूरसेनी । अणो लुप् । मद्री । मत्सी । अणो लुप् ।

## कुरोर्वा ॥६।१।१२२॥

कुरुशब्दाद्रेर्न्यस्य वा लुप् । कुरोरपत्यं स्त्री कुरूः । कौरव्यायणी ।

## कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती च ॥६।१।१२७॥

कौण्डिन्य आगस्त्य इत्येतयोर्यहुत्वे गोत्रार्थयञोऽणश्चास्त्रियां लुप्स्यात्। तयोगे कुण्डिन अगस्ति इत्यादेशौ स्त'। कुण्डिन्या अपत्य कौण्डिन्या'। गर्गादित्वाद्यञ्। कौण्डिन्यौ। कुण्डिन'। आगस्त्य। आगस्त्यौ। अगस्तय'।

## भृग्वङ्गिरसकुत्सवसिष्ठगोतमात्रेः ॥६।१।१२८॥

एभ्यो य' प्रत्ययस्तदन्तस्य बहुत्वे गोत्रेऽर्थे वर्तमानस्य य' प्रत्ययस्तस्यास्त्रियां लुप्। भार्गव'। भार्गवौ। भृगव'। एवमङ्गिरस'। कुत्सा। वसिष्ठाः। गोतमा'। एभ्यो गो लुप्। स्त्रियां तु भार्गव्य'।

## प्राग्भरते बहुस्वरादिञः ॥६।१।१२९॥

बहुस्वरान्नाम्नो य इञ् तदन्तस्य बहुत्वे प्राग्गोत्रे भरतगोत्रे वर्तमानस्य य' समप्रत्ययस्तस्यास्त्रियां लुप्स्यात्। पान्नागारि। पान्नागारी। पन्नागारा'। भरते गोत्र, आर्जुनि'। आर्जुना'।

## वोपकादेः ॥६।१।१३०॥

मागवत्। उपका'। औपकायना। लमका' लामकायना'। स्त्रिय' औपकायन्य'।

## तिककितवादौ द्वन्द्वे ॥६।१।१३१॥

अस्मिन् गोत्रापत्ये वर्तमाने बहुत्वे तैकायनि कैतवायनि प्रभृतीनां य' समप्रत्ययस्तस्यास्त्रियां लुप्। तैकायनश्च कैतवायनश्च तिककितवा'।

## द्व्यादेस्तथा ॥६।१।१३२॥

आद्दश्च याद्दश्च सौश्रश्च अद्दयद्दसुश्रा। अत्र द्विस्वरलक्षणस्याणो लुप् बहुत्वस्त्रियामित्यत' सूत्रावारभ्य ये लोपनीया' प्रत्ययास्ते द्व्यादयो ज्ञेया'।

## वाऽन्येन ॥६।१।१३३॥

द्व्यादेरन्येन सह द्व्यादीनां द्वन्द्वे बहुत्वे वर्तमाने य' स द्व्यादिप्रत्ययस्तस्य तथा वा लुप्स्यात्तथा पूर्वमद्दयद्दवाक्षया आद्दयाद्दवाक्षय'।

## द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा ॥६।१।१३४॥

षष्ठीतत्पुरुषे यत्पदं तस्या' षष्ठ्या विषये द्व्योरेकस्मिन् वर्तते यञादि' प्रत्ययस्तस्य तथा वा लुप्स्यात्। यथा पूर्वम्। गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलम्। गार्ग्यकुलम्।

## द्रीञो वा ॥६।१।१३९॥

प्राग्जितीये स्वर इति निवृत्तम् । द्रिसञ्ज्ञो य इञ् तदन्तात्परस्य युवप्रत्ययस्य लुब्वा स्यात् । उदुम्बरस्यापत्यमौदुम्बरि । तस्यापत्यं साल्वांशेत्यादिना युवा औदुम्बरिः । औदुम्बरायणो वा । यञिञ इत्यायनण् ।

## ञिदार्षादणिञोः ॥६।१।१४०॥

ञित् आर्षश्च योऽपत्यप्रत्ययस्तस्य तदन्तात्परस्य युवप्रत्ययस्य अणिञोः लुप्स्यात् । ञित्, तिकस्यापत्यं तैकायनिः । तस्याप्यपत्यमौत्सर्गिकोऽण् । तस्य लुप् । तैकायनिः पिता पुत्रश्च । आर्षात्, वासिष्ठः पिता पुत्रश्च ।

## केकयमित्रयुप्रलयस्य यादेरिय् च ॥७।४।२॥

एषां ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिर्यादेश्च शब्दरूपस्य इयादेशः स्यात् । केकयस्यापत्यं कैकेयः । राष्ट्रक्षत्रियेत्यादिनाऽञ् ।

## दण्डिहस्तिनोरायने ॥७।४।४५॥

परे नान्त्यस्वरादिलुक् स्यात् । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः । नडादायनण् ।

## वाशिनायनौ ॥७।४।४६॥

नान्त्यस्वरादिलुक् । वाशिनोऽपत्यं वाशिनायनिः । अवृद्धाद्दोर्नवेत्यायनिञ् । एये जिह्माशिनः । भ्राग्जिह्माशिनः । भ्राग्जिह्माशिनेयः । शुभ्रादित्वादेयण् ।

## इकण्यार्थर्वणः ॥७।४।४९॥

नान्त्यस्वरादिलुक् । अथर्वाणमधीते आथर्वणिकः । न्यायादेरिकण् ।

## सारवैक्ष्वाकमैत्रेयभ्रौणहत्यधैवत्यहिरण्मयम् ॥७।४।३०

एते शब्दा अणादिप्रत्ययान्ता कृतान्त्यलोपादयो निपात्यन्ते । इक्ष्वाकोरपत्यमैक्ष्वाकः । राष्ट्रक्षत्रियेत्यादिनाऽञ् । मित्रयोरपत्यं मैत्रेयः । शुभ्रादित्वादेयः । मित्रयुलोपः । राज्ञोऽपत्यं राजन्यः इत्यादौ ।

## अनोऽट्ये ये ॥७।४।५०॥

अनन्तस्य रयवर्जिते ये परेऽन्त्यस्वरादेर्नलुक् ।

## अवर्मणो मनोऽपत्ये ॥७।४।५१॥

वर्मन् वर्जमन्नन्तस्यापत्येऽर्थे विहितेऽणि अन्त्यस्वरादिलुक्स्यात् । भद्रसाम्नोऽपत्यं भाद्रसामः । मन् इति किम् ? सुत्वनोऽपत्यं सौत्वनः । वर्मणि चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

## हितनाम्नो वा ॥७।४।९०॥

अ अन्त्यस्वरादेर्लुक् । हैतनामो ब्राह्मणः ।

## अनपत्येअणि ॥७।४।५५॥

अणि अन्त्यस्वरादेर्लुक् । ब्रह्मण इदं ब्राह्मणम् । ब्रह्मण इयं ब्राह्मी ओषधिः । ब्राह्मम् अस्त्रं ।

## जातौ ॥७।४।५८॥

अनपत्य एवायं नियम्यते । तेन अयर्मण इत्यादिनाऽपि न लुक् । ब्रह्मणोऽपत्यं ब्राह्मणः । जाताविति किम् ? ब्रह्मणोपत्यं ब्राह्मोनारदः ।

## उक्ष्णो लुक् ॥७।४।५९॥

अपत्येऽणि अ अन्त्यस्वरादेर्लुक् । औक्ष पदम् । उक्ष्णोऽपत्यमौक्ष्णः ।

## पादिहन्धृतराज्ञोऽणिपकारादेरनोह्नः ॥२।१।११०॥

धृतराजमिश्येतयोश्चाकारस्याणि परे लुक्स्यात् । उक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धार्तराज्ञः । पादीति किम् ? सामनः । अर्ण्येय । ताक्षण्यः ।

## कुलाख्यानाम् ॥२।४।७९॥

पुणिकमुणिकाद्याः कुलाख्यास्तासामनार्षे वृद्धेऽणिञन्तानामेषामन्तस्य ष्यादेशः स्यात् । पौणिक्या ।

## भोजसूतयोः क्षत्रियायुवत्योः ॥२।४।८१॥

एतयोरन्तस्य ष्यादेशः । भोज्या भोजवंशजा क्षत्रिया । सूत्या प्राप्तयौवना मानुषी ।

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ॥२।४।८२॥

एषामिञन्तानां स्त्रियामन्तस्य ष्यादेशो वा । दैवयज्ञ्या दैवयज्ञी । इत्यपत्याधिकारः ।

> विक्रमेण सुपिनाकधर्मिणो
>
> यः करोति पदपर्वनिर्णयम् ।
>
> सूरराजजननाम्बुजे रवि-
>
> र्वीर्यपार्थिवजयतेऽद्भुत श्रिया ॥ १ ॥

## रागाट्टोरक्ते ॥६।२।१॥

रज्यतेऽनेनेति रागः । तद्वाचिनाम्नस्तृतीयान्ताद्रक्ताद्यर्थे अणादयः स्युः । कुसुम्भेनरक्तं वस्त्रं कौसुम्भम् । कौङ्कुमम् । माञ्जिष्ठम् ।

## द्रीञो वा ॥६।१।१३९॥

प्राग्जितीये स्वर इति निवृत्तम् । त्रिसञो य इञ् तदन्तात्परस्य युवप्रत्ययस्य लुब्वा स्यात् । उदुम्बरस्यापत्यमौदुम्बरिः । साल्वांशोत्यादिना तस्यापत्यं युवा औदुम्बरिः । औदुम्बरायणो वा । पक्षेऽत्र इत्यायनण् ।

## ञिदार्षादणिञोः ॥६।१।१४०॥

ञित् आर्षश्च योऽपत्यप्रत्ययस्तस्य तदन्तात्परस्य युवप्रत्ययस्य अण इञश्च लुप्स्यात् । ञित्, तिककस्यापत्यं तैकायनिः । तस्याप्यपत्यमौत्सर्गिकोऽण् । तस्य लुप् । तैकायनिः पिता पुत्रश्च । आर्षाद्, वासिष्ठः पिता पुत्रश्च ।

## केकयमित्रयुप्रलयस्य यादेरिय् च ॥७।४।२॥

एषां ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिर्यादेश्च शब्दरूपस्य इयादेशः स्यात् । केकयस्यापत्यं कैकेयः । राष्ट्रक्षत्रियेत्यादिनाऽण् ।

## दण्डिहस्तिनोरायने ॥७।४।४५॥

परे नान्त्यस्वरादिलुक्स्यात् । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः । नडादायनण् ।

## वाशिनायनौ ॥७।४।४६॥

नान्त्यस्वरादिलुक् । वाशिनोऽपत्यं वाशिनायनिः । अवृद्धाद्दोर्नवेत्यायनिञ् । एये जिह्माशिनः । वागिजह्माशिनः । वाग्जिह्माशिनेयः । शुभ्रादिभ्य एयण् ।

## इकण्याथर्वणः ॥७।४।४९॥

नान्त्यस्वरादिलुक् । अथर्वाणमधीते आथर्वणिकः । न्यायादेरिकण् ।

## सारवैक्ष्वाकमैत्रेयभ्रौणहत्यधैवत्यहिरण्मयम् ॥७।४।३०

एते शब्दा अणादिप्रत्ययान्ता कृतात्यलोपादयो निपात्यन्ते । इक्ष्वाकोरपत्यमैक्ष्वाकः । राष्ट्रक्षत्रियेत्यादिनाऽञ् । मित्रयोरपत्यं मैत्रेयः । गृष्ट्यादिभ्य एयञ् । यलोपः । राज्ञोऽपत्यं राजन्या इत्यादौ ।

## अनोऽट्ये ये ॥७।४।५०॥

अन्नन्तस्य टयवर्जित ये परेऽन्त्यस्वरादेर्लुक् ।

## अवर्मणो मनोऽपत्ये ॥७।४।५१॥

वर्मन् वर्जमन्नन्तस्यापत्येऽर्थे विहितेऽणि अन्त्यस्वरादिलुक्स्यात् । भद्रसाम्नोऽपत्यं भाद्रसाम । मन् इति किम् ? सुत्वनोऽपत्यं सौत्वन । वर्मणि चाक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

## हितनाम्नो वा ॥७।४।६०॥

अन्त्यस्वरादेर्लुक् । हैतनामो ब्राह्मण ।

## अनपत्येअणि ॥७।४।५५॥

अणि अन्त्यस्वरादेर्लुक् । ब्रह्मण इव ब्राह्मणम् । ब्रह्मण इय ब्राह्मी ओषधि । ब्राह्मम् अस्त्रं ।

## जातौ ॥७।४।५८॥

अनपत्य एवायं नियम्यते । तेन अवर्मेण इत्यादिनाऽपि न लुक् । ब्रह्मणोऽपत्य ब्राह्मण । जातावि्ति किम् ? ब्रह्मणोपत्य ब्राह्मोनारद ।

## उक्ष्णो लुक् ॥७।४।५६॥

अपत्येऽणि अन्त्यस्वरादेर्लुक् । औक्ष पदम् । उक्ष्णोऽपत्यमौक्ष्णः ।

## पादिहन्धृतराज्ञोऽणिषकारादेरनोहनः ॥२।१।११०॥

धृतराजभिन्नेभ्यो अकारस्याणि परे लुक्स्यात् । उक्ष्ण । तार्क्ष्णः । भौणाः । धार्तराज्ञः । पादीति किम् ? सामन । अण्येव । ताक्षण्यः ।

## कुलाख्यानाम् ॥२।४।७९॥

पुणिकमुणिकाद्या कुलाख्यास्तासामनार्ष वृद्धऽणिञन्तानामाेपान्तस्य ष्यादेशः स्यात् । पौणिक्या ।

## भोजसूतयोः क्षत्रियायुवत्योः ॥२।४।८१॥

एतयोरन्तस्य ष्यादेश । भोज्या भोजवंशजा क्षत्रिया । सूत्या मानुषीयमा मानुषी ।

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ॥२।४।८२॥

एषामिञन्तानां स्त्रियामन्तस्य ष्यादेशो वा । दैवयज्ञ्या दैवयज्ञी । इत्य पत्याधिकारः ।

विक्रमेण भुषिताक्रमभिणो
य करोति यतायर्मिन समान ।
सुरराजजननाम्बुजे रवि-
र्वीपयान्विजयमेऽग्रजः भिया ॥ १ ॥

## रागाट्टोरक्ते ॥६।२।१॥

रज्यतेऽनेनेति राग । तद्वाचिनाम्नस्तृतीयान्ताद्रक्ते अर्थे अण् । कुसुम्भेनरक्त वस्त्र कौसुम्भम् । कौङ्कुमम् । माञ्जिष्ठम् ।

## लाक्षारोचनादिकण् ॥४।२।२॥

लाक्षिकम् । नाण रौचनिकम् ।

## शकलकर्दमाद्वा ॥४।२।३॥

शाकलिकम् । पक्षेऽण् शाकलम् ।

## नीलपीतादकम् ॥४।२।४॥

अकञ्प्रत्ययो । प्रत्ययी स्यात् । नीलेन नील्या वा रक्तं नीलकम् । पीतेन रक्तं पीतकम् ।

## हरिद्रामहारजनाभ्यामञ् ॥

हारिद्रम् । माहारजनम् ।

## उदितगुरोर्भाद्युक्तेऽब्दे ॥४।२।५॥

उदितगुरुणा पुष्येण युक्तं वर्षं पौषम् ।

## चन्द्रयुक्तात्काले लुप्त्वप्रयुक्ते ॥४।२।६॥

काले चन्द्रयुक्तनक्षत्रवाचिनस्तृतीयान्ताद्युक्तेऽर्थेऽणादिः पुष्येण चन्द्रयुक्तेन विशिष्टं दिनं पौषम् । अप्रयुक्ते कालवाचके शब्दे लुप् स्यात् । यथाऽद्य पुष्यः ।

## द्वन्द्वादीयः ॥४।२।७॥

राधा चानुराधा चेति द्वन्द्वे राधानुराधीयमहः ।

## श्रवणाऽश्वत्थान्नाम्न्यः ॥४।२।८॥

श्रवणाश्वत्थाभ्यां नाम्नि । श्रवणेन चन्द्रयुक्तेन युक्ता श्रवणा रात्रिः । श्रवणो मुहूर्तः । अश्वत्थेन चन्द्रयुक्तेन युक्ताऽश्वत्था रात्रिः । अश्वत्थो मुहूर्तः । नाम्नीति किम् ? श्रावणी रात्रिः ।

## दृष्टे साम्नि नाम्नि ॥४।२।१३३॥

शुभ्रेण दृष्टं साम शौभ्रम् । अथाण् । कलिना दृष्टं कालेयम् । ढण् ।

## तेन च्छन्न रथे ॥४।२।१३१॥

वस्त्रेणाच्छन्नो रथो वास्त्रः ।

## पाण्डुकम्बलादिन् ॥४।२।१३२॥

पाण्डुकम्बलेन छन्नः पाण्डुकम्बली रथः । अपूर्वपतिं कुमारीं उपपन्नः कौमारः पतिः । तत्र भव इत्यण् ।

## तत्रोद्धृते पात्रेभ्यः ॥६।२।१३८॥

शरावे उद्धृत ओदनः शाराव ।

## स्थण्डिलाच्छेते व्रती ॥६।२।१३९॥

स्थण्डिले शयितुं नियमोऽस्य स्थाण्डिलो व्रती ।

## संस्कृते भक्ष्ये ॥६।२।१४०॥

भ्राष्ट्रे संस्कृता भ्राष्ट्रा ।

## शूलोखाद्यः ॥६।२।१४१॥

संस्कृते । शूले संस्कृतमष्टकं शूल्यः । मद्दमसमिह मोक्त शूलो विक्रय उच्यते । अट्टशूला जनपदा शिवशूलाश्चतुष्पथा इति ॥ १ ॥ शूल्यं शूलाकृत मांसमिति तु आमिष भोग्यवस्तुनि इति गौटषणात् । उख्यायां संस्कृतं उख्यम् ।

## दध्न इकणः ॥६।२।१४३॥

दध्नि संस्कृतं दाधिकम् ।

## वोदश्वितः ॥६।२।१४४॥

उदकेन श्वयति उदश्वित् । तत्र संस्कृतमौदश्वितम् । औदश्वित्कम् । इकण्यपेक्ष इकार लुप् ।

## क्षीरादेयण् ॥६।२।१४२॥

क्षीरे संस्कृता भक्षा क्षैरेयी यवागूः ।

## सास्य पौर्णमासी ॥६।२।९८॥

सेति प्रथमान्तादस्येति षष्ठ्यर्थेऽणादयः स्युः । प्रथमान्तं चेत्पौर्णमासीविशेषणं स्यात् नाम्नि । पौषी पौर्णमासी अस्य पौषो मासः । अण् ।

## आग्रहायण्यश्वत्थादिकण् ॥६।२।९९॥

नाम्नि । प्रत्ययान्तं चेन्नाम स्यात् । आग्रहायणिको मासः । अश्वत्थाऽश्विनी । तद्युक्ता पौर्णमासी अस्य आश्वत्थिको मासः । चैत्री कार्तिकी ।

## फाल्गुनीश्रवणाद्वा ॥६।२।१००॥

इकण् । चैत्रिकश्चैत्रो वा श्रवणाया श्रावणिकः श्रावणो वा ।

## देवता ॥६।२।१०१॥

साऽस्येत्यनुवृत्तावग्रार्यमणाव्य । जिनो देवताऽस्य जैन । शैव । बौद्ध ।
आग्नेयो ब्राह्मण । ऐन्द्र हवि ।

## कसोमात्ट्यण् ॥६।२।१०७॥

को ब्रह्मा देवताऽस्य काय हवि । श्रीर्देवताऽस्य श्रायम् । कःसोमतत्यण
दित्यात्कायी इष्टिः । सौमी भक्त ।

## शुक्रादियः ॥६।२।१०३॥

शुक्रो देवताऽस्य शुक्रियम् ।

## पैंगाक्षीपुत्रादेरीयः॥६।२।१०२॥

पिङ्गाक्षीपुत्रो देवताऽस्य पैङ्गाक्षीपुत्रीय हवि ।

## शतरुद्रात्तौ ॥६।२।१०४॥

इयईयश्च ॥ शतरुद्रीयम् । शतरुद्रियम् ।

## महेन्द्राद्वा ॥६।२।१०६॥

एतौ । महेन्द्रीयम् । माहेन्द्रियम् । शतरुद्रादनयोर्द्विगावपि विधानसाम
र्थ्यान्न लुप् ।

## वाय्वृतपित्रुषसो यः ॥६।२।१०९॥

वायव्यम् ।

## ऋतोरस्ताद्धिते ॥१।२।२६॥

पित्र्यम् ।

## द्यावापृथिवीशुनासीराग्नीषोममरुत्वद्वास्तोष्प-
## तिगृहमेधादीययौ ॥६।२।१०८॥

अणोऽपवाद । द्यौश्च पृथिवी च द्यावापृथिवीयम् । द्यावा
पृथिव्यम् ।

## महाराजप्रोष्ठपदादिकण् ॥६।२।११०॥

माण । माहाराजिक । माहाराजिकी ।

## कालाद्भववत् ॥६।२।१११॥

यथा मासे भव मासिकम् । तथा मासो देवताऽस्य मासिक देवता मासा
दावी देवताधर्मा जम्ब्रामामास्यादी विषय पूर्वोत्तरपदयोरादे स्वरस्य वृद्धि
र्णिति तद्धिते । आग्निमारुत कर्म ।

## आतो नेन्द्रवरुणस्य ॥७।४।२९॥

आकारान्तात्परस्य इन्द्रस्य वरुणस्य चोत्तरपदस्य स्वरेष्वाद्ये स्वरस्य न वृद्धिः स्यात्। अग्निश्चेन्द्रश्च अग्नेन्द्रौ। तौ देवताऽस्य आग्नेन्द्रं सूक्तम्। सौमेन्द्रं हविः। परस्येति किम्? ऐन्द्राग्नो यज्ञः। ऐन्द्रावरुणं पौर्णमासीतिनिपातनाद्वृद्धिः। पूर्णमासा चन्द्रेण युक्ता पौर्णमासी तिथिः।

## पितृमातुर्व्यडुल भ्रातरि ॥६।२।६२॥

पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः।

## पित्रोर्डामहट् ॥६।२।६३॥

पितुः पिता पितामहः। मातुर्माता मातामही।

## षष्ठ्याः समूहे ॥६।२।९॥

अणादिः। चापानां समूहश्चापम्।

## भिक्षादेः ॥६।२।१०॥

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्।

## अनपत्ये ॥७।४।५५॥

अणि परेऽन्त्यस्वरादेर्न लुक्। युवतीनां समूहो यौवतम्। यौवनमित्यन्यः। शब्दन्तादर्मिन्।

## गोत्रोक्षवत्सोष्ट्रवृद्धाजोरभ्रमनुष्यराजन्यराज-पुत्रादकञ् ॥६।२।१२॥

स्वापत्यसन्तानस्य व्यपदेशकारिणः प्रथमपुरुषस्यापत्यं गोत्रं गोत्रप्रत्ययान्तेभ्य उक्षादिभ्यः समूहेऽकञ् स्यात्। औपगवानां समूह औपगवकम्। गार्गकम्। वार्द्धकम्। मानुष्यम्।

## न राजन्यमनुष्ययोः ॥२।४।९४॥

अके न यकारलुक्। राजन्यकम्।

## केदाराण्यश्च ॥६।२।१३॥

चादकञ्। कैदार्यम्। कैदारिकम्।

## गणिकाया ण्यः ॥६।२।१७॥

गाणिक्यम्।

कवचिहस्त्यचित्ताच्चेकण् ॥६।२।१४॥

कावचिकम् । हास्तिकम् । हस्तिनां हस्तिनीनां वा समूहः । आपूपिकम् ।

ब्राह्मणमाणववाडवाद्यः ॥६।२।१६॥

ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।

पृष्ठाच्च ॥६।२।२२॥

पृष्ठ्यः पृष्ठशब्दोऽहःपर्यायः । पृष्ठ्यः क्रतुः ।

ग्रामबन्धुगजसहायात्तल् ॥६।२।२८॥

ग्रामाणां समूहो ग्रामता । जनता । बन्धुता । तान्त नित्यं स्त्रियाम् ।

धेनोरनञः ॥६।२।१५॥

धेनूनां समूहो धैनुकम् । अनञ इति किम् ? अधेनूनां समूहः आधैनवम् ।

उत्सादेरञ् ॥६।१।१९॥

केशाद्वा ॥६।२।१८॥

यः । केशानां समूहः कैश्यम् । कैशिकम् ।

वाऽश्वादीयः ॥६।२।१९॥

आश्वीयम् । आश्वम् ।

पर्श्वा ह्वण् ॥६।२।२०॥

पर्शुशब्दात्समूहेऽर्थे ह्वण् स्यादिकण् । पर्शूनां समूहः पार्श्वम् । विशेषा-न्ससारलुक् ।

ईनोऽह्नः क्रतौ ॥६।२।२१॥

अह्नां समूहः आह्नीनः क्रतुः । आह्नमन्यत् ।

पाशादेश्च ल्यः ॥६।२।२५॥

पाशानां समूहः पाश्या । तृण्या । खल्या । गव्या । रथ्या । वात्या ।

गोरथवातात्त्रल्कट्यलूलम् ॥६।२।२४॥

गवां समूहो गोत्रा । रथकट्या । वातानां समूहो वातूलः ।

श्वादिभ्योऽञ् ॥६।२।२६॥

शुनां समूहः शौवम् ।

## खलादिभ्यो लिन् ॥६।२।२७॥

खलानां समूहः खलिनी । डाकिनी । कुटुम्बिनी । आकृतिगणः ।

## अवेर्दुग्धे सोढदूसमरीसम् ॥६।२।६४॥

अवेर्दुग्धमविसोढम् । अविदूसम् । अविमरीसम् ।

## राष्ट्रेऽनङ्गादिभ्यः ॥६।२।६५॥

देशे वाच्ये षष्ठ्यन्तादङ्गादिवर्जेभ्योऽण् स्यात् । शिबीनां देशः शैबः ।

## राजन्यादिभ्योऽकञ् ॥६।२।६६॥

राजन्यानां देशो राजन्यकम् ।

## वसातेर्वा ॥६।२।६७॥

वासातकम् । पक्षे वासातम् ।

## भौरिक्यैषुकार्यादेर्विधभक्तम् ॥६।२।६८॥

भौरिक इत्येवमादिभ्यः ऐषुकारि इत्येवमादिभ्यश्च देशे वाच्ये क्रमाद्विध भक्तौ स्याताम् । माण् । भौरिकिविधम् राष्ट्रम् । ऐषुकारिभक्तम् ।

## आदेश्छन्दसः प्रगाथे ॥६।२।११२॥

अनुष्टुबादिरस्येति आनुष्टुभः । मध्ये मध्यविशेषपस्तार्ये त्रिष्टुबेव त्रैष्टुभम् ।

## योद्धृप्रयोजनाद्युद्धे ॥६।२।११३॥

अणादिः । विद्याधरा योद्धारोऽस्य युद्धस्येति वैद्याधरं युद्धम् । प्रयोजना दपि, सुभद्रा प्रयोजनमस्य युद्धस्य सौभद्रं युद्धम् ।

## प्रहरणात्क्रीडायां णः ॥६।२।११६॥

दण्डः प्रहरणमस्यां दाण्डा क्रियेत्यर्थः ।

## तद्वेत्त्यधीते ॥६।२।११७॥

व्याकरणमधीते वेत्ति वा वैयाकरणः ।

## न्यायादेरिकण् ॥६।२।११८॥

न्यायं वेत्त्यधीते वा नैयायिकः ।

## पदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकात् ॥६।२।११९॥

इकण् तद्वेत्त्यधीते वेत्यर्थे । पदान्ते, पौर्वपदिकः । कल्पान्ते, पैतृकल्पिकः । लक्षणान्ते गौलक्षणिकः ।

## अकल्पात्सूत्रात् ॥६।२।१२०॥

वृत्तिसूत्रं वेत्ति वार्त्तिसूत्रिकः । अकल्पादिति किम्? सौत्रः । काल्पसौत्रः ।

## अधर्मक्षत्रत्रिसंसर्गाङ्गाद्विद्यायाः ॥६।२।१२१॥

धर्मादिवर्जं विद्याशब्दान्तात्तद्वेत्त्यधीते वेत्यर्थे इकण् स्यात् । सार्पविद्यिकः । अधर्मादेरिति किम्? वैद्यः । क्षात्रविद्यः । त्रिविद्यां वेत्ति वा त्रैविद्यः ।

## ससर्वपूर्वाल्लुक् ॥६।२।१२७॥

सवार्तिकमधीते सवार्तिकः । ससङ्ग्रहः । अत्राणो लुप् । सकल्पः । अत्रे कणो लुप् । एवं सर्ववेदः । सर्वतन्त्रः । अत्राण् । कथं द्विवेदः? द्विगोरनपत्ये यस्वरादेर्लुक् भविष्यति ।

## पदोत्तरपदेभ्य इकः ॥६।२।१२५॥

तद्वेत्त्यधीतेऽर्थे । पूर्वपदिकः ।

## पदक्रमशिक्षामीमांसासाम्नोऽकः ॥६।२।१२६॥

पदं वेत्ति पदकः । एवं क्रमकः । शिक्षकः । मीमांसकः ।

## अनुब्राह्मणादिन् ॥६।२।१२३॥

ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम् । तदधीतेऽनुब्राह्मणी । अनुब्राह्मणिनौ । अण्बाधनार्थमिदम् ।

## सङ्ख्याकात्सूत्रे ॥६।२।१२८॥

सङ्ख्यायाः परो यः प्रत्ययः कस्तदन्तात्तद्वेत्त्यधीतेऽर्थे उत्पन्नस्याणो लुप् । अष्टा-ध्यायाः परिमाणमस्य अष्टकं सूत्रम् । तद्विदन्त्यधीयते वा अष्टकाः पाणिनीयाः । द्वादशा आर्हताः ।

## गाथिविदथिकेशिपणिगणिनः ॥७।४।३४॥

पृषोदरादित्वात् पाणिन इति। अन्यस्वरादेर्न लुक्। पणनं पणः। सोऽस्यास्तीति पणी। तस्य वृद्धापत्यं पाणिनः। ततो यूनि इञ्। पाणिनिः। अत्रभिन्नार्थापत्यणिञोरिश्य मेन न इञो लुप्। तत्र मत्वणो ग्रहात्प्रोक्तात् प्रोक्तार्थप्रत्ययान्ताज्ञाञ्जो येस्य पीत इत्यर्थे उत्पन्नस्य प्रत्ययस्य लुप्स्यात्। पाणिनिना प्रोक्तं पाणिनीयम्। वोरीय।

## तदत्रास्ति ॥४।२।७०॥

अस्मिन्नर्थेऽणादिः। उदुम्बराः सन्त्यस्मिन्नौदुम्बरो देशः।

## तेन निर्वृत्ते च ॥४।२।७१॥

चकारादुत्तरत्र चातुरर्थिकप्रत्ययविधानम्। कुशाम्बेन निर्वृत्ता कौशाम्बी।

## निवासादूरभवे इति देशे नाम्नि ॥४।२।६९॥

षष्ठ्यन्तान्नाम्नो निवासोऽदूरभव इत्यनयोरर्थयोरणादिः। शिबीनां निवासः शैवः। विदिशाया अदूरभवं वैदिशं नगरम्। वैदिशो जनपदः। वरणा च असिश्च वरणासी तयोरदूरभवा वाराणसी। पृषोदरादित्वाद्ह्रस्य दीर्घः। णस्य ह्रस्वः। ललितकस्य पर्वतस्य दूरभवानि वनानि इतिदेशनामैव तादृक् नाऽत्र प्रत्ययः। नापि लुपलिङ्गसङ्ख्ये अपि प्रसिद्धे एव।

## नद्यां मतुः ॥४।२।७२॥

तस्य निवासः तस्यादूरभवः तदत्रास्ति तेन निर्वृत्त चेत्यर्थचतुष्टये यथार्हं मतुः स्यात् नद्यां देशे नाम्नि। प्रत्ययान्तं चेन्नदीविषयं देशस्य नाम स्यात्। नदीनामेत्यर्थः। नाण्। उदुम्बराः अस्यां सन्त्युदुम्बरावती नदी। भगीरथेन निर्वृत्ता भागीरथी।

## मध्वादेः ॥४।२।७३॥

चातुरर्थिको मतुः। देशे नाम्नि प्रत्ययान्तं चेद्देशस्य नाम स्यात्। अनद्यर्थं वचनम्। मधुमान् देशः।

## नडकुमुदवेतसमहिषाड्डिन्मतुः ॥४।२।७४॥

नड्वान्। कुमुद्वान्। वेतस्वान्। महिष्मान् देशः।

## नडशादाड्ड्वलः ॥४।२।७५॥

प्राग्वत्। नड्वलम्। शाद्वलम्।

## शिखायाः ॥४।२।७६॥

प्राग्वत्। शिखावलं नगरम्।

## शिरीपादिककणौ ॥६।२।७७॥

शिरीपाणामदूरभवो ग्रामः शिरीपकः । शैरीपकः ।

## शर्कराया इकणीयाण् च ॥६।२।७८॥

चात् इककणावपि । शर्करा अस्मिन्देशे सन्ति शार्करिकः । शार्करीयः । शार्करः । शर्करिकः । शार्करकः । शिरीपाः शर्कराश्चेदेशवृत्तयः एवेति न पूर्ववत् चातुरर्थिकत्वं देशनामत्वस्यात् ।

## रोऽश्मादेः ॥६।२।७९॥

अश्मरः । यूषरः ।

## प्रेक्षादेरिन् ॥६।२।८०॥

प्रेक्षी । फलकी ।

## तृणादेः सल् ॥६।२।८१॥

तृणसा । नडसा ।

## काशादेरिलः ॥६।२।८२॥

काशिलम् । वाशिलम् ।

## अरीहणादेरकण् ॥६।२।८३॥

आरीहणकम् । द्राुघणकम् ।

## सुपन्थ्यादेर्ञ्यः ॥६।२।८४॥

सौपन्थ्यम् ।

## सुतङ्गमादेरिञ् ॥६।२।८५॥

सौतङ्गमिः । मौमचितिः ।

## बलादेर्यः ॥६।२।८६॥

बल्यम् ।

## अहरादिभ्योऽञ् ॥६।२।८७॥

आह्नम् । लौमम् । तेन निर्वृत्तमित्यर्थे कालकणश्चापवादोऽयम् ।

## सख्यादेरेयण् ॥६।२।८८॥

साखेयः । साखिदत्तयः ।

## पन्थ्यादेरायनण् ॥६।२।८९॥

देशे नाम्नि । पान्थायनम् । नागमोऽतएव निपातनात् ।

## नडादेः कीयः ॥६।२।९२॥

नडकीयः ।

## कृशाश्वादेरीयण् ॥६।२।९३॥

कार्शाश्वीयः । आरिष्टीयः ।

## ऋश्यादेः कः ॥६।२।९४॥

ऋश्यकः । न्यग्रोधकः ।

## वाराहादेः कण् ॥६।२।९५॥

वाराहकम् । पालाशकम् ।

## कुमुदादेरिकः ॥६।२।९६॥

कुमुदिकम् । बिल्वजिकम् ।

## अश्वत्थादेरिकण् ॥६।२।९७॥

आश्वत्थिकम् । कौमुदिकम् । इति चातुरर्थिकाः ॥

## विकारे ॥६।२।३०॥

पञ्चम्यन्तादणादयः ।

## पुरुषात्कृतहितवधविकारे चैयञ् ॥६।२।२९॥

चात्समूहेऽपि । पुरुषेण कृतः पौरुषेयो ग्रन्थः । पुरुषाय हितं पौरुषेयम् । जिनशासनम् । पौरुषेयो विकारः । समूहे, पौरुषेयम् । अश्मनो विकारः आश्मनः । आश्मं वा । अश्मनो विकारेऽन्त्यस्वरादिलुक् । मृत्तिः मृत्तिका मार्त्तिकः । मर्दस्यार्द्रं ।

## प्राण्योषधिवृक्षेभ्योऽवयवे च ॥६।२।३१॥

अणादयः । कापोतम् । मायूरम् सक्थि ।

## तालाद्धनुषि ॥६।२।३२॥

विकारेऽण् । तालं धनुः ।

## त्रपुजतोः षोऽन्तश्च ॥६।२।३३॥

त्रपुणो विकारः त्रापुषम् । जतुनो विकारो जातुषम् ।

## शम्या लः ॥६।२।३४॥

विकारेऽवयवे चाण् स्यात्। तद्योगे लोऽन्तः। शम्या विकारोऽवयवः शामीलं भस्म। शामीली शाखा।

## पयोद्रोर्यः ॥६।२।३५॥

पयसो विकारः पयस्यम्। द्रोर्वाकणो विकारो द्रव्यम्।

## उष्ट्रादकञ् ॥६।२।३६॥

औष्ट्रिका जङ्घा।

## उमोर्णाद्वा ॥६।२।३७॥

उमातसी औमकम् औमम्। ऊर्णाया विकार और्णकः और्णः कम्बलः।

## एण्या एयञ् ॥६।२।३८॥

ऐणेयं सूथम्। ऐणेयी दृक्। स्त्रीलिङ्गनिर्देशात्पुंलिङ्गादेणाच्च। ऐणं स्थलम्। एणेकृति।

## कौशेयम् ॥६।२।३९॥

निपातोऽयम्। मल सूत्र वा, न तु भस्मनि।

## परशव्याद्यलुक् च ॥६।२।४०॥

परशवे इदं परशव्यम्। तस्माद्विकारेऽण्। यकारस्य लुक्। परशव्यस्या यसो विकारः पारशवम्। अणसिद्ध एव। यकारलुगर्थं वचनम्। अपेह यग्रहण किमर्थम्। तदभावेऽपि अपर्णेवर्णस्यस्यान्तलुगिति सौ लुग्ग्रहणादस्याभावेऽप्यस देशात्यापि यकारस्य लुगस्तु। सत्यम्। यग्रहण यशब्दसमुदायस्यैव लोपार्थम्। तेनोत्तरपदे स्वरस्य परे प्राप्तिवाधितस्यानुपस्यामायकारलोपेऽवर्णस्येति कार लोपः स्यात्।

## कसीयाञ्ञ्य. ॥६।२।४१॥

कंसायद कसीयम्। तस्यापि विकारे कांस्यम्। ञ्यप्रत्ययः। तद्योगे यलुक् च।

## हेमार्थान्माने ॥६।२।४२॥

अण्। हाटकस्य विकारो हाटको निष्कः। अत्रार्थग्रहणाद्धेमाण्। हैमो निष्कः। अत्र परत्वाद्धेमादिभ्यश्‍चणोऽस्य।

## द्रोर्वय ॥६।२।४३॥

द्रोर्विकारो द्रुवयम् मानम्।

## मानात्क्रीतवत् ॥६।२।४४॥

मानात्क्रीतवत्प्रत्ययः। शतेन क्रीतं शत्यम्। शतिकम्। तथा शतस्य विकारः शत्यः शतिकः।

## हेमादिभ्योऽञ् ॥६।२।४५॥

हेम्नो विकारो हैमम् पीठम्। हैमी यष्टिः।

## अभक्ष्याच्छादने वा मयट् ॥६।२।४६॥

भस्मनो विकारो भस्ममयम्। भास्मनं वा। दूर्वामयम्। दौर्वम्।

## शरदर्भकूदीतृणसोमवल्वजात् ॥६।२।४७॥

एभ्यो भक्ष्याच्छादनवर्जे विकारेऽवयवे च नित्यं मयट् स्यात्। नाण्। शरमयम्। दर्भमयम्। तथा—

## एकस्वरात् ॥६।२।४८॥

प्राग्वत्। वाङ्मयम्। त्वङ्मयम्। गीर्मयम्। स्रुङ्मयम्।

## दोरप्राणिनः ॥६।२।४९॥

द्रुसञ्ज्ञकान्मयट् प्राग्वत्। नाण्। आम्रमयम्। तन्मयम्।

## गोः पुरीषे ॥६।२।५०॥

गोमयम्। अन्यत्र गव्यम् पयः।

## व्रीहेः पुरोडाशे ॥६।२।५१॥

विकारे नित्यं मयट्। नाण्। व्रीहिमयः पुरोडाशः।

## तिलयवादनाम्नि ॥६।२।५२॥

तिलमयम्। नाम्नि तैलम्। यवानां विकारो यावः। स एव यावकः।

## पिष्टात् ॥६।२।५३॥

पिष्टमयम्।

## नाम्नि कः ॥६।२।५४॥

पिष्टस्य विकारः पिष्टिका।

## ह्योगोदोहादीनञ् हियङ्गुश्चास्य ॥६।२।५५॥

अस्माद्विकारे ईनञ् तद्योगे हियङ्गुः प्रकृतेरादेशः। ह्योगोदोहस्य विकारो हैयङ्गवीनम्। नवनीतं घृतं वा।

## अपो यञ्वा ॥६।२।५६॥

विकारे । अपां विकारः आप्यम् । अम्मयम् वा ।

## लुब्बहुलं पुष्पमूले ॥६।२।५७॥

मल्लिकाया विकारोऽवयवो वा पुष्पं मल्लिका । एष्वणो मयटो वा लुपि ।

## ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणी-
## सूच्योः ॥२।४।९५॥

ङ्यादेः प्रत्ययस्य गौणस्याक्विबन्तस्य तद्धितलुकि सति लुक्स्यात् । गोणीसूचीवर्ज्यपोस्तु न लुक् । आमलक्याः फलमामलकम् । बदर्या बदरम् ।

## प्लक्षादेरण् ॥६।२।५९॥

विकारेऽवयवे वा । विधानसामर्थ्यान्नास्य लुप् । प्लक्षस्य विकारोऽवयवो वा प्लाक्षम् । नैयग्रोधम् ।

## जम्ब्वा वा ॥६।२।६०॥

जाम्बवम् । पक्षे जम्बु ।

## न द्विरद्रुवयगोमयफलात् ॥६।२।६१॥

द्रुवय गोमय फलवाचि च वर्जमन्यस्माद्द्व्यचो विकारावयवयोर्द्विः प्रत्ययो न स्यात् । कपोतस्य विकारोऽवयवो वा कापोतं । कापोतस्य विकारोऽवयवो वेति वोरमाणिम इति मयट् न स्यात् ।

इति प्रकीर्णकप्रत्ययाधिकारः ।

---

जितो न केनाप्यरिणान्तरेण यः,
क्षमा समा येन वशीकृतारिणं ।
सुवर्णनेऽतिप्रियताम्रुपयुषा,
सोऽर्हंस्तरं स्यामरसिद्धिसम्पदे ॥ १ ॥

## शेषे ॥६।३।१॥

अपत्यादिविकारान्तः प्राग्जितोऽर्थस्ततोऽन्यः शेषस्तत्राणादिः स्यात् ।

## पारावारादीन ॥६।३।८॥

शेषे । पारावारे भवो जातो वा पारावारीणः ।

## व्यस्तव्यत्यस्तात् ॥६।३।७॥

अवारपारीणः । व्यस्तादपि पारीणः । अवारीणः ।

## राष्ट्रादियः ॥६।३।३॥

राष्ट्रे क्रीतः, कुशलो, जातो, भवो वा राष्ट्रियः । अन्यत्र राष्ट्रस्यापत्यं राष्ट्रिः ।

## ग्रामादीनञ्च ॥६।३।९॥

ग्रामीणः । ग्राम्यः । ग्राम्यः ।

## कत्र्यादेश्चैयकञ् ॥६।३।१०॥

कुत्सितास्त्रयः कत्रयः । तत्र जातादिः कात्रेयकः । ग्रामेयकः ।

## कुलकुक्षिग्रीवाच्छ्वाऽस्यलङ्कारे ॥६।३।१२॥

कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्यः । ग्रैवेयको भूषणम् । ग्रैवमन्यत् ।

## नद्यादेरेयण् ॥६।३।२॥

प्राग्जितीये शेषे जातादौ । नादेयः । माहेयः । वाराणसेयः ।

## दक्षिणापश्चात्पुरसस्त्यण् ॥६।३।१३॥

नाप्र् । दक्षिणस्यां जातो दाक्षिणात्यः । या दक्षिणात्ययमेत्यादिनाऽव्ययान्त स्यत् ।

## रङ्कोः प्राणिनि वा ॥६।३।१५॥

शेषेऽर्थे टायनण् । राङ्कवायणः । पक्षेऽण् । राङ्कवः । गौः । प्राणिनीति किम् ? राङ्कवः कम्बलः । मनुष्ये [illegible] कच्छादिपाठात्राङ्कवो मनुष्यः ।

## वह्वयुर्दिपर्दिकापिश्याष्टायनण् ॥६।३।१४॥

वाह्वायनः । और्दायनः । पार्दायनः । कापिशायिनी द्राक्षा ।

## द्युप्रागपागुदक्प्रतीचो यः ॥६।३।८॥

अव्ययेभ्योऽनव्ययेभ्यश्च शेषे । दिवि भवं दिव्यम् । प्राच्यम् । अपाच्यम् ।

## दूरादेत्यः ॥६।३।४॥

दूरे भवो दूरेत्यः ।

## उत्तरादाहञ् ॥६।३।१५॥

औत्तराहः पुरुषः । औत्तराही स्त्री । औत्तराहीति उत्तराहिशब्दादपि षेऽणि ।

## कन्थाया इकण् ॥६।३।२०॥

कान्थिकः । कन्था नाम ग्रामः ।

## वर्णावकञ् ॥६।३।२१॥

वर्णुर्नदः । तत्पार्श्वे देशोऽपि वर्णुस्तद्विषयार्थकन्थाशब्दात्कान्थकः ।

## केहामात्रतसस्त्यच् ॥६।३।१६॥

क्वत्यः । इहत्यः । अमात्यः । तत्रत्यः । ततस्त्यः ।

## नेर्ध्रुवे ॥६।३।१७॥

त्यच् । नित्यम् ।

## निसो गते ॥६।३।१८॥

निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालः ।

## ह्रस्वान्नाम्नस्ति ॥२।३।३४॥

नाम्नो विहिते तादौ परे ह्रस्वान्नाम्नः परस्य सः षः स्यात् ।

## रूप्योत्तरपदारण्याण्णः ॥६।३।२२॥

वार्करूप्यः । आरण्याः सुमनसः ।

## ऐषमोह्यःश्वसो वा ॥६।३।१९॥

शेषेऽर्थे त्यच् । ऐषमस्त्यम् । ह्यस्त्यम् । पक्षे ।

## सायचिरप्राह्णेप्रगेऽव्ययात् ॥६।३।८८॥

एभ्योऽव्ययेभ्यश्च कालेऽर्थे शेषे तनट् । ऐषमस्तनम् । ह्यस्तनम् ।

## श्वस्तादिः ॥६।३।८४॥

कालबाधिनः शेषे तकारादिरिकण् स्यात् । शौवस्तिकः ।

## दिक्पूर्वादनाम्नः ॥६।३।२३॥

शेषेऽर्थेऽण् नाम्नि । नतु णः । पौर्वशालम् ।

## मद्रादञ् ॥६।३।२४॥

पूर्वेषु मद्रेषु भवः पौर्वमद्रः ।

## शकलादेर्यञः ॥६।३।२७॥

यञन्तेभ्यः शकलादिभ्यः शेषेऽञ् स्यात्। शाकलस्य वृद्धापत्यं शाकल्यः। तस्य च्छात्राः शाकलः। एवं काण्वाः।

## वृद्धे ञः ॥६।३।२८॥

दक्षस्य वृद्धापत्यं दाक्षिः। तस्य च्छात्रा दाक्षाः।

## भवतोरिकणीयसौ ॥६।३।३०॥

शेषे। भवतो भवत्या इदं भावत्कम्। भावत्की। भवदीयाः। उकारान्त-भवच्छब्दादेः। भवत इदं भावतम्।

## परजनराज्ञोऽकीयः ॥६।३।३१॥

परकीयः। जनकीयः। राजकीयः। स्वकीयमिति गहादित्वादीये।

## दोरीयः ॥६।३।३२॥

शेषे। देवदत्तीयः। तदीयः। गार्गीयः। गोनर्दीयः।

## काश्यादेः ॥६।३।३५॥

णिकेकणौ स्तः। काशिकः। काशिका। काशिकी।

## वोशीनरेषु ॥६।३।३७॥

सौदर्शनीकः। सौदर्शनिका। सौदर्शनीयः।

## उवर्णादिकण् ॥६।३।३९॥

उवर्णान्ताद्देशवाचिनः शेषे इकण्। नाण्। शबरजम्ब्वां भवः शाम्बर जाम्बुकः। एतच्छामा भामः।

## ईतोऽकञ् ॥६।३।४१॥

ईकारान्तात्प्राग्देशवाचिनो बुसञ्ज्ञकाच्छेषेऽकञ्। काकन्द्यां भवः काकन्दकः।

## प्रस्थपुरवहान्तयोपान्त्यधन्वार्थात् ॥६।३।४३॥

देशवाचिनो दोः शेषेऽकञ्। मालाप्रस्थकः। नान्दीपुरकः। फाल्गुनीवहकः। सांकाश्यकः। पारे धन्वनि भवः पारेधन्वकः।

## रोपान्त्यात् ॥६।३।४२॥

प्राग्देशवाचिनो दोः शेषेऽकञ्। पाटलिपुत्रकः। ईयस्यापवादः।

## बहुविषयेभ्यः ॥६।३।४५॥

देशेभ्यो बहुवचनविषयेभ्यः शेषेऽकञ् । भाषादिः । अङ्गेषु जात आङ्गकः । वाङ्गकः ।

## धूमादेः ॥६।३।४६॥

देशवाचिनोऽस्मादकञ् । धौमकः । तैर्थकः । अदेशार्थेऽपि धूमादिपाठाद्देशानां क्षत्रियाणामिदं वैदेहकम् ।

## समुद्रान्नृनावोः ॥६।३।४८॥

शेषे । सामुद्रको मनुष्यः । सामुद्रिका नौः ।

## नगरात्कुत्सादाक्ष्ये ॥६।३।४९॥

केनाप मुषित इह नगरे मनुष्येण इतिवचने सम्भाषणे एतन्मोषणं नागरके निवेषम् । केनेदं चित्रं लिखितमिह नगरे मनुष्येणेतिवचने सम्भाष्यते एत नागरके । दक्षा हि तत्र ते ।

## अरण्यात्पथिन्यायाध्यायेभनरविहारे ॥६।३।५१॥

पथ्यादौ वाच्येऽकञ् । आरण्यकः पन्थाः न्यायोऽध्यायः इभो नरो विहारो वा ।

## गोमये वा ॥६।३।५२॥

आरण्यका गोमयाः । आरण्यानि वा गोमयानि ।

## कुरुयुगन्धराद्वा ॥६।३।५३॥

कुरुषु भवः कौरवकः । कौरवो वा ।

## कच्छादेर्नृनृस्थे ॥६।३।५५॥

अकञ् । काच्छको जनः । काच्छकमस्य हसितम् ।

## कोपान्त्याच्चाण् ॥६।३।५६॥

इक्ष्वाकुषु जात ऐक्ष्वाकः ।

## पर्वतात् ॥६।३।६०॥

ईयः । पर्वतीयो राजा ।

## अनरे वा ॥६।३।६१॥

पर्वतीयानि पार्वतानि फलानि । पक्षेऽण् । पार्वतायमि ।

## गहादिभ्यः ॥६।३।६३॥

गहादिभ्यो यथायोग्यदेशवाचिनः शेषे ईयः स्यात्। अणाद्यपवादः। गहीयः। न्तस्थीयः। मुसतीयः। पार्श्वतीयः।

## पृथिवीमध्यान्मध्यमश्चास्य ॥६।३।६४॥

देशवाच्य ईयः। प्रकृतेर्मध्यमादेशश्च। पृथिवीमध्ये जातो भवो वा मध्य ीयः।

## वा युष्मदस्मदोऽञीनञौ युष्माकास्माक चास्यैकत्वे तु तवकममकम् ॥६।३।६७॥

युष्माकं युवयोर्वा यौष्माकः। यौष्माकीणः। अस्माकमावयोर्वा आस्माकः। ास्माकीनः। पक्षे दोरीयः। युष्मदीयः। अस्मदीयः। तवायं तावकः। ताव-ीनः। मामकः। मामकीनः। पक्षे त्यदादित्वेन दुसंज्ञकत्वादीयः। त्वदीयः। दीयः।

## द्वीपादनुसमुद्र ण्यः ॥६।३।६८॥

समुद्रसमीपे द्वीपवाचिनः शेषेऽर्थे ण्यः स्यात्। द्वैप्यो मनुष्यः। द्वैप्यमस्य हसितम्। अन्यत्र नदीसमीपे द्वैपको व्यासः। द्वैपकमस्य हसितम् द्वैपम्।

## अर्द्धाद्यः ॥६।३।६९॥

अर्द्ध्यम्।

## सपूर्वादिकण् ॥६।३।७०॥

पौष्करार्द्धिकः। यौवनार्द्धिकः।

## दिक्पूर्वात्तौ ॥६।३।७१॥

येकणौ। पूर्वार्द्ध्यम्। पौर्वार्द्धिकम्।

## ग्रामराष्ट्रांशादणिकणौ ॥६।३।७२॥

पूर्वार्द्धे भवः पौर्वार्द्धः। पौर्वार्द्धिकः।

## मध्यान्मः ॥६।३।७६॥

मध्ये जातो भवो वा मध्यमः।

## पश्चादाद्यन्ताग्रादिमः ॥६।३।७५॥

पश्चिमः। मध्याद्यपवादन्त्यस्वरादिलोपः। आदिमः। अन्तिमः। अग्रिमः।

## मध्ये उत्कर्षापकर्षयोरः ॥६।३।७७॥

उत्कर्षापकर्षयोर्मध्ये वर्तमानमध्यशब्दाच्छेषेऽप्रत्ययः स्यात् । मध्यपरिमाणो मध्यः पण्डितः । मध्या गुणा । मध्या स्त्री ।

## अध्यात्मादिभ्य इकण् ॥६।३।७८॥

अध्यात्मं भवमाध्यात्मिकम् ।

## समानपूर्वलोकोत्तरपदात् ॥६।३।७९॥

समानग्रामे कृतो भवो वा सामानग्रामिकः । ऐहलौकिकः । पारलौकिकः ।

## वर्षाकालेभ्यः ॥६।३।८०॥

वर्षाशब्दात्कालवाचिभ्यश्च शेषे इकण् स्यात् । अणोऽपवादः । वर्षासु भवो वार्षिकः । मासिकः । आर्धमासिकः । सांवत्सरिकः । आह्निकः । दैवसिकः । नैशिकः । प्रादोषिकः ।

## शरदः श्राद्धे कर्मणि ॥६।३।८१॥

शेषेऽर्थे इकण् । शारदिकं श्राद्धं कर्म । अन्यत्र शारदो मेघः ।

## नवा रोगातपे ॥६।३।८२॥

शारदिकः शारदो वा रोगः । एवमातपः । अन्यत्र शारदं दधि ।

## निशाप्रदोषात् ॥६।३।८३॥

इकण् । नैशिकः । नैशः । प्रादोषिकः । प्रादोषः ।

## चिरपरुत्परारेस्त्नः ॥६।३।८५॥

त्नप्रत्ययः । चिरत्नम् । परुत्नम् । पक्षे सायमित्यादिना तनट् । चिरन्तनम् ।

## पुरो न ॥६।३।८६॥

पुरा भवं पुराणम् । पुरातनम् ।

## पूर्वाह्णपराह्णात्तनट् ॥६।३।८७॥

पूर्वाह्णे जातो भवो वा पूर्वाह्णेतनः । कालात्तनतरेत्यादिना सप्तम्या वाऽलुप् । पक्षे पौर्वाह्णिकः ।

## सायंचिरंप्राह्णेप्रगेऽव्ययात् ॥६।३।८८॥

नित्यं तनट् । सायन्तनम् । चिरन्तनम् । निर्देशादेवमान्तत्वं निपातनात् । प्राह्णेतनम् । प्रगेतनम् । अनयोरेदन्तत्वं च । दिवातनम् । पुनस्तनम् । प्रातस्तनम् ।

## भर्तुसन्ध्यादेरण् ॥६।३।८९॥

नक्षत्रनाम्न ऋतुनाम्नः सन्ध्यादिकालनाम्नश्च शेषेऽण्। मेकण् । पुष्येण च प्रयुक्तेन युक्तः कालः पुष्यः। पुष्ये भवः पौषः। रौहिणः । स्वातौ सौवातः। ग्रैष्मः। वासन्तः। आमावस्यः। स्वातेरव्ययस्यान स्वातीयम् । राधीयम्। शाश्वच्छब्दादिकणपि। शाश्वतम्। शाश्वतिकम्।

## संवत्सरात्फलपर्वणोः ॥६।३।९०॥

अण्। सांवत्सरं फलम्। सांवत्सरं पर्व।

## हेमन्ताद्वा तलुक् च ॥६।३।९१॥

अण् सन्नियोगे। हैमनम्। हैमन्तम्। हैमन्तिकम्। तवन्तविधिना पूर्वहैमनम्। अंशादृतोरित्युत्तरपदवृद्धिः।

## प्रावृष एण्यः ॥६।३।९२॥

प्रावृषि भवः प्रावृषेण्यः। प्रावृषि जातः प्रावृषिकः।

## स्थामाजिनान्ताल्लुप् ॥६।३।९३॥

एतदन्ताच्छैषिकप्रत्ययस्य लुप्। अश्वत्थामनि जातो भवो वा अश्वत्थामा। अः स्थाम्न इत्यप्रत्ययस्तस्य लुप्। सिंहाजिने जातो भवो वा सिंहाजिनः।

## तत्र कृतलब्धक्रीतसम्भूते ॥६।३।९४॥

अणाद्या एयणाद्याः प्रत्ययाः स्युः। यदन्येभ्य उत्पादितं तत्कृतं, यत्प्रतिग्रहादिना प्राप्तं तल्लब्धं, यन्मूल्येन स्वीकृतं तत्क्रीतं, यत्सम्भाव्यते सम्माति वा तत्सम्भूतम्। मथुरायां कृतो लब्धः क्रीतः सम्भूतो वा माथुरः।

## पथः पन्थ च ॥६।३।१०३॥

जाते। पथि जातः पान्थकः। अकप्रत्ययो भाण्।

## अश्च वामावास्यायाः ॥६।३।१०४॥

जातेऽर्थेऽप्रत्ययोऽश्च स्याताम्। अमावास्यायां जातोऽमावास्यकः। पक्षे सन्ध्याद्यण्। आमावास्यः।

## सिन्ध्वपकरात्काणौ ॥६।३।१०१॥

जाते। सिन्धुकः। सैन्धवः। अपकरे कचवरे जातः अपकरकः। आपकरः।

## श्रविष्ठापाढादीयण् च ॥६।३।१०५॥

चादण्। भाणोऽपवादः। श्रविष्ठाभिश्चन्द्रयुक्ताभिर्युक्तः कालः श्रविष्ठः। तासु जातः श्राविष्ठीयः। श्राविष्ठः। आषाढीयः। आषाढः।

## फल्गुन्याष्टः ॥६।३।१०६॥

जाते । फल्गुन्योर्जातः फल्गुनः । फल्गुनी स्त्री । अणमपि केचिदिच्छन्ति । फाल्गुनः ।

## बहुलानुराधापुष्यार्थपुनर्वसुहस्तविशाखास्वाते-लुप् ॥६।३।१०७॥

एभ्यः परस्य जातेऽर्थे नक्षत्राणो लुप्स्यात् । बहुलाभिर्नक्षत्रयुक्ताभिर्युक्तः कालोऽपि बहुलास्तासु जातो बहुलः । अत्राणो लुपि स्त्र्यादेर्गौणत्वेऽप्यविनाऽऽपोऽपि लुक् ।

## चित्रारेवतीरोहिण्याः स्त्रियाम् ॥६।३।१०८॥

जातेऽर्थे लुप् । चित्रायां जाता चित्रा । रेवत्यां रेवती । पुंसि चैत्रः ।

## प्रोष्ठभद्राज्जाते ॥ ७।४।१३॥

प्रोष्ठभद्रास्परस्य पदस्यान्त्यस्य स्वरेष्वादेः स्वरस्य वृद्धिः स्याज्जातेऽर्थे ञ्णिति तद्धिते । प्रोष्ठपदासु जातः प्रौष्ठपादः । भाद्रपादः ।

## स्थानान्तगोशालखरशालात् ॥६।३।११०॥

जातार्थप्रत्ययस्य लुप् । गोः स्थाने जातो गोस्थानः । गोशाले गोशालायां वा जातो गोशालः ।

## वत्सशालाद्वा ॥ ६।३।१११॥

लुप् । वत्सशालः । वात्सशालः । नाम्नि द्वावपि विधी ।

## सोदर्यसमानोदर्यौ ॥६।३।११२॥

निपातौ । समाने उदरे जातः सोदर्यः समानोदर्यो वा । निर्देशादेव समानस्य सभावः ।

## साधुपुष्यत्पच्यमाने ॥६।३।११७॥

कालाद्यथायोगं प्रत्ययः । हेमन्ते साधु हैमनमनुलेपनम् । हैमन्तम् । हैमन्तिकम् । वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः । ग्रैष्म्यः । पावकाः शरदि पच्यन्ते । शारदाः शालयः ।

## उप्ते ॥६।३।११८॥

हेमन्ते उप्यन्ते हैमना यवाः ।

## आश्वयुज्या अकञ् ॥६।३।११९॥

आश्वयुज्यामुप्ता आश्वयुजकाः ।

## ग्रीष्मवसन्तात्वा ॥६।३।१२०॥

वासन्तकं वासन्तं सस्यम् ।

## व्याहरति मृगे ॥६।३।१२१॥

## जयिनि च ॥६।३।१२२॥

## भवे ॥६।३।१२३॥

एष्वणादिः ।

## दिगादिदेहांशाद्यः ॥६।३।१२४॥

भवेऽर्थे । दिश्यः । वर्ग्यः । अप्सु भवोऽप्सव्यः । निशा व्याहरति नैशिको नैशो वा शृगालः । निशायामुदेत्यमव्ययम् निशा तत्र जयी निशा स नैशः । नैशिकः ।

## कालाद्देये ऋणे ॥६।३।११३॥

मासे देयमृणं मासिकम् ।

## मध्यान्दिनण्णेयामोऽन्तश्च ॥६।३।१२६॥

मध्ये भवा माध्यन्दिनाः । माध्यमः । मध्यमीयः ।

## जिह्वामूलाङ्गुलेश्चेयः ॥६।३।१२७॥

भवे । जिह्वामूलीयः । अङ्गुलीयः । मध्यीयः ।

## वर्गान्तात् ॥६।३।१२८॥

कवर्गीयः ।

## चतुर्मासान्नाम्नि ॥६।३।१३३॥

भवेऽण् चतुर्षु मासेषु भवा चातुर्मासी । अत्र द्विगोरनपत्ये इत्यादिना न प्रत्ययलुप् । अनाम्नि । चतुर्मासेषु भवश्चतुर्मास । वर्षाकालेभ्य इति कण् । तस्य ।

## यज्ञे ञ्यः ॥६।३।१३४॥

चातुर्मास्यं यज्ञकर्म ।

## तस्य व्याख्याने च ग्रन्थात् ॥६।३।१४२॥

तस्येति षष्ठ्यन्ताद्व्याख्यानेऽर्थे तत्रेति सप्तम्यन्ताच्च ग्रन्थाद्भवेऽर्थेऽणादिः । कृतां व्याख्यानं कृत्सु भवं वा कार्तम् । प्रातिपदिकीयम् ।

## सेर्निवासादस्य ॥६।३।२१३॥

प्रथमान्तात्षष्ठ्यर्थेऽणादिः यत्प्रथमान्तो निवासः । मथुरा निवासोऽस्य माथुरः ।

## आभिजनात् ॥६।३।२१४॥

अभिजनानां या पूर्वबान्धवाना निवास आभिजनः । तस्मान्निवासादस्येत्यर्थे ऽणादिः । मथुराऽस्याभिजनो निवास इति माथुरः ।

## सिन्ध्वादेरञ् ॥६।३।२१६॥

प्रागुक्तानां सहार्थे । सिन्धुरभिजनो निवासोऽस्य सैन्धवः ।

## सलातुरादीयण् ॥६।३।२१७॥

तस्मिन्नर्थे । सलातुरोऽभिजनो निवासोऽस्य सालातुरीयः पाणिनिः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णा औलूखला यवाः । अश्वैरुह्यते आश्वो रथः । चतुर्भि रुह्यते चातुरं शकटम् ।

इति शेषाधिकारः ॥

आकर्ण्यमापूर्य गवां रसैरसौ कूपेऽपि कुम्भे चरणोन्मुखेऽप्यपात् ।
प्रभाविशेषं परमानमच्युतस्यघोषमानम्मङ्क्षिजिनः सतोऽपतात् ॥ १ ॥

## इकण् ॥६।४।१॥

अणः पूर्णो विधिः । अधिकारोऽयमापादम् ।

## तेन जितजयद्दीव्यत्खनत्सु ॥६।४।२॥

तेनेति तृतीयान्ताज्जिते जयति दीव्यति खनति चार्थे इकण्प्रत्ययः स्यात् । अक्षैर्जितमाक्षिकम् । अक्षैर्जयति आक्षिकः । कुद्दालेन खनति कौद्दालिकः ।

## संस्कृते ॥६।४।३॥

तेनेति तृतीयान्तात्तस्मिन्नर्थे इकण् स्यात् । दध्ना संस्कृतं दाधिकम् । मारीचिकम् । उपाध्यायेन संस्कृत उत्कर्षमापित औपाध्यायिकः । विद्यया संस्कृतो वैद्यिकः ।

## कुलत्थकोपान्त्यादण् ॥६।४।४॥

नेकण् । कुलत्थैः संस्कृतं कौलत्थम् । कौलमित्यपि कश्चित् । कोपान्त्ये, तित्तिडीकेन संस्कृतं तैत्तिडीकम् । कवर्गोपान्त्यादपीत्यन्ये । मौद्गम् । मारघम् इत्यादि ।

## संसृष्टे ॥६।४।५॥

इकण्। मिश्रणमात्रं संसर्ग इति संस्कृताद्भेदः। दध्ना संसृष्टं दाधिकम्। पैप्पलिकम्।

## तरति ॥६।४।९॥

तेनेत्यनुवर्तते। उडुपेन तरत्यौडुपिकः।

## नौद्विस्वरादिकः ॥६।४।१०॥

नावा तरति नाविकः। नाविका। घटिकः। जविका। बाहुकः।

## चरति ॥६।४।११॥

चरधातुर्गत्यर्थो भक्षणार्थश्च भाष्यः। हस्तिना चरति हास्तिकः। चाण्डिकः। आकर्षिकः। दध्ना चरति भुङ्क्ते दाधिकम्। घार्तिकः। आकर्षः स्वर्णनिकषोपलः।

## पर्पादेरिकट् ॥६।४।१२॥

पर्पेण चरति पार्पिकः। पार्पिकी। पङ्गुचारकाष्ठं पर्पः।

## चूर्णमुद्गाभ्यामिनणौ ॥६।४।७॥

चूर्णेन संसृष्टाश्चूर्णिनोऽपूपाः। मौद्गः ओदनः। मौद्गी यवागूः।

## श्वगणाद्वा ॥६।४।१४॥

चरत्यर्थे इकञ्वा। श्वगणेन चरति श्वागणिकः। श्वागणिकी। इकणि श्वागणिकः।

## पदस्यानिति वा ॥७।४।१२॥

पदशब्दान्तस्य श्वादेः शब्दस्यैकारवर्जितञ्णितितद्धिते च आयुकारो वा स्यात्। शुन इव पदमस्य श्वापदम्। तस्य विकारः शौवापदम्।

## वेतनादेर्जीवति ॥६।४।१५॥

वेतनेन जीवति वैतनिकः।

## व्यस्ताच्च क्रयविक्रयादिकः ॥६।४।१६॥

क्रयविक्रयेण जीवति क्रयविक्रयिकः। क्रयिकः। विक्रयिकः।

## वस्नात् ॥६।४।१७॥

वस्नं मूल्यम्। तेन जीवति वस्निकः।

## आयुधादीयश्च ॥६।४।१८॥

आयुधीयः। आयुधिकः। आयुधिका। इकणपवादः।

## प्रायो बहुस्वरादिकण् ॥६।३।१४३॥

तस्य व्याख्याने भवे चार्थे प्राथमिकम् आरुपातिकम्।

## तत आगते ॥६।३।१४९॥

अणादि'। माथुर'। गव्य'। ग्रामीण'। ग्राम्य'।

## विद्यायोनिसम्बन्धादकञ् ॥६।३।१५०॥

आगतेऽर्थे। आचार्यकम्। औपाध्यायकम्। पैत्र्यकम्।

## पितुर्यो वा ॥६।३।१५१॥

पित्र्यम्। पक्षे पैतृकम्।

## ऋत इकण् ॥६।३।१५२॥

आगतेऽर्थे। प्रशास्तृकम्। योनिसम्बन्धे मातृकम्।

## ऋवर्णोवर्णदोसिसुसशश्वदकस्माच्च इकस्येतो लुक् ॥७।४।७१॥

ऋवर्णान्तादुवर्णान्तादोसन्तादिसन्तादुसन्ताद्कारान्तात्परस्येकप्रत्ययस्येकारलुक् शश्वदकस्माद्वर्जम्। पैतृकम्।

## देविकाशिंशपादीर्घसत्रश्रेयसस्तत्प्राप्तावाः ॥७।४।२॥

स्वरेष्वादेः स्वरस्य ञ्णिति तद्धिते प्राप्तावृत्त्विः वा वृद्धिस्तत्प्रसङ्गे आकारादेशो वा स्यात्। देविकायां भवं दाविकमुदकम्। शांशप' स्तम्भ'। भवार्थे शांशापा' स्थलाः। शासपाः। दीर्घसत्रे भवं दार्घसत्रम्। श्रेयोऽभिकृत्य कृत श्राय सम् द्वादशाहम्।

## गोत्रादङ्कवत् ॥६।३।१५५॥

प्रत्ययविधि' पञ्चम्यन्तादागतेऽर्थे। बिदानामङ्को बैद'। तथा बिदेभ्य आगतं बैदम्। दाक्षम्।

## नृहेतुभ्यो रूप्यमयटौ वा ॥६।३।१५६॥

चैत्रादागतं चैत्ररूप्यम्। चैत्रमयं वा। हेत्वर्थे, सामरूप्यम्। साममयम्।

## प्रभवति ॥६।३।१५७॥

प्रत्ययविधि'। हिमवत' प्रभवति हैमवती गङ्गा।

## वैडूर्य्य ॥६।३।१५८॥

विदूरात्प्रभवति वैडूर्यः। निपातोऽयम्।

## त्यदादेर्मयट् ॥६।३।१५९॥

प्रभवत्यर्थे । तन्मयम् । तन्मयी ।

## तस्येदम् ॥६।३।१६०॥

षष्ठ्यन्तादिदमर्थे यथायोग्यमणादि । उपगोरिदमौपगवम् । माथुरम् । रैसम् । कालेयम् । स्त्रैणम् । पौंस्नः । गव्यम् । पारीण । मानवीय ।

## तेन प्रोक्ते ॥६।३।१८१॥

प्रकर्षेण व्याख्यातमध्यापित वा प्रोक्तम् । नतु कृतम् । तस्मिन्नर्थेऽणादि । भद्रबाहुना प्रोक्तानि भाद्रबाहवानि उत्तराध्ययनानि । पाणिनिना व्याख्यातं पाणिनीयम् ।

## उपज्ञाते ॥६।३।१९१॥

प्रथमत उपदेशेन विना ज्ञातमुपज्ञातम् । प्रथमत कृत योपज्ञातम् । तस्मिन्नर्थेऽणादिर्यथायोग्यम् । पाणिनिनोपज्ञात पाणिनीयम् ।

## अमोऽधिकृत्य ग्रन्थे ॥६।३।१९८॥

द्वितीयान्तादणादि । सुभद्रामधिकृत्य कृतो ग्रन्थ सौभद्र । ज्योतींष्यधिकृत्य कृतो ग्रन्थो ज्यौतिषम् ।

## द्वन्द्वात्प्रायः ॥६।३।२०१॥

ईयः । वाक्यपदीयम् । प्राय कथनादैयासुरम् ।

## अभिनिष्क्रामति द्वारे ॥६।३।२०२॥

द्वितीयान्तादभिनिर्गच्छत्यर्थ यथायोगमणादि । तथेदमभिनिष्क्रामद्द्वारं स्यात् । मथुरामभिनिष्क्रामति विद्धीद्वारं माथुरम् ।

## गच्छति पथि दूते ॥६।३।२०३॥

अणादिः । मथुरां गच्छति माथुर पन्थाः दूतो वा ।

## भजति ॥६।३।२०४॥

मार्गयत् । मथुरां भजति माथुर । नाद्येय ।

## टस्तुल्यदिशि ॥६।३।२१०॥

तृतीयान्तात्तुल्यदिशर्थेऽणादि । सुदाम्ना पर्वतेनैकदिक्सौदामनी विद्युत् ।

## तसिः ॥६।३।२११॥

सुदर्शनेनैकदिक् सुदर्शनतः । पार्श्वतः ।

## सेर्निवासादस्य ॥६।३।२१३॥

प्रथमान्तात्षष्ठ्यर्थेऽणादिर्यश्चेत्प्रथमान्तो निवासः । मथुरा निवासोऽस्य माथुरः ।

## आभिजनात् ॥६।३।२१४॥

अभिजनानां वा बान्धवानामयं निवास आभिजनः । तस्मादभिवासादस्येत्यर्थेऽणादिः । मथुराऽस्याभिजनो निवास इति माथुरः ।

## सिन्ध्वादेरञ् ॥६।३।२१६॥

मातुलकानां सहार्थे । सिन्धुरभिजनो निवासोऽस्य सैन्धवः ।

## सलातुरादीयण् ॥६।३।२१७॥

तस्मिन्नर्थे । सलातुरोऽभिजनो निवासोऽस्य सालातुरीयः पाणिनिः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णा औलूखला यवाः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् ।

इति शेषाधिकारः ॥

आकर्ण्यमापूर्य गतां रसैरसौ स्वपेऽपि कुम्भे चरणोन्मुखेऽप्ययात् ।
प्रमाविशेषं परमाममस्फुरत्प्रबोधमान्मद्विजिमः सतोऽञतात् ॥ १ ॥

## इकण् ॥६।४।१॥

अणः पूर्णो विधिः । अधिकारोऽयमापादम् ।

## तेन जितजयद्दीव्यत्खनत्सु ॥६।४।२॥

तेनेति तृतीयान्ताज्जिते जयति दीव्यति खनति चार्थे इकण्प्रत्ययः स्यात् । अक्षैर्जितमाक्षिकम् । अक्षैर्जयति आक्षिकः । कुद्दालेन खनति कौद्दालिकः ।

## संस्कृते ॥६।४।३॥

तेनेति तृतीयान्तात्संस्कृतेऽर्थे इकण् स्यात् । दध्ना संस्कृतं दाधिकम् । मारीचिकम् । उपाध्यायेन संस्कृतः वक्तार्थमापित औपाध्यायिकः । विधया संस्कृतो वैधिकः ।

## कुलत्थकोपान्त्यादण् ॥६।४।४॥

नेकण् । कुलत्थैः संस्कृतं कौलत्थम् । कौलमित्यपि कश्चित् । कोपान्त्ये, तितिडीकेन संस्कृतं तैतिडीकम् । कवर्गोपान्त्यात्पीत्यन्ये । मौद्गम् । सारघम् इत्यादि ।

## संसृष्टे ॥६।४।५॥

इकण् । मिश्रणमात्रं संसर्ग इति संस्कृतादन्यः । दध्ना संसृष्टं दाधिकम् । पैप्पलिकम् ।

## तरति ॥६।४।९॥

तेनेत्यनुवर्तते । उडुपेन तरत्यौडुपिकः ।

## नौद्विस्वरादिकः ॥६।४।१०॥

नावा तरति नाविकः । नाविका । घटिकः । जंघिकः । बाहुकः ।

## चरति ॥६।४।११॥

चरधातुर्गत्यर्थो भक्षणार्थश्च ग्राह्यः । हस्तिना चरति हास्तिकः । घाम्टिकः । आकषिकः । दध्ना चरति भुङ्क्ते दाधिकम् । घार्तिकः । आकषः स्वर्णनिकषोपलः ।

## पर्पादेरिकट् ॥६।४।१२॥

पर्पेण चरति पार्पिकः । पार्पिकी । पङ्गुचारकाष्ठं पर्पः ।

## चूर्णमुद्गाभ्यामिनणौ ॥६।४।७॥

चूर्णेन संसृष्टाश्चूर्णिनोऽपूपाः । मौद्ग ओदनः । मौद्गी यवागूः ।

## श्वगणाद्वा ॥६।४।१४॥

चरत्यर्थे इकट्वा । श्वगणेन चरति श्वगणिकः । श्वगणिकी । इकणि श्वागणिकः ।

## पदस्यानिति वा ॥७।४।१२॥

पदशब्दान्तस्य श्वादेः शब्दस्येकारवर्जितञ्णिति तद्धिते च प्रागुकारो वा स्यात् । शुन इव पदमस्य श्वापदम् । तस्य विकारः शौवापदम् ।

## वेतनादेर्जीवति ॥६।४।१५॥

वेतनेन जीवति वैतनिकः ।

## व्यस्ताच्च क्रयविक्रयादिकः ॥६।४।१६॥

क्रयविक्रयेण जीवति क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

## वस्नात् ॥६।४।१७॥

वस्नं मूल्यम् । तेन जीवति वस्निकः ।

## आयुधादीयश्च ॥६।४।१८॥

आयुधीयः । आयुधिकः । आयुधिका । इकमप्यपात् ।

## हरत्युत्सङ्गादेः ॥८।४।२३॥

इकण्। उत्सङ्गेन हरत्यौत्सङ्गिकः।

## भस्त्रादेरिकट् ॥८।४।२४॥

भस्त्रया हरति भस्त्रिकः। भस्त्रिकी।

## विवधवीवधाद्वा ॥८।४।२५॥

हरत्यर्थे इकन्। विवधेन हरति विवधिकः। पक्षे इकण् वैवधिकः। वैवधिकी।

## निर्वृत्तेऽक्षद्यूतादेः ॥८।४।२०॥

इकण्। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्।

## भावादिमः ॥८।४।२१॥

भावप्रत्ययान्तान्निर्वृत्तेऽर्थे इमप्रत्ययः। पाकेन निर्वृत्तम् पाकिमम्।

## ओजःसहोम्भसो वर्तते ॥८।४।२७॥

एभ्य इकण् वर्तते इत्यर्थे। ओजसा बलेन वर्तते औजसिकः। साहसिकः। आम्भसिकः।

## परेर्मुखपार्श्वात् ॥८।४।२९॥

एतदर्थे इकण्। परिमुखं वर्तते पारिमुखिकः। परिपार्श्वं वर्तते पारिपार्श्विकः।

## पक्षिमत्स्यमृगार्थाद् घ्नति ॥८।४।३१॥

पक्षिणो हन्ति पाक्षिकः। मात्स्यिकः। मार्गिकः।

## परिपन्थात्तिष्ठति च ॥८।४।३२॥

परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकश्चौरः।

## अवृद्धेर्गृह्णाति गर्ह्ये ॥८।४।३४॥

वृद्धिवाचकाद् गृह्णात्यर्थे इकण्। द्विगुणं गृह्णाति द्वैगुणिकः। त्रैगुणिकः। अवृद्धेरिति किम्? वृद्धिं गृह्णाति [illegible]।

## दशैकादशादिकश्च ॥८।४।३६॥

दशाधिकमेकादश गृह्णाति ऐकादशिकः। नारीवदपि ऐकादशिकी।

## परदारादिभ्यो गच्छति ॥८।४।३८॥

इकण्। पारदारिकः।

## माथोत्तरपदपदव्याक्रन्दाद्धावति ॥६।४।४०॥

पाथस्यर्थे। दण्डमाथं धावति दाण्डमाथिकः।

## सुस्नातादिभ्यः पृच्छति ॥६।४।४२॥

इकण्। सुस्नातं पृच्छति सौस्नातिकः।

## प्रभूतादिभ्यो ब्रुवति ॥६।४।४३॥

प्रभूतं ब्रूते प्राभूतिकः। नैपुणिकः। क्रियाविशेषणाद्यमिकण्। कश्चिदन्यत्रापि। स्वर्गमनं ब्रूते सौवर्गमनिकः।

## माशब्दइत्यादिभ्यः ॥६।४।४४॥

ब्रुवतीत्यर्थे इकण्। माशब्द इति ब्रूते माशब्दिकः। माशब्दः क्रियतामिति ब्रूते इत्यर्थः।

## शाब्दिकदार्दरिकलालाटिककौक्कुटिकम् ॥६।४।४५॥

शाब्दिकदार्दरिकाद्या निपाताः।

## समूहार्थात्समवेते ॥६।४।४६॥

इकण् समाजसमवेते। समाजं समवैति सामाजिकः। सामवायिकः।

## पर्षदो ण्यः ॥६।४।४७॥

पार्षद्यः।

## सेनाया वा ॥६।४।४८॥

सेनां समवैति सैन्यम्। पक्षे समूहार्थादित्यादिना इकण्। सैनिकः।

## धर्माधर्माच्चरति ॥६।४।४९॥

इकण्। धर्मं चरति धार्मिकः। आधर्मिकः।

## षष्ठ्या धर्म्ये ॥६।४।५०॥

षष्ठ्यन्ताद्धर्म्येऽर्थे इकण्। धर्मो न्यायानुवृत्तो आचारस्तत्सहितं धर्म्यम्। शुल्कशालायां धर्म्यं शौल्कशालिकम्। आपणिकम्।

## ऋन्नरादेरण् ॥६।४।५१॥

षष्ठ्यन्तेभ्यो धर्म्येऽर्थे। नुर्नरस्य धर्म्यं नारं, स्त्रियां नारी। महिष्या माहिषम्।

## अवक्रये ॥६।४।५३॥

अवक्रयो भाटकः। तदर्थे इकण्। आपणस्याऽवक्रय आपणिकः।

## तदस्य पण्यम् ॥३।४।५४॥

अपूपाः पण्यमस्य आपूपिकः । लावणिकः ।

## शिल्पम् ॥३।४।५७॥

तदस्येत्यर्थे इकण् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । वैणिकः ।

## शीलम् ॥३।४।५९॥

तदस्येत्यर्थे इकण् । शीलं स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । ताम्बूलिकः ।

## अङ्स्थाच्छत्रादेरञ् ॥३।४।६०॥

अङ्प्रत्ययान्तात्तिष्ठतेश्छत्रादिभ्यश्च शीलेऽर्थे । आस्था शीलमस्य आस्थः । नैष्ठः । उपसर्गादात इत्यङ् । आन्तस्थः । भिदादित्वादङ् । छत्रं शीलमस्य छात्रः ।

## प्रहरणम् ॥३।४।६२॥

तदस्येत्यर्थे इकण् । असिः प्रहरणमस्य आसिकः ।

## परश्वधाद्वाण् ॥३।४।६३॥

पारश्वधः । पक्षे इकण् । पारश्वधिकः ।

## शक्तियष्टेष्टीकण् ॥३।४।६४॥

शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः । शाक्तिकस्तु शक्त्या जीवतीति वेतने इकणा सेत्स्यति ।

## नास्तिकास्तिकदैष्टिकम् ॥३।४।६६॥

निपाताः ।

## भक्ष्य हितमस्मै ॥३।४।६९॥

तदस्मै इत्यर्थे इकण् । अपूपा भक्ष्य हितमस्मै आपूपिकः ।

## नियुक्त दीयते ॥३।४।७०॥

अस्मै इत्यर्थे इकण् । अग्रे भोजनमस्मै दीयते इत्याग्रभोजनिकः । श्राणा नियुक्तमस्मै दीयते श्राणिकः ।

## भक्तौदनाद्वा णिकट् ॥३।४।७२॥

भक्तमस्मै नियुक्तं दीयते भाक्तः । भक्तिकः । पक्षे इकण् । भाक्तिकः ।

## नवयज्ञादयोऽस्मिन्वर्तन्ते ॥६।४।७३॥

अस्मार्थे इकण्। नावयज्ञिकः। पाकयज्ञिकः।

## तत्र नियुक्ते ॥६।४।७४॥

इत्यर्थे इकण्। द्वारे नियुक्तो दौवारिकः।

## द्वारादेः ॥७।४।६॥

द्वार इत्येवमादेर्यौ य्वौ तत्समीपस्य स्वरेष्वादेः स्वरस्य वृद्धिप्रसङ्गे ताभ्यां प्रागैदौतौ स्याताम्।

## अगारान्तादिकः ॥६।४।७५॥

देवागारिकः।

## अदेशकालादध्यायिनि ॥६।४।७६॥

अशुचावध्यायी आशुचिकः। अकाले आकालिकः।

## निकटादिषु वसति ॥६।४।७७॥

निकटे वसति नैकटिकः। आवसथिकः।

## सतीर्थ्यः ॥६।४।७८॥

निपातोऽयम्। तीर्थमत्र गुरुः। समानतीर्थे वसति सतीर्थ्यः।

## प्रस्तारसंस्थानतदन्तकठिनान्तेभ्यो व्यवहरति ॥६।४।७९॥

प्रस्तारादेर्व्यवहरतीत्यर्थे इकण्। प्रस्तारे व्यवहरति प्रास्तारिकः।

## सङ्ख्यादेश्चार्हदलुचः ॥६।४।८०॥

आर्हदर्थं यावत् इत ऊर्ध्वं प्रकृतेर्वक्ष्यमाणाया केवलायास्तदन्तायाश्च संख्यापूर्वाया वक्ष्यमाणः प्रत्ययः स्यात्। न चेत्प्रकृतिर्लुगन्ता स्यात्। पारायणं वर्तयति पारायणिकः। द्वे पारायणे अधीते द्वैपारायणिकः। अभिविधौ आङो ग्रहणादर्हदर्थेऽपि। द्वे सहस्रे द्विसाहस्रम्। अलुच इति किम्? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। अत्र शूर्पाद्वाऽञित्यञ्।

## अनाम्न्यद्विः प्लुप् ॥६।४।१४१॥

इति लुप्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। नात्र पुनः शूर्पाद्वाञ् इत्यञ्।

## गोदानादीनां ब्रह्मचर्ये ॥६।४।८१॥

इकण्। गोदानस्य ब्रह्मचर्यं गौदानिकम्।

## देवव्रतादीन् डिन् ॥६।४।८३॥

देवव्रतं चरति दैवव्रती। महाव्रती।

## डकश्चाष्टाचत्वारिंशत वर्षाणाम् ॥६।४।८४॥

वर्षाणां सम्बन्धिनोऽष्टाचत्वारिंशतश्चाप्यद्व्रतवृत्तेश्चरत्यर्थे ड स्यात् वा डिन्। अष्टचत्वारिंशद्वर्षाणां व्रतमष्टाचत्वारिंशत् चरति अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी।

## चातुर्मास्यन्तौ यलुक् च ॥६।४।८५॥

चतुर्मासशब्दात् व्रतवृत्तेश्चरतीत्यर्थे तौ इकडिनौ स्याताम्। यलोपश्च। चतुर्षु मासेषु भवानि यज्ञेभ्य इतिण्य। चातुर्मास्यानि नाम यज्ञाः। तत्सहचरितानि व्रतानि चातुर्मास्यानि तानि चरति चातुर्मासकः। चातुर्मासी।

## तद्यात्येभ्यः ॥६।४।८७॥

इकण्। क्रोशशतं याति क्रौशशतिकः। यौजनिको दूतः।

## पथ इकट् ॥६।४।८८॥

पन्थानं याति पथिकः। द्वौ पन्थानौ याति द्विपथिका।

## नित्य णः पन्थश्च ॥६।४।८९॥

पन्थानं नित्यं याति। पथिन् शब्दस्य पन्थ आदेशः। पान्थः। पान्था स्त्री।

## तस्मै योगादेः शक्ते ॥६।४।९४॥

इकण्। योगाय शक्तो यौगिकः। सान्तापिकः।

## योगकर्मभ्यां योकञौ ॥६।४।९५॥

योगाय शक्तो योग्यः। कर्मणे शक्तं कार्मुकम्।

## तेन हस्ताद्यः ॥६।४।१०१॥

हस्तेन वेद्यं कार्यं वा हस्त्यम्।

## शोभमाने ॥६।४।१०२॥

पक्षेण शोभमानं पाक्षिकं वपुः। कौण्डलिकं मुखम्।

## कर्मवेषाद्यः ॥६।४।१०३॥

कर्मणा शोभते कर्मण्य शौर्यम्। वेषेण शोभते वेष्यो नटः।

## कालात्परिजय्यलभ्यकार्य्यसुकरे ॥६।४।१०४॥

कालवाचिनः शब्दात्परिजेयलभ्ये कार्य्ये सुकरे चार्थे इकण्। परितो जेतु शक्य परिजय्यम्। मासेन परिजय्यो मासिकः शत्रुः। संवत्सरेण कार्य्यं सांवत्सरिकम्। मासेन सुकरो मासिकः प्रासादः।

## निर्वृत्ते ॥६।४।१०५॥

अह्ना निर्वृत्तमाह्निकम्। सांवत्सरिकम्।

## त भाविभूते ॥६।४।१०६॥

मास भूतो मास भावी उत्सवो मासिकः। मास भूतो मासिको योगः।

## तस्मै भृतावीष्टे च ॥६।४।१०७॥

तादर्थ्यचतुर्थ्यन्तकालवाचिशब्दाद्भृतेऽधीष्टे चार्थे इकण्। मासाय भृतो वेतनेन क्रीतो मासिकः कर्मकरः। मासायाधीष्ट उपाध्यायो मासिकः। मासमध्यापयितुमधीष्ट इत्यर्थः। एवं वार्षिकः। सांवत्सरिकः।

## समाया ईनः ॥६।४।१०९॥

निर्वृत्तभृतभाविभूताधीष्टमासशब्दात्पञ्चस्वर्थेषु ईनः स्यात्। समया निर्वृत्तः समाभृतो भावी वा समायै भृतोऽधीष्टो वा समीनः।

## रात्र्यहःसंवत्सराच्च द्विगोर्वा ॥६।४।११०॥

एतदन्तात्समासशब्दाच्च द्विगोर्निर्वृत्ताद्यपञ्चकविषये ईनः। द्वाभ्यां रात्रिभ्यां निर्वृत्तो द्विरात्रीणः। द्व्यहीनः। द्विसमीनः। पक्षे द्वैरात्रिकः। इकण्।

## वर्षादश्च वा ॥६।४।१११॥

वर्षशब्दान्ताद्द्विगोरर्थपञ्चकेऽप्रत्ययः स्यात् ईनस्य वा। पक्षे इकण्। द्वाभ्यां वर्षाभ्यां निर्वृत्तो द्विवर्षः, द्विवर्षीणः, द्विवार्षिक इति त्रैरूप्यम्। एष भृतमाध्यधीष्टभृतार्थे। तत्रापि भाविनि न वृद्धिरिति बोध्यः।

## संख्याधिकाभ्या वर्षस्याभाविनि ॥७।४।१८॥

संख्यावाचकादधिकशब्दाच्चपरस्य वर्षशब्दस्य ञ्णिति तद्धिते स्वरे स्यादेः स्वरस्य वृद्धिः स्यात्, नतु भाविन्यर्थे। भाविनि द्वैवर्षिकं धान्यम्। द्वैवर्षिकः सरसः।

## प्राणिनि भूते ॥६।४।११२॥

वर्षशब्दान्ताद्द्विगोर्भूतेऽर्थेऽप्रत्ययः स्यात्। स चेद्भूतः प्राणी स्यात्। द्वे वर्षे भूतो द्विवर्षो दारकः। त्रिवर्षो वत्सः। अप्राणिनि, द्विवर्षो द्विवर्षीणो द्विवार्षिकः सरकः। भूत इति किम्? चोपार्थचतुष्टये विकल्प एव। द्विवर्षः। द्विवर्षीणः। द्विवार्षिको मनुष्यः। नित्योऽयं विधिः।

## मासाद्वयसि यः ॥६।४।११३॥

द्विगोः। द्वौ मासौ भूतो द्विमास्यो दारकः। वयसीति किम्? द्वैमासिको मापकः। भूत इत्येव। द्वौ मासौ भावी द्वैमासिको युवा। ~

## सोऽस्य ब्रह्मचर्यतद्वतो. ॥६।४।११६॥

प्रथमान्तात्कालवाचिनोऽस्येति षष्ठ्यर्थे इकण् स्यात् ब्रह्मचर्ये तद्वति च वाच्ये। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। सांवत्सरिकम्। मासिको ब्रह्मचारी।

## प्रयोजनम् ॥६।४।११७॥

सोऽस्येति वर्तते। जिनमहः प्रयोजनमस्य जैनमहिकं सूत्रम्।

## स्वर्गस्वस्तिवाचनादिभ्यो यल्लुपौ ॥६।४।१२३॥

स्वर्गः प्रयोजनमस्य स्वर्ग्यम्। यशस्यम्। आयुष्यम्। धन्यम्।

---

## स्वस्तिवाचनादिभ्य इकणो लुप्।

स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम्।

## समयात्प्राप्तः ॥६।४।१२४॥

सोऽस्येत्यनुवर्तनीयम्। समयः प्राप्तोऽस्य सामयिकः स्वाध्यायः।

## ऋत्वादिभ्योऽण् ॥६।४।१२५॥

ऋतुः प्राप्तोऽस्य आर्तवं पुष्प फलम्।

## कालाद्य ॥६।४।१२६॥

काल्यस्तापसः।

## दीर्घः ॥६।४।१२७॥

कालोऽस्य कालिकमृणम्। कालिकी सम्पत्। इकण्।

## त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे ॥६।४।१२९॥

त्रिंशता क्रीतं त्रिंशकम्। विंशत्या क्रीतं विंशकम्। त्रिंशतमर्हति त्रिंशकः। विंशकः।

## संख्याडतेश्चाशत्तिष्टेः कः ॥६।४।१३०॥

शदन्तत्यन्तष्ट्यन्तवर्जसंख्याया डतिप्रत्ययान्ताच्च त्रिंशद्विंशतिभ्यामार्हदर्थे कः प्रत्ययः स्यात्। द्वाभ्यां क्रीतं द्विकम्। त्रिकम्। षट्कम्। गणकम्। यावत्कम्। तावत्कम्। कतिभिः क्रीतं कतिकम्। त्रिंशत्कम्। विंशतिकम्।

## शतात्केवलादतस्मिन्येकौ ॥६।४।१३१॥

आर्हदर्थे यस्मिन् स चेदर्थो वस्तुनः प्रकृत्यर्थादभिन्नो न स्यात्। शतेन क्रीतं शतिकम्। अर्हति शत्यः। शतिकः। शतं वर्षाणि मानमस्य शत्यः। शतिकः। केवलादिति किम्? द्व्युत्तरं शतं तेन क्रीतो द्विशतिकः। अतस्मिन्निति किम्? शतं मानमस्य शतकं स्तोत्रम्।

## वातोरिकः ॥६।४।१३२॥

अत्वन्तायाः संख्याया आर्हदर्थाद् योऽर्थो वक्ष्यते तस्मिन्निकप्रत्ययो वा स्यात्। यावतिकम्। यावत्कम्।

## कंसार्द्धात् ॥६।४।१३५॥

आर्हदर्थे इकट्। कंसकम्। कंसकी।

## सहस्रशतमानादण् ॥६।४।१३६॥

आर्हदर्थेण केकणौ। सहस्रेण क्रीतः साहस्रः। शतमानेन शातमानः।

## शूर्पाद्वाऽञ् ॥६।४।१३७॥

आर्हदर्थेऽञ्वेकण्। शौर्पम्। पक्षे शौर्पिकम्।

## वसनात् ॥६।४।१३८॥

वसनशब्दादार्हदर्थे। वसनेन क्रीतं वासनम्।

## विंशतिकात् ॥ ६।४।१३९॥

विंशतिकशब्दादार्हदर्थेऽण् स्यात्। विंशतिर्मानमस्य विंशतिकम्। तेन क्रीतं वैंशतिकम्। संख्याडतेरिति कः।

## द्विगोरीनः ॥६।४।१४०॥

विंशतिकशब्दादार्हदर्थे इनः प्रत्ययः स्यात्। द्विविंशतिकीनम्।

## अनाम्न्यद्विः प्लुप् ॥६।४।१४१॥

द्विगोरार्हदर्थे यत्प्रत्ययस्य पिल्लुप् स्यात्तु द्वि अनाम्नि । द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसम् ।

## नवाऽण: ॥६।४।१४२॥

द्विगोर्लुप्या स्यात्तु द्वि । द्विमद्रकम् । द्विसाहस्रम् ।

## मूल्यैः क्रीते ॥६।४।१५०॥

मूल्यवाचिनस्तृतीयान्तात्क्रीतेऽर्थे यथायोगमिकणादयः । प्रस्थेन क्रीतं प्रास्थिकम् । सप्तत्या साप्ततिकम् । बहौ सङ्ख्याविशेषणानवगमाद्द्विवचनबहुवचनान्तान्न स्यात् । प्रस्थाभ्यां प्रस्थैर्वा क्रीतमिति । यत्र सङ्ख्याविशेषावगमे प्रमाणमस्ति तत्र स्यादेव । द्वाभ्यां क्रीतं द्विकम् । त्रिकम् । द्वाभ्यां प्रस्थाभ्यां क्रीतं द्विप्रस्थम् ।

## तस्य वापे ॥६।४।१५१॥

षष्ठ्यन्ताद्वापेऽर्थे यथायोगमिकणादयः । उप्यतेऽस्मिन्निति वापः क्षेत्रम् । प्रस्थस्य वापः प्रास्थिकम् ।

## वातपित्तश्लेष्मसन्निपाताच्छमनकोपने ॥६।४।१५२॥

वातस्य शमनं कोपनं वा वातिकम् ।

## हेतौ संयोगोत्पाते ॥६।४।१५३॥

शतस्य हेतुरीश्वरसंयोगः शत्यः । शतिकः । साहस्रः । उत्पाते, सङ्ग्रामोत्पाताय साङ्ग्रामिकमिन्द्रधनुः ।

## पुत्राद्येयौ ॥६।४।१५४॥

पुत्रस्य हेतुः संयोग उत्पातो वा पुत्र्यः । पुत्रीयः ।

## पृथिवीसर्वभूमेरीशज्ञातयोश्चाञ् ॥६।४।१५६॥

पृथिव्या ईशः पार्थिवः । सर्वभूमः सार्वभौमः । पृथिव्या ज्ञातः पार्थिवः

## अनुशतिकादीनाम् ॥७।४।२७॥

एषां शब्दानां ञ्णिति तद्धिते परे उभयोः स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् ।

## लोकसर्वलोकादज्ञाते ॥६।४।१५७॥

एतदर्थे आभ्यामिकण् । लोकस्य ज्ञातो लौकिकः । सार्वलौकिकः ।

## तं पचति द्रोणाद्वाञ् ॥६।४।१६१॥

पक्षे इकण्। द्रोणं पचति द्रौणः। द्रौणिकः। द्रौणिकी स्थाली गृहिणी वा। द्वौ द्रौ द्रोणौ पचति द्विद्रोणी। अनाम्न्यद्विः प्लुप् इत्यत्रिकणोर्लुप्।

## सम्भवदवहरतोश्च ॥६।४।१६२॥

प्रस्थं पचति सम्भवति अवहरति प्रास्थिकः कटाहः। प्रास्थिकी स्थाली।

## वंशादेर्भाराद्धरद्वहदावहत्सु ॥६।४।१६६॥

वंशभारं हरति वहति आवहति वा वांशभारिकः। वंशान् हरति वहति वा वांशिकः।

## सोऽस्य भृतिवस्नांशम् ॥६।४।१६८॥

पञ्चास्य भृतिर्वेतनं पञ्चकः कर्मकरः। पञ्चास्य वस्नं नियतकालक्रयमूल्यं पञ्चकः पटः। पञ्चास्यांशाः पञ्चकं नगरम्।

## मानम् ॥६।४।१६९॥

सोऽस्येति वर्तते। प्रस्थो मानमस्येति प्रास्थिको राशिः।

## जीवितस्य सन् ॥६।४।१७०॥

इति वचनादनाम्न्यद्विः प्लुबिति मासादपि लुप् न स्यात्। षष्टिर्जीवमाना नमस्य षाष्टिकः। शातिकः। सार्धशतिकः।

## सङ्ख्यायाः संघसूत्रपाठे ॥६।४।१७१॥

पञ्च गावो मानमस्य पञ्चकः सङ्घः। अष्टावध्याया मानमस्याष्टकं सिद्धहैमम्। अष्टौ रूपाणि मानमस्याष्टकः पाठोऽधीतः।

## नाम्नि ॥६।४।१७२॥

पञ्च संख्या मानं येषां ते पञ्चकाः शकुनयः।

## विंशत्यादयः ॥६।४।१७३॥

तस्येद मानमित्यर्थे निपात्यन्ते। द्वेर्दशदर्थे विंभावः, शतिप्रत्ययः। द्वौ दशतौ मानमेषां सङ्ख्येयानां घटादीनां विंशतिः। त्रेस्त्रिंभावः शत्प्रत्ययः। त्रयो दशतो मानमेषां त्रिंशत्। चत्वारिंशत् पात्राणि।

## पञ्चद्दशद्वर्गे वा ॥६।४।१७५॥

निपात्येते। पञ्च मानमस्य वर्गस्य पञ्चद्वर्गः। पञ्चको वर्गः। दशद्वर्गः। दशको वर्गः।

## स्तोमे डट् ॥३।४।१७६॥

ऋगादीनां समूहः स्तोमः । पञ्चदश ऋचो मानमस्य पञ्चदशः स्तोमः । विंशः । पञ्चविंशः । त्रिंशः ।

## तमर्हति ॥३।४।१७७॥

इत्यर्थे यथायोगं प्रत्ययाः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । वैधिकः । शत्यः । शतिकः । साहस्रः ।

## दण्डादेर्यः ॥३।४।१७८॥

अर्हत्यर्थे । दण्डमर्हति दण्ड्यः ।

## यज्ञादियः ॥३।४।१७९॥

यज्ञमर्हति यज्ञियो देशो यजमानो वा ।

## पात्रात्त्यौ ॥३।४।१८०॥

पात्रमर्हति पात्र्यः । पात्रियः ।

## दक्षिणाकटङ्गरस्थालीविलादीययौ ॥३।४।१८१॥

दक्षिणादेरीययौ । दक्षिणामर्हति दक्षिणीयो दक्षिण्यो वा गुरुः । कडङ्गरीयः कडङ्गर्यो वा गौः । कडङ्गरं माषादिकाष्ठम् ।

## छेदादेर्नित्यम् ॥३।४।१८२॥

छेदं नित्यमर्हति छैदिकः । भैदिकः ।

## विरागाद्विरङ्गश्च ॥३।४।१८३॥

नित्यं विरागमर्हति वैरङ्गिकः ।

## शीर्षच्छेदाद्यो वा ॥३।४।१८४॥

शीर्षच्छेद्यः । शैर्षच्छेदिकश्चौरः ।

## शालीनकौपीनार्त्विजीनम् ॥३।४।१८५॥

शालाप्रवेशमर्हति शालीनोऽधृष्टः । कूपप्रवेशमर्हति कौपीनः । कौपीनशब्दः पापकर्मणि गोपनीयपायूपस्थे तदावरणे चीवरखण्डेऽपि । ऋत्विजमर्हति आर्त्विजीनो यजमानः । ऋतुमुद्दिश्य जिनपूजाकरः ।

इति येकणोऽधिकारः ॥

---

योऽलङ्कारमणिर्बभूव यमिनां सौमिमिश्रिनामा जिनो,
योऽलङ्कारमणीचकार भजनात्सौमिमिश्रिमेषाक्पया ।
प्रज्ञानन्दनमेव पादविलुठत्पृथ्वीकृत्पर्ण मानसे,
प्रज्ञानन्दनतीर्थप प्रणिदधे जन्मोदधेस्तारकम् ॥ १ ॥

## यः ॥७।१।१॥

अधिकारसूत्रम् ।

## वहतिरथयुगप्रासङ्गात् ॥७।१।२॥

एभ्यो वहत्यर्थे यः स्यात् । रथं वहति रथ्यः । द्वौ रथौ वहति द्विरथ्यः । युगं वहति युग्यः । प्रासङ्गो वत्सदमनकाष्ठम् वहति प्रासङ्ग्यः ।

## धुरो यैयण् ॥७।१।३॥

धुर्यः । धौरेयः ।

## वामाद्यादेरीनः ॥७।१।४॥

वामा धूर्वामधुरा । समासान्तोऽप् । तां वहति वामधुरीणः । सर्वधुरीणः ।

## अश्चैकादेः ॥७।१।५॥

एकशब्दात्पूर्वाद्धुरन्ताद्वहत्यर्थे अः स्यात् । चकारादीनश्च । एका एकस्य वा धूः एकधुरा । तां वहति एकधुरः । एकधुरीणः ।

## हलसीरादिकण् ७।१।६॥

हलं वहति हालिकः । सैरिकः ।

## शकटादण् ॥७।१।७॥

शाकटं वहतीति शाकटो गौः । द्वयोः शकटयोर्वोढा द्विशाकटः । द्वे शकटे वहति द्वैशाकटः ।

## विध्यत्यनन्येन ॥७।१।८॥

पादौ विध्यन्ति पथ्याः शर्कराः ।

## धनगणाल्लब्धरि ॥७।१।९॥

धनं लब्धा धन्यः । गणं लब्धा गण्यः ।

## णोऽन्नात् ॥७।१।१०॥

अन्नं लब्धा आन्नः ।

हृद्यपद्यतुल्यमूल्यवश्यपथ्यवयस्यधेनुष्यागार्हपत्यज-
न्यधर्म्यम् ॥७।१।११॥

हृद्यादयो निपाता यथासमर्थविशेषेषु । हृदयस्य प्रियं हृद्यमौषधम् । हृद्यो देशः ।

नौविषेण तार्यवध्ये ॥७।१।१२॥

नावा तार्यं नाव्यम् । जलम् । विषेण वध्यो विष्यः ।

न्यायार्थादनपेते ॥७।१।१३॥

न्यायादनपेतं न्याय्यम् । अर्थादनपेतमर्थ्यम् ।

मतमदस्य करणे ॥७।१।१४॥

इह साम्यं ज्ञानं मतिर्वा मतशब्देनोच्यते । मतस्य करणं मत्यम् । मदस्य करणं मद्यम् ।

तत्र साधौ ॥७।१।१५॥

सभायां साधुः सभ्यः । शरणे साधुः शरण्यः ।

पथ्यतिथिवसतिस्वपतेरेयण् ॥७।१।१६॥

पथि साधु पाथेयम् ।

पर्षदो ण्यणौ ॥७।१।१८॥

पर्षदि साधुः पार्षद्यः । पार्षदः ।

सर्वजनाण्ण्येनञौ ॥७।१।१९॥

सार्वजन्यः । सार्वजनीनः ।

प्रतिजनादेरीनञ् ॥७।१।२०॥

प्रातिजनीनः । इदं युगे साधुरैदंयुगीनः ।

कथादेरिकण् ॥७।१।२१॥

काथिकः । वैकथिकः ।

देवतान्तात्तदर्थे ॥७।१।२२॥

यः स्यात् । अग्निदेवतायै इदमग्निदेवत्यम् । देवताशब्देन स्वामी देवस्य हविरादेः प्रतिगृहीता सम्प्रदानमिति चतुर्थी ।

## पाद्यार्घ्ये ॥७।१।२३॥

निपातौ ।

## ण्योऽतिथेः ॥७।१।२४॥

तदर्थे । अतिथ्यर्थमातिथ्यम् ।

## सादेश्चातदः ॥७।१।२५॥

इतोऽग्रे तदितिसूत्रं यावद्विधिः केवलस्य सादेश्च ज्ञेयः ।

## हलस्य कर्षे ॥७।१।२६॥

हल्या । हल्यो वा । द्विहल्या ।

## सीतया सङ्गते ॥७।१।२७॥

सीतया सङ्गतं सीत्यम् । द्विसीत्यम् ।

इति यस्य विधिः ॥

---

## ईयः ॥७।१।२८॥

आतदोर्थेऽधिकृतः ।

## हविरन्नभेदापूपादेर्यो वा ॥७।१।२९॥

आमिक्षायै आमिक्ष्यम् । आमिक्षीयम् । ओदनायेमे ओदन्याः । ओदनीया वा तण्डुलाः । अपूपायेदमपूप्यम् । अपूपीयम् । यवापूप्यम् । यवापूपीयम् ।

## उवर्णयुगादेर्यः ॥७।१।३०॥

नाऽभ्रेयः । शङ्कव इव शङ्कव्यम् । पिचव्यः कर्पासः । युगाय हितम् युग्यम् ।

## नाभेर्नभ्वादेहांशात् ॥७।१।३१॥

नाभये हितं नभ्यमञ्जनम् । चक्रावयवो नाभिः । देहांशे तु नाभये हितं नाभ्यं तैलम् ।

## न्चोवोधसः ॥७।१।३२॥

ऊधसे हितमौधन्यम् । नकारश्चान्तादेः ।

## शुनो वश्चोदूत् ॥७।१।३३॥

आतदोर्थेऽस्मन्शब्दाद्यः स्यात्, वकारस्योकाररूपः स्यात् । शुने हितं शुन्यं शून्यं वा । नाम्न ईयः ।

## कम्बलान्नाम्नि ॥७।१।३४॥

और्णापलशतं परिमाणं कम्बलोऽस्य स्यात् कम्बल्या ।

## तस्मै हिते ॥७।१।३५॥

वत्सेभ्यो हितं वत्सीयम् । पित्रीयं ।

## न राजाचार्यब्राह्मणवृष्णः ॥७।१।३६॥

एभ्यो हितार्थेऽधिकृतं प्रत्ययो न स्यात् । राज्ञे हितमिति वाक्यमेव ।

## प्राण्यङ्गरथखलतिलयववृषब्रह्ममाषाद्यः ॥७।१।३७॥

दन्तेभ्यो हितं दन्त्यम् । चक्षुष्यम् । कण्ठ्यम् । नाभ्यम् ।

## अव्यजात्थ्यप् ॥७।१।३८॥

अविभ्यो हितमविथ्यम् । अजेभ्यो हितमजथ्यम् ।

## चरकमाणवादीनञ् ॥७।१।३९॥

चरकेभ्यश्चारकीणं । माणवीनं ।

## भोगोत्तरपदात्मभ्यामीनः ॥७।१।४०॥

मातृभोगाय हितो मातृभोगीणः । पितृभोगीणः । आत्मने हितं आत्मनीनः । अनात्मनीनं ।

## ईनेऽध्वात्मनोः ॥७।४।४८॥

नान्त्यस्वरादिलोपः ।

## पञ्चसर्वविश्वाज्जनात्कर्मधारये ॥७।१।४१॥

एभ्यो हितेऽर्थे ईनः । नान्यत्र । पञ्चजनेभ्यो हितः पञ्चजनीनः । रथकारपञ्चमं वा चातुर्वर्ण्यं पञ्चजनः । एवं सर्वजनीनः ।

धर्मे अकर्मधारये वा ॥

पञ्चानां जनः पञ्चजनः । तस्मै हितः पञ्चजनीयः ।

## महत्सर्वादिकण् ॥७।१।४२॥

महते जनाय हितो माहाजनिकः ।

## सर्वाण्णो वा ॥७।१।४३॥

सर्वस्मै हितः सार्वः । पक्षे ईयः । सर्वीयः ।

## परिणामिनि तदर्थे ॥७।१।४४॥

यथायोगमीयादयः । अङ्गारेभ्य इमानि अङ्गारीयाणि । अङ्गारार्थानीत्यर्थः । शङ्कव्यं दारु ।

## चर्मण्यञ् ॥७।१।४५॥

परिणामिनि तदर्थे । वर्ध्रायेदं वार्ध्रं चर्म । सनङ्गवे इदं सानङ्गवम् । सनङ्गुश्चर्मविकारः ।

## ऋषभोपानहाञ्ञ्यः ॥७।१।४६॥

परिणामिनि । आर्षभ्यः ।

## छदिर्बलेरेयण् ॥७।१।४७॥

छदिषे इमानि छादिषेयाणि तृणानि । बलये इमे बालेयास्तण्डुलाः ।

## परिखाऽस्य स्यात् ॥७।१।४८॥

परिणामिनि । परिखा आसामिष्टकानां स्यादिति पारिखेय्य इष्टकाः ।

## अत्र च ७।१।४९॥

प्रथमान्तात्सप्तम्यर्थे एयण् । परिखा अस्यां स्यात्पारिखेयी भूमिः ।

## तद् ॥७।१।५०॥

तदिति प्रथमान्तात् अस्येति षष्ठ्यर्थे परिणामिनि अत्रेति सप्तम्यर्थे च ईयादयः । प्रकारा आसां स्युः प्राकारीया इष्टकाः । प्रासादीयं दारु ।

ईयस्याप्यवधिः पूर्णः ॥

## तस्यार्हे क्रियायां वत् ॥७।१।५१॥

तस्येति षष्ठ्यन्तादर्हेऽर्थे वत्प्रत्ययः स्यात् । यच्चार्हं क्रिया स्यात् । राज्ञोऽर्हं राजवत् वृत्तमस्य राज्ञः ।

## स्यादेरिवे ॥७।१।५२॥

स्याद्यन्तादिवार्थे वत्प्रत्ययः । इवार्थः सादृश्यं क्रियागतं चेत्स्यात् । अश्ववद्धावति चैत्रः । देववत्पश्यति मुनिः ।

## तत्र ॥७।१।५३॥

तत्रेति सप्तम्यन्तात् । मथुरायामिव मथुरावत् स्रुघ्न्यां प्रासादः ।

## सखिवणिग्दूताद्यः ॥७।१।६३॥

सख्युर्भावः कर्म वा सख्यम्। सखित्वम्। सखिता। वणिज्यम्। दूत्यम्। वाणिज्यमपि राजादित्वात्। दौत्यम्।

## स्तेनाद्यन्लुक् च ॥७।१।६४॥

स्तेनस्य 'भाव' स्तेयम्।

## कपिज्ञातेरेयण् ॥७।१।६५॥

कपेर्भाव' कर्म वा कापेयम्। ज्ञातेयम्।

## प्राणिजातिवयोऽर्थादञ् ॥७।१।६६॥

अश्वस्य 'भाव' कर्म वा आश्वम्। अश्वत्वम्। अश्वता।

## युवादेरण् ॥७।१।६७॥

यूनो युवतेर्वा 'भाव' कर्म यौवनम्। चौरादिपाठात् यौवतिका।

## हायनान्तात् ॥७।१।६८॥

भावे कर्मणि च अण्। द्वैहायनम्। त्रैहायनम्। पक्षे त्वतलौ।

## य्वृवर्णाल्लघ्वादेः ॥७।१।६९॥

लघुरादिः समीपो यस्य ईदृशो इवर्णोवर्णान्त ऋवर्णान्तश्च शब्दस्तस्माद्भावे कर्मणि चाण् स्यात्। त्वतलौ। शुचेर्भाव' कर्म वा शौचम्। शुचित्वम्। शुचिता। शकुने' शाकुनम्। मुनेर्मौनम्। लघ्वादेरिति किम्? पाण्डुत्वम्।

## पुरुषहृदयादसमासे ॥७।१।७०॥

पौरुषम्। हार्दम्। समासे तु परमपुरुषत्वम्।

## श्रोत्रियाद्यल्लुक् च ॥७।१।७१॥

भावे कर्मणि च। तद्योगे यलुक् स्यात्। त्वतलौ। श्रोत्रियस्य 'भाव' कर्म वा श्रौत्रम्। श्रोत्रियत्वम्। श्रोत्रियता। चौरादित्वात् श्रोत्रियकमपि।

## योपान्त्याद्गुरूपोत्तमादसुप्रख्यादकञ् ॥७।१।७२॥

त्रिप्रभृतीनामन्त्यमुत्तमम्। तत्समीपमुपोत्तमम्। तद्गुरुर्यस्य तस्माद्यकारोपान्त्यात्सुप्रख्यवर्जिताद्भावे कर्मणि चाकञ् स्यात्। त्वतलौ। रमणीयस्य 'भाव' कर्म वा रामणीयकम्। औपाध्यायकम्। आचार्यकम्।

## चौरादेः ॥७।१।७३॥

अकञ् त्वतलौ च । चौरस्य भाव कर्म वा चौरिका । चौरत्वम् । चोरत्वम् । चोरता ।

## द्वन्द्वाल्लित् ॥७।१।७४॥

अकञ् भावे कर्मणि च । शैष्योपाध्यायिका ।

## ब्रह्मणस्त्वः ॥७।१।७७॥

अस्थितवाचिनो ब्रह्मन्शब्दात्त्वप्रत्ययः । इत्यपवादः । ब्रह्मत्वम् । जातिवाचिनो ब्रह्मन् शब्दात्तलपि । ब्रह्मत्वम् । ब्रह्मता ।

## शाकटशाकिनौ क्षेत्रे ॥७।१।७८॥

इक्षूणां क्षेत्रमिक्षुशाकिनम् ।

## धान्येभ्य ईनञ् ॥७।१।७९॥

मौद्गीनम् ।

## व्रीहिशालेरेयण् ॥७।१।८०॥

व्रैहेयम् । शालेयम् ।

## यवयवकषष्टिकाद्यः ॥७।१।८१॥

नेनञ् । यव्यम् । यवक्यम् । षष्टिक्यम् ।

## वाणुमाषात् ॥७।१।८२॥

पक्षे ईनञ् । अणव्यम् । आणवीनम् ।

## वोमाभङ्गतिलात् ॥७।१।८३॥

उमाभाम्यस्य क्षेत्रम् औम्यम् । औमीनम् भाङ्ग्यम् । भाङ्गीनम् तिल्यम् । तैलीनम् ।

## अलाब्वाश्च कटो रजसि ॥७।१।८४॥

उमादित्रयात् । अलाबूनां रजः अलाबूकटम् । उमाकटम् ।

## अह्ना गम्येऽश्वादीनञ् ॥७।१।८५॥

अश्वस्यैकेनाह्ना गम्यः आश्वीनोऽध्वा ।

## कुलाज्जल्पे ॥७।१।८६॥

कौलीनं वचः ।

## पील्वादेः कुणः पाके ॥७।१।८७॥

पीलूनां पाकः पीलुकुणः । शमीकुणः ।

## कर्णादेर्मूले जाहः ॥७।१।८८॥

कर्णजाहम् । अक्षिजाहम् ।

## पक्षात्तिः ॥७।१।८९॥

पक्षमूलं पक्षतिः ।

## हिमादेलुः सहे ॥७।१।९०॥

हिमस्य सहः हिमेलुः ।

## बलवातादूलः ॥७।१।९१॥

बलस्य सहः बलूलः । वातूलः ।

## शीतोष्णतृप्रादालुरसहे ॥७।१।९२॥

शीतस्यासहः शीतालुः । उष्णालुः । तृप्रालुः । तृप्रं दुःखम् ।

## यथामुखसंमुखादीनस्तद्दृश्यतेऽस्मिन् ॥७।१।९३॥

यथामुखं दृश्यतेऽस्मिन् यथामुखीनो दर्पणः । सम्मुखं दृश्यतेऽस्मिन् सम्मुखीनम् ।

## सर्वादेः पथ्यङ्गकर्मपत्रपात्रशरावं व्याप्नोति ॥७।१।९४॥

सर्वशब्दपूर्वात्पथ्यादेरीनः । सर्वपथं व्याप्नोति सर्वपथीनो रथः । सर्वाङ्गीणः स्नेहः ।

## आप्रपदम् ॥७।१।९५॥

एतस्माद्द्वितीयान्ताद्व्याप्नोतीत्यर्थे ईनः । आप्रपदीनः पटः । प्रपदं पादाग्रम् ।

## अनुपदं बद्धा ॥७।१।९६॥

अनुपदीना उपानत् । पदप्रमाणेत्यर्थः ।

## सर्वान्नमत्ति ॥७।१।९७॥

सर्वान्नीनो भिक्षुः ।

## तदस्य सञ्जातं तारकादिभ्य इतः ॥७।१।१३८॥

तारकाः सञ्जाता अस्य तारकितं नभः। पुष्पितस्तरुः।

## गर्भादप्राणिनि ॥७।१।१३९॥

गर्भः सञ्जात एषां गर्भिताः शालयः। अप्राणिनीति किम्? गर्भः सञ्जातोऽस्या दास्या इति वाक्यमेव।

## प्रमाणान्मात्रच् ॥७।१।१४०॥

जानुनी प्रमाणमस्य जानुमात्रं जलम्।

## हस्तिपुरुषाद्वाण् ॥७।१।१४१॥

हस्ती प्रमाणमस्य हास्तिनम्। हस्तिमात्रम्।

## वोर्द्ध्वं दघ्नच् द्वयसच् ॥७।१।१४२॥

ऊर्ध्वप्रमाणवाचिनो नाम्नः षष्ठ्यर्थे एतौ स्तः। पक्षे मात्रच्। ऊरुः प्रमाणमस्य ऊरुदघ्नम्। ऊरुद्वयसम्।

## मानादसंशये लुप् ॥७।१।१४३॥

द्वौ हस्तौ प्रमाणमस्य द्विहस्तः। द्विवितस्तिः।

## शन्शद्विंशते. ॥७।१।१४६॥

शतन्ताच्छदन्ताच्च संख्यावाच्याद्विंशतेश्च मानवृत्तेः प्रथमान्तात्षष्ठ्यर्थे संशये गम्ये मात्रच् स्यात्। डितोऽपवादः। दश मानमेषां स्युर्दशमात्राः। विंशतिमात्राः।

## डिन् ॥७।१।१४७॥

संशय इति निवृत्तम्। मात्रच्। पञ्चदशाहोरात्राः प्रमाणमस्य पञ्चदशी अर्धमासः। पञ्चदशिनी। पञ्चदशिनः। एवं त्रिंशी। त्रिंशिनौ। त्रिंशिनो मासाः। विंशिनो भवनेऽब्दाः। डिन् प्रत्ययः।

## इद किमोर्तुरियकियू चास्य ॥७।१।१४८॥

इदमाद्यास्किमश्शब्दाच्च तदिति प्रथमान्तान्मानवृत्तेः षष्ठ्यर्थे मेयेऽतुप्प्रत्ययः स्यात्। तद्योगे इदमो इय किम कियू इत्यादेशौ स्तः। इदं मानमस्य इयान् पटः। किं मानमस्य कियान् पटः। इयती। कियती।

## यत्तदेतदोर्डावादिः ॥७।१।१४९॥

यत्तदेतद्भ्यः प्रथमान्तेभ्यो मानवृत्तेः षष्ठ्यर्थे मेयेऽतुप्रत्ययः। स च डावादिः। यत्परिमाणमस्य यावान्। एतावान्।

## यत्तत्किमः संख्यायां डतिर्वा ॥७।१।१५०॥

एभ्यः सङ्ख्यामानवृत्तिभ्यः षष्ठ्यर्थे सङ्ख्येये मेये डतिर्वा स्यात्। पक्षेऽतुः। या सङ्ख्या मानमेषां यति। सा संख्या मानमेषां तति। यावन्तः। तावन्तः। का सङ्ख्या मानमेषां कति। कियन्तः।

## अवयवात्तयट् ॥७।१।१५१॥

अवयवार्थे संख्यानाम्नः प्रथमान्तात्षष्ठ्यर्थेऽवयविनि तयट् स्यात्। चत्वारोऽवयवा अस्यां चतुष्टयी। सप्ततयी। द्वितयी।

## द्वित्रिभ्यामयड्वा ॥७।१।१५२॥

द्वौ अवयवौ द्वयम्। त्रयम्।

## द्व्यादेर्गुणान्मूल्यक्रेये मयट् ॥७।१।१५३॥

द्वौ गुणौ मूल्यमस्य क्रेयस्य द्विमयम्। एवं त्रिमयम्।

## अधिकं तत्सङ्ख्यमस्मिन् शतसहस्रे श-
## तिशद्दशान्ताया डः ॥७।१।१५४॥

विंशतिरधिका अस्मिन् योजनशते तद्विंशयोजनशतम्।

## सङ्ख्यापूरणे डट् ॥७।१।१५५॥

एकादशानां पूरणः एकादशः। द्वादशः। त्रयोदशः। स्त्री चतुर्दशी।

## विंशत्यादेर्वा तमट् ॥७।१।१५६॥

पक्षे डट्। विंशतेः पूरणो विंशतितमः। विंशः।

## शतादिमासार्द्धमाससंवत्सरात् ॥७।१।१५७॥

शतस्य पूरणः शततमः। मासतमो दिवसः। संवत्सरतमो मासः।

## षष्ठ्यादेरसङ्ख्यादेः ॥७।१।१५८॥

षष्टेः पूरणः षष्टितमः। असंख्यादेरिति किम्? एकषष्टितमः। पक्षे एकषष्टः।

## नो मट् ॥७।१।१५९॥

नान्तसङ्ख्यान्मट्। पञ्चानां पूरणः पञ्चमः। सप्तमः। नवमः। दशमः।

## यत्तदेतदोर्डावादिः ॥७।१।१४९॥

यत्तदेतद्भ्यः प्रथमान्तेभ्यो मानवृत्तेः षष्ठ्यर्थे मेयेऽतुप्प्रत्ययः। स च डावादिः। यत्परिमाणमस्य यावान्। एतावान्।

## यत्तत्किमः सख्यायां डतिर्वा ॥७।१।१५०॥

एभ्यः संख्यामानवृत्तिभ्यः षष्ठ्यर्थे संख्येये मेये डतिर्वा स्यात्। पक्षेऽतुः। या संख्या मानमेषां यति। सा संख्या मानमेषां तति। यावन्तः। तावन्तः। का संख्या मानमेषां कति। कियन्तः।

## अवयवात्तयट् ॥७।१।१५१॥

अवयवार्थे संख्यानाम्नः प्रथमान्तात्षष्ठ्यर्थेऽवयविनि तयट् स्यात्। चत्वारोऽवयवा अस्यां चतुष्टयी। सप्ततयी। द्वितयी।

## द्वित्रिभ्यामयड्वा ॥७।१।१५२॥

द्वौ अवयवौ अस्य द्वयम्। त्रयम्।

## द्व्यादेर्गुणान्मूल्यक्रेये मयट् ॥७।१।१५३॥

द्वौ गुणौ मूल्यमस्य क्रेयस्य द्विमयम्। एवं त्रिमयम्।

## अधिक तत्सङ्ख्यमस्मिन् शतसहस्रे श-
## तिशद्दशान्ताया डः ॥७।१।१५४॥

विंशतिरधिका अस्मिन् योजनशते तद्विंशयोजनशतम्।

## संख्यापूरणे डट् ॥७।१।१५५॥

एकादशानां पूरण एकादशः। द्वादशः। त्रयोदशः। स्त्री चतुर्दशी।

## विंशत्यादेर्वा तमट् ॥७।१।१५६॥

पक्षे डट्। विंशतेः पूरणो विंशतितमः। विंशः।

## शतादिमासार्द्धमाससंवत्सरात् ॥७।१।१५७॥

शतस्य पूरणः शततमः। मासतमो दिवसः। संवत्सरतमो मासः।

## षष्ठ्यादेरसङ्ख्यादेः ॥७।१।१५८॥

षष्टेः पूरणः षष्टितमः। असंख्यादेरिति किम्? एकषष्टितमः। पक्षे एकषष्टः।

## नो मट् ॥७।१।१५९॥

मान्तशब्दान्मट्। पञ्चानां पूरणः पञ्चमः। सप्तमः। नवमः। दशमः।

**यथाकामानुकामात्यन्तं गामिनि ॥७।१।१००॥**

यथाकामं गामी यथाकामीनः । अनुकामीनः । अत्यन्तीनः ।

**पारावार व्यस्तव्यत्यस्तं च ॥७।१।१०१॥**

गामीत्यर्थे ईनः । पारावारं गामी पारावारीणः । पारीणः । अवारीणः । अवारपारीणः ।

**अध्वानं येनौ ॥७।१।१०३॥**

अध्वानमलङ्गामी अध्वन्यः । अध्वनीनः ।

**अभ्यमित्रमीयश्च ॥७।१।१०४॥**

अभ्यमित्र्यः अभ्यमित्रीणः । चायेतौ । अभ्यमित्रीयः ।

**समांसमीनाद्यश्वीनाद्यप्रातीनागवीनसाप्तपदीनम् ॥७।१।१०५॥**

समांसमीनादयो निपात्याः । समां समां गर्भं धारयतीति समांसमीना गौः ।

**तस्य तुल्येकः सञ्ज्ञाप्रतिकृत्यो. ॥७।१।१०८॥**

अश्वतुल्यः अश्वकः रूपम् । अश्वकं रूपम् । अश्विका प्रतिमा ।

**न नृपूजार्थध्वजचित्रे ॥७।१।१०९॥**

चञ्चातुल्यः पुरुषः चञ्चा । मात्र कमसयः । पूजार्थेऽपि न । अर्हत्तुल्यं बिम्बम् । एवं ध्वजादिषु न प्रत्ययः ।

**शाखादेर्यः ॥७।१।११४॥**

शाखातुल्यः शाख्यः ।

**कुशाग्रादीयः ॥७।१।११६॥**

कुशाग्रीया छुरिका । बुद्धिरपि तीक्ष्णत्वात् ।

**शर्करादेरण् ॥७।१।११८॥**

शर्करायास्तुल्यं शार्करं दधि ।

**अः सपत्न्या ॥७।१।११९॥**

सपत्न्यास्तुल्यः सपत्नः ।

## वेर्विस्तृते शालसङ्कटौ ॥७।१।१२३॥

विशाल । विसङ्कट । पाणिनीये विमञ्ज्यां नामाभी इत्युक्तं तद्विकम् । विना नामा इत्यव्ययम् ।

## कटः ॥७।१।१२४॥

विकट ।

## अवात्कुटारश्चावनते ॥७।१।१२६॥

अवकुटार । अवकट ।

## नासानतितद्वतोष्टीटनाटभ्रटम् ॥७।१।१२७॥

नासाया नते अवटीटम् । अवभ्रटम् ।

## विडविरीसौ नीरन्ध्रे च ॥७।१।१२९॥

नासानतौ तद्वति नरे नीरन्ध्रे चेति । निबिडा निबिरीसा नासिका । निबिडा सान्द्राः केशाः ।

## क्लिन्नाल्लश्चक्षुषि चिल्पिल्चुल् चास्य ॥७।१।१३०॥

चिल्लं पिल्लं चुल्लं चक्षु । तद्योगात्पुरुषोऽपि चिल्ल । पिल्ल । चुल्ल ।

## अवेः सघातविस्तारे कटंपटम् ॥७।१।१३२॥

सङ्घाते अविकटः । तद्विस्तारे अविपटः ।

## पशुभ्यः स्थाने गोष्ठः ॥७।१।१३३॥

गवां स्थानं गोगोष्ठम् । अश्वगोष्ठम् ।

## द्वित्वे गोयुगः ॥७।१।१३४॥

अश्वगोयुगम् ।

## षट्त्वे षड्गवः ॥७।१।१३५॥

अश्वानां षट्त्वम् अश्वषड्गवम् ।

## तिलादिभ्यः स्नेहे तैलः ॥७।१।१३६॥

तिलानां स्नेहस्तिलतैल । तैल इत्यय प्रत्यय ।

## तत्र घटते कर्मणष्ठः ॥७।१।१३७॥

कर्मणि घटते कर्मठ ।

## तदस्य सञ्जातं तारकादिभ्य इतः ॥७।१।१३८॥

तारकाः सञ्जाता अस्य तारकितं नभः । पुष्पितस्तरुः ।

## गर्भादप्राणिनि ॥७।१।१३९॥

गर्भः सञ्जात एषां गर्भिताः शालयः । अप्राणिनीति किम् ? गर्भः सञ्जातोऽस्या दास्या इति वाक्यमेव ।

## प्रमाणान्मात्रट् ॥७।१।१४०॥

जानुनी प्रमाणमस्य जानुमात्रं जलम् ।

## हस्तिपुरुपाद्वाण् ॥७।१।१४१॥

हस्ती प्रमाणमस्य हास्तिनम् । हस्तिमात्रम् ।

## वोर्ध्वे दघ्नट् द्वयसट् ॥७।१।१४२॥

ऊर्ध्वंप्रमाणवाचिनो नाम्नः षष्ठ्यर्थे एतौ स्तः । पक्षे मात्रट् । ऊरू प्रमाणमस्य ऊरुदघ्नम् । ऊरुद्वयसम् ।

## मानादसंशये लुप् ॥७।१।१४३॥

द्वौ हस्तौ प्रमाणमस्य द्विहस्तः । द्विवितस्तिः ।

## शन्शद्विंशतेः ॥७।१।१४६॥

शन्नन्ताच्छदन्ताच्च संख्याशब्दाद्विंशतेश्च मानवृत्तेः प्रथमान्तात्षष्ठ्यर्थे संशये गम्ये मात्रट् स्यात् । लुपोऽपवादः । दश मानमेषां स्युर्दशमात्राः । विंशतिमात्राः ।

## डिन् ॥७।१।१४७॥

संशय इति निवृत्तम् । प्राग्वत् । पञ्चदशाहोरात्राः प्रमाणमस्य पञ्चदशी अर्धमासः । पञ्चदशिनी । पञ्चदशिनः । एवं त्रिंशी । त्रिंशिनी । त्रिंशिनो मासाः । विंशिनो भवनेन्द्राः । डिन् प्रत्ययः ।

## इदं किमोतुरियकिय् चास्य ॥७।१।१४८॥

इदंशब्दात्किम्शब्दाच्च तदिति प्रथमान्ताभ्यां मानवृत्तेः षष्ठ्यर्थे मेयेऽतुप्रत्ययः स्यात् । तद्योगे इदमो इय किय इत्यादेशौ स्तः । इदं मानमस्य इयान् पटः । किं मानमस्य कियान् पटः । इयती । कियती ।

## यत्तदेतदोर्डावादिः ॥७।१।१४९॥

यत्तदेतद्भ्यः प्रथमान्तेभ्यो मानरूपे षष्ठ्यर्थे मेयेऽतुप्रत्ययः। स च डावादिः। यत्परिमाणमस्य यावान्। एतावान्।

## यत्तत्किमः संख्यायां डतिर्वा ॥७।१।१५०॥

एभ्यः संख्यामानवृत्तिभ्यः षष्ठ्यर्थे संख्येये मेये डतिर्वा स्यात्। पक्षेऽतुः। या संख्या मानमेषां यति। सा संख्या मानमेषां तति। यावन्तः। तावन्तः। का संख्या मानमेषां कति। कियन्तः।

## अवयवात्तयट् ॥७।१।१५१॥

अवयवार्थे संख्यानाम्नः प्रथमान्तात्षष्ठ्यर्थेऽवयविनि तयट् स्यात्। चत्वारोऽवयवा अस्याः चतुष्टयी। सप्ततयी। द्वितयी।

## द्वित्रिभ्यामयड्वा ॥७।१।१५२॥

द्वौ अवयवौ तद्द्वयम्। त्रयम्।

## द्व्यादेर्गुणान्मूल्यक्रेये मयट् ॥७।१।१५३॥

द्वौ गुणौ मूल्यमस्य क्रेयस्य द्विमयम्। एवं त्रिमयम्।

## अधिक तत्सङ्ख्यमस्मिन् शतसहस्रे शतिशद्दशान्ताया डः ॥७।१।१५४॥

विंशतिरधिका अस्मिन् योजनशते तद्विंशयोजनशतम्।

## सङ्ख्यापूरणे डट् ॥७।१।१५५॥

एकादशानां पूरणः एकादशः। द्वादशः। त्रयोदशः। स्त्री चतुर्दशी।

## विंशत्यादेर्वा तमट् ॥७।१।१५६॥

पक्षे डट्। विंशतेः पूरणो विंशतितमः। विंशः।

## शतादिमासार्द्धमाससंवत्सरात् ॥७।१।१५७॥

शतस्य पूरणः शततमः। मासतमो दिवसः। संवत्सरतमो मासः।

## षष्ठ्यादेरसङ्ख्यादेः ॥७।१।१५८॥

षष्टेः पूरणः षष्टितमः। असंख्यादेरिति किम्? एकषष्टितमः। पक्षे एकषष्टः।

## नो मट् ॥७।१।१५९॥

नान्तसंख्याशब्दान्मट्। पञ्चानां पूरणः पञ्चमः। सप्तमः। नवमः। दशमः।

## पित्तिथट् बहुगणपूगसङ्घात् ॥७।१।१६०॥

संख्यापूरणे तिथट्, स च पित् । बहूनां पूरणो बहुतिथः । बहूनां पूरणी बहुतिथी । पित्करणं पुंवद्भावार्थम् ।

## अतोरिथट् ॥७।१।१६१॥

अत्वन्तात्संख्यावाचिनः पूरणे इथट् स च पित् । नात्र डट् । इयतां पूरण इयतिथः । इयतिथी । कियतिथः । कियतिथी ।

## षट्कतिकतिपयात्थट् ॥७।१।१६२॥

स च पित् । षण्णां पूरणः षष्ठः । षष्ठी । कतिथः । कतिथी ।

## चतुरः ७।१।१६३॥

थट् । चतुर्णां पूरणश्चतुर्थः ।

## येयौ च लुक् च ॥७।१।१६४॥

चतुरशब्दात्पूरणे य ईय एतौ स्तः, चकारलुक् । तुर्यः । तुरीयः ।

## द्वेस्तीयः ॥७।१।१६५॥

द्वयोः पूरणो द्वितीयः । द्वितीया ।

## त्रेस्तृ च ॥७।१।१६६॥

त्रिशब्दात्पूरणे तीयः । तद्योगे त्रि इत्यस्य तृ इत्यादेशः । तृतीयः ।

## पूर्वमनेन सादेश्चेन् ॥७।१।१६७॥

पूर्वमितिक्रियाविशेषणाद्द्वितीयान्तात्केवलाद्वा सपूर्वोपादनेनेति तृतीयार्थे कर्तरि इन् स्यात् । पूर्वमनेन पूर्वी । पूर्विणौ । पूर्वी कटम् । सपूर्वात्, कृतं पूर्वमनेन कृतपूर्वी कटः ।

## इन्द्रियम् ॥७।१।१७४॥

निपातोऽयम् । इन्द्र आत्मा तल्लिङ्गमिन्द्रियम् ।

## तेन वित्ते चञ्चुचणौ ॥७।१।१७५॥

विद्यया वित्तो ज्ञातो विद्याचञ्चुः । विद्याचणः ।

## धनहिरण्ये कामे ॥७।१।१७८॥

कः प्रत्ययः स्यात् । धनकामो धनकः चैत्रस्य ।

## स्वाङ्गेषु सक्ते ॥७।१।१८०॥

केशेषु सक्तः केशकः ।

## उदरे त्विकणाद्यूने ॥७।१।१८१॥

उदरे सक्त औदरिकः। आद्यूनः। न विजिगीषायान्। किन्तु बुभुक्षयात्यन्तपीडितः।

## अशं हारिणि ॥७।१।१८२॥

अशको दायादः।

## तन्त्रादचिरोद्धृते ॥७।१।१८३॥

तन्त्रकः।

## शीताच्च कारिणि ॥७।१।१८६॥

शीतं मन्दं करोति शीतकः अलसः। उष्णं क्षिप्रं करोति उष्णको दक्षः।

## अधेरारूढे ॥७।१।१८७॥

खार्ये। अधिको द्रोणः खार्याः।

## अनोः कमितरि ७।१।१८८॥

अनुकामयते अनुकः।

## अभेरीश्च वा ॥७।१।१८९॥

अभिकः। अभीकः।

## सोऽस्य मुख्यः ॥७।१।१९०॥

देवदत्तो मुख्योऽस्य देवदत्तकाः सङ्घः।

## उदुत्सोरुन्मनसि ॥७।१।१९२॥

उद्गतं मनोऽस्य उत्कः। उत्सु गतं मनोऽस्य उत्सुकः।

## प्रायोऽन्नमस्मिन्नाम्नि ॥७।१।१९४॥

गुडापूपाः प्रायेण प्रायो वाऽन्नमस्यां गुडापूपिका पौर्णमासी। तिलापूपिका कृशरिका।

## कुल्मापादण् ॥७।१।१९५॥

कुल्मापाः प्रायेण प्रायो वाऽन्नमस्यां कौल्मापी। कौल्मासीत्यपि।

## वटकादिन् ॥७।१।१९६॥

वटकिनी।

## पित्तिथट् बहुगणपूगसङ्घात् ॥७।१।१६०॥

तस्यापूरणे तिथट्, स च पित्। बहूनां पूरणो बहुतिथः। बहूनां पूरणी बहुतिथी। पित्करणं पुंवद्भावार्थम्।

## अतोरिथट् ॥७।१।१६१॥

अत्वन्तात्सङ्ख्याशब्दात्पूरणे इथट् स च पित्। नाम्न डट्। इयतां पूरण इयतिथः। इयतिथी। कियतिथः। कियतिथी।

## षट्कतिकतिपयात्थट् ॥७।१।१६२॥

स च पित्। षण्णां पूरणः षष्ठः। षष्ठी। कतिथः। कतिथी।

## चतुरः ७।१।१६३॥

थट्। चतुर्णां पूरणश्चतुर्थः।

## येयौ च लुक् च ॥७।१।१६४॥

चतुरशब्दात्पूरणे य ईय एतौ स्तः, चकारलुक्। तुर्यः। तुरीयः।

## द्वेस्तीयः ॥७।१।१६५॥

द्वयोः पूरणो द्वितीयः। द्वितीया।

## त्रेस्तृ च ॥७।१।१६६॥

त्रिशब्दात्पूरणे तीयः। तद्योगे त्रि इत्यस्य तृ इत्यादेशः। तृतीयः।

## पूर्वमनेन सादेश्चेन् ॥७।१।१६७॥

पूर्वमितिक्रियाविशेषणाद्द्वितीयान्तात्केवलात्सपूर्वाच्चानेनेति तृतीयार्थे कर्तरि इन् स्यात्। पूर्वमनेन पूर्वी। पूर्विणी। पूर्वी कटम्। सपूर्वात्, कृतं पूर्वमनेन कृतपूर्वी कटं।

## इन्द्रियम् ॥७।१।१७४॥

निपातोऽयम्। इन्द्र आत्मा तल्लिङ्गमिन्द्रियम्।

## तेन वित्ते चञ्चुचणौ ॥७।१।१७५॥

विद्यया वित्तो ज्ञातो विद्याचञ्चुः। विद्याचणः।

## धनहिरण्ये कामे ॥७।१।१७८॥

कः प्रत्ययः स्यात्। धनकामो धनकः चैत्रस्य।

## स्वाङ्गेषु सक्ते ॥७।१।१८०॥

केशेषु सक्तः केशकः।

## उदरे त्विकणाद्यूने ॥७।१।१८१॥

उदरे सक्त औदरिकः । आद्यूनः । न विजिगीषावान् । किन्तु बुभुक्षया सन्तपीडितः ।

## अशं हारिणि ॥७।१।१८२॥

अशको वाचाटः ।

## तन्त्रादचिरोद्धृते ॥७।१।१८३॥

तन्त्रकः ।

## शीताच्च कारिणि ॥७।१।१८६॥

शीतं मन्दं करोति शीतकः अलसः । उष्णं क्षिप्रं करोति उष्णको दक्षः ।

## अधेरारूढे ॥७।१।१८७॥

स्वार्थे । अधिको द्रोणः खार्याः ।

## अनोः कमितरि ७।१।१८८॥

अनुकामयते अनुकः ।

## अभेरीश्च वा ॥७।१।१८९॥

अभिकः । अभीकः ।

## सोऽस्य मुख्यः ॥७।१।१९०॥

देवदत्तो मुख्योऽस्य देवदत्तकः सङ्घः ।

## उदुत्सोरुन्मनसि ॥७।१।१९२॥

उद्गतं मनोऽस्य उत्कः । उत्सु गतं मनोऽस्य उत्सुकः ।

## प्रायोऽन्नमस्मिन्नाम्नि ॥७।१।१९४॥

गुडापूपाः प्रायेण प्रायो वाऽन्नमस्यां गुडापूपिका पौर्णमासी । तिलापूपिका कृशरिका ।

## कुल्मापादण् ॥७।१।१९५॥

कुल्मापाः प्रायेण प्रायो वाऽन्नमस्यां कौल्मापी । कौल्मासीत्यपि ।

## वटकादिन् ॥७।१।१९६॥

वटकिनी ।

## पित्तिथट् बहुगणपूगसङ्घात् ॥७।१।१६०॥

सङ्ख्यापूरणे तिथट्, स च पित्। बहूनां पूरणो बहुतिथः। बहूनां पूरणी बहुतिथी। पित्करणं पुंवद्भावार्थम्।

## अतोरिथट् ॥७।१।१६१॥

अतसन्तात्सङ्ख्याशब्दात्पूरणे इथट् स च पित्। नास्य डट्। इयतां पूरण इयतिथः। इयतिथी। कियतिथः। कियतिथी।

## षट्कतिकतिपयात्थट् ॥७।१।१६२॥

स च पित्। षण्णां पूरणः षष्ठः। षष्ठी। कतिथः। कतिथी।

## चतुरः ७।१।१६३॥

थट्। चतुर्णां पूरणश्चतुर्थः।

## येयौ च लुक् च ॥७।१।१६४॥

चतुर्शब्दात्पूरणे य ईय एतौ स्तः, चकारलुक्। तुर्यः। तुरीयः।

## द्वेस्तीयः ॥७।१।१६५॥

द्वयोः पूरणो द्वितीयः। द्वितीया।

## त्रेस्तृ च ॥७।१।१६६॥

त्रिशब्दात्पूरणे तीयः। तद्योगे त्रि इत्यस्य तृ इत्यादेशः। तृतीयः।

## पूर्वमनेन सादेश्चेन् ॥७।१।१६७॥

पूर्वमितिक्रियाविशेषणाद्वितीयान्तात्केवलात् वा सपूर्वात्कर्मणेति तृतीयार्थे कर्तरि इन् स्यात्। पूर्वमनेन पूर्वी। पूर्विणौ। पूर्वी कटम्। सपूर्वात्, कृतं पूर्वमनेन कृतपूर्वी कटम्।

## इन्द्रियम् ॥७।१।१७४॥

निपातोऽयम्। इन्द्र आत्मा तल्लिङ्गमिन्द्रियम्।

## तेन वित्ते चञ्चुचणौ ॥७।१।१७५॥

विद्यया वित्तो ज्ञातो विद्याचुञ्चुः। विद्याचणः।

## धनहिरण्ये कामे ॥७।१।१७८॥

कः प्रत्ययः स्यात्। धनकामो धनकः चैत्रस्य।

## स्वाङ्गेषु सक्ते ॥७।१।१८०॥

केशेषु सक्तः केशकः।

## उदरे त्विकणाद्यूने ॥७।१।१८१॥

उदरे सक्त औदरिकः। आद्यून'। न विजिगीषायाम्। किन्तु बुभुक्षया सन्तापीडित'।

## अंशं हारिणि ॥७।१।१८२॥

अशको दायाद'।

## तन्त्रादचिरोद्धृते ॥७।१।१८३॥

तन्त्रकः।

## शीताच्च कारिणि ॥७।१।१८६॥

शीत मन्द करोति शीतक' अलस'। उष्ण क्षिप्र करोति उष्णको दक्ष'।

## अधेरारूढे ॥७।१।१८७॥

खार्यै। अधिको द्रोण' खार्या'।

## अनोः कमितरि ७।१।१८८॥

अनुकामयते अनुक'।

## अभेरीश्च वा ॥७।१।१८९॥

अभिक'। अभीकः।

## सोऽस्य मुख्यः ॥७।१।१९०॥

देवदत्तो मुख्योऽस्य देवदत्तकः सङ्घ'।

## उदुत्सोरुन्मनसि ॥७।१।१९२॥

उद्गतं मनोऽस्य उत्कः। उत्सु गत मनोऽस्य उत्सुकः।

## प्रायोऽन्नमस्मिन्नाम्नि ॥७।१।१९४॥

गुडापूपा' प्रायेण प्रायो वाऽन्नमस्यां गुडापूपिका पौर्णमासी। तिलापूपिका कृशरिका।

## कुल्माषादण् ॥७।१।१९५॥

कुल्माषा' प्रायेण प्रायो वाऽन्नमस्यां कौल्माषी। कौल्मासीत्यपि।

## वटकादिन् ॥७।१।१९६॥

वटकिनी।

## साक्षाद्द्रष्टा ॥७।१।१९७॥

साक्षाच्छब्दाद्द्रष्टा इत्यर्थे इन् स्यात् । साक्षी । साक्षिणी । साक्षिणोऽर्हन्त मायोऽप्यपरोक्षमन्तस्तरादिविलुप्त नाम्नीत्येव । साक्षाद्द्रष्टाऽर्हन् जयति ॥

इति यादिप्रत्ययाधिकारः ॥

दिविजन्यस्य पिता यदुपासको (सः) विजय कुरुताद्विजपाङ्कज ।
रश्मिसममाङ्गमीविप्रु (!) भजनमाजनजैनजनार्जने ॥ १ ॥

## तदस्यास्त्यस्मिन्निति मतुः ॥७।२।१॥

तदितिप्रथमान्तादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे वा मतु प्रत्ययः स्यात् । यत्तत्प्रथमान्तमस्ति समानाधिकरणं चेद्भवति । गावोऽस्य सन्ति गोमान् । यवाः सन्त्यस्मिन् यवमान् ।

## मावर्णान्त्योपान्त्यापञ्चमवर्गान्मतोर्मो वः ॥२।१।९४॥

मश्चावर्णश्च मावर्णौ तौ प्रत्येकमन्तौ मान्तौ यस्य तस्मात्तथाऽपञ्चमवर्गान्ताच्च नाम्न परस्य मतोर्मकारस्य वकारादेशः स्यात् । किमस्यास्तीति किंवान् । इदंवान् । मकारोपान्त्यात् शमीवान् । लक्ष्मीवान् । अवर्णान्तात्, वृक्षवान् । मालावान् । अवर्णोपान्त्यात्, अर्हवान् । पयस्वान् । अपञ्चमवर्गात्, मरुत्वान् ।

## नस्तं मत्वर्थे ॥१।१।२३॥

सान्तं तान्तं नाम मत्वर्थे परे पदं न स्यात् । नास्ति यशस्वती । पय मास्ती नदी ।

## चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ॥२।१।९६॥

चर्मण्वत्यादयो नाम्नि निपाताः । चर्मण्वती नदी ।

## उदन्वानब्धौ च ॥२।१।९७॥

निपात । उदन्वान् घटो मेघश्च । यस्मिन् जल स्यात्स एवमुच्यते । नाम्नि उदन्वान् समुद्रः ।

## राजन्वान् सुराज्ञि ॥२।१।९८॥

राजन्वान् । सुराज्ञि निपातः । शोभनो राजा यस्यां सा राजन्वती भूः ।

## नोर्म्यादिभ्यः ॥२।१।९९॥

एभ्य परस्य मतोर्मस्य वत्व न स्यात् । ऊर्मिमान् । यवमान् । ककुद्मान् ।

## आयात् ॥७।२।२॥

गुणादिभ्यो य रूपात्प्रशस्तादृतादितिवक्ष्यमाणसूत्रे यावद्विषय आयः एतस्मात्प्रत्ययापा प्रकृतयो निर्दिश्यन्ते, ताभ्यो मतुः स्यात् ।

## नावादेरिकः ॥७।२।३॥

नौरस्यास्मिन् वास्तीति नाविकः । नौमान् ।

## शिखादिभ्य इन् ॥७।२।४॥

शिखी । शिखावान् । माली । मालावान् ।

## व्रीह्यादिभ्यस्तौ ॥७।२।५॥

व्रीहयोऽस्यास्मिन्वा सन्तीति व्रीहिकः । व्रीहिमान् ।

## अतोऽनेकस्वरात् ॥७।२।६॥

मत्वर्थे इक इन् एतौ स्तः । दण्डिकः । दण्डी । दण्डवान् । छत्रिकः । छत्री । छत्रवान् ।

## अर्थार्थान्ताद्भावात् ॥७।२।८॥

अर्थशब्दादर्थान्ताच्चाभाववाचिनो मत्वर्थे इक इन् एतौ स्तः । अर्थनमर्थः । सोऽस्यास्तीति अर्थिकः । अर्थी । प्रतीपमर्थेन प्रत्यर्थः सोऽस्यास्तीति प्रत्यर्थिकः । प्रत्यर्थी ।

## व्रीह्यर्थतुन्दादेरिलश्च ॥७।२।९॥

कलमा अस्यास्मिन् वा सन्ति कलमिलः । कलमिकः । कलमी । कलमवान् ।

## स्वाङ्गाद्विवृद्धात्ते ॥७।२।१०॥

इक इन इल् इति त्रयोऽपि स्युः । विवृद्धौ महान्तौ कर्णावस्य कर्णिलः । कर्णिकः । कर्णी । कर्णवान् ।

## वृन्दादारकः ॥७।२।११॥

मत्वर्थे । वृन्दारकः । वृन्दवान् ।

## शृङ्गात् ॥७।२।१२॥

शृङ्गारकः । शृङ्गवान् ।

## फलबर्हाच्चेनः ॥७।२।१३॥

फलिनः । फलवान् । बर्हिणः । बर्हवान् ।

## मलादीमसश्च ॥७।२।१४॥

मलीमसः । मलिनः । मलवान् ।

## मरुत्पर्वणस्तः ॥७।२।१५॥

मरुत्तः । मरुत्वान् । पर्वतः । पर्ववान् ।

## वलिवटितुण्डेर्भः ॥७।२।१६॥

वलिभ' । वटिभ' । तुण्डिभ' ।

## ऊर्णाहंशुभमो युस् ॥७।२।१७॥

ऊर्णायु' । उरभ' । अहंयु , अहङ्कारी । शुभंयु' कल्याणबुद्धि' ।

## कशंभ्यां युस्तियस्तुतवभम् ॥७।२।१८॥

कंयु' । शंयु' । कन्ति' । शन्ति' । कंय' । शंय' । कन्तु' । शन्तु' । कन्त' । शान्त' । कंव' । शंव' । कम्भ' । शम्भ' ।

## वलवातदन्तललाटादूलः ॥७।२।१९॥

वातूल' । ललाटूल' । मतुश्च ।

## प्राण्यङ्गादातोलः ॥७।२।२०॥

चूडाल' । जङ्घाल' । शिखाल' । चूडावान् ।

## सिध्मादिक्षुद्रजन्तुरुग्भ्यः ॥७।२।२१॥

सिध्मान्यस्य सन्ति सिध्मवान् । गडुल' । गडुमान् ।

## प्रज्ञापर्णोदकफेनाल्लेलौ ॥७।२।२२॥

प्रज्ञाल' । प्रज्ञिल' । प्रज्ञावान् । पर्णल' । पर्णिल' । पर्णवान् ।

## कालाजटाघाटात्क्षेपे ॥७।२।२३॥

कालाल' । कालिल' । काटाल' । काटिल' । जटाल' । जटिल' । घाटाल' । घाटिल' । क्षेपे मतुर्न ।

## वाच आलाटौ ॥७।२।२४॥

क्षेप या । वाचाल' । वाचाट' । मतुम ।

## ग्मिन् ॥७।२।२५॥

वाग्मी मत्वर्थे । वाग्ग्मी वाग्वान् । ( वाग्मान् ) । गकार' प्रत्यये चेल्लनुना सिवभिनृत्यर्थ' ।

## मध्वादिभ्यो र ॥७।२।२६॥

मधुर' । मधु माधुर्ये । गुण नु मधुर क्षीरम् ।

## कृष्यादिभ्यो वलच् ॥७।२।२७॥

कृषीवल' ।

## वलच्यपित्रादेः ॥३।२।८२॥

स्वराणां दीर्घः पित्रादिवर्जम्। दन्तावल'। कपिवलच्। रजस्वला।

## लोमपिच्छादेः शेलम् ॥७।२।२८॥

लोमश'। लोमवान्। रोमश'। रोमवान्। पिच्छिल'। पिच्छवान्

## नोऽङ्गादेः ॥७।२।२९॥

अङ्गान्यस्या अङ्गना। सुभगा स्त्री (शुभगात्री)। अन्यथाङ्गवती।

## शाकीपलालीदद्र्वो ह्रस्वश्च ॥७।२।३०॥

मन्यो न' स्यात्। तद्योगे ह्रस्वश्च। शाकिन' शाकीमान्। (शाकिमान्)। दद्रुणः। पलालिनः।

## विश्वचो विषुश्च ॥७।२।३१॥

विष्वग्गतान्यस्य सन्ति विषुण' सूर्यं।

## लक्ष्म्या अनः ॥७।२।३२॥

लक्ष्मीरस्यास्ति लक्ष्मणः।

## प्रज्ञाश्रद्धार्चावृत्तेर्णः ॥७।२।३३॥

प्राज्ञ'। श्राद्ध'। आर्च'। वार्त'।

## ज्योत्स्नादिभ्योऽण् ॥७।२।३४॥

ज्योत्स्नाऽस्मिन् ज्यौत्स्नः पक्ष'। ज्यौत्स्नी रात्रि'।

## सिकताशर्करात् ॥७।२।३५॥

सैकत'। शार्कर'।

## इलश्च देशे ॥७।२।३६॥

सिकतिल'। सैकत'।

## द्युद्रोर्मः ॥७।२।३७॥

द्युशब्द उकारान्त'। द्युमो देव'। द्रोर्भूर्याऽस्मिन् द्रुम'। द्रुम'।

## काण्डाण्डभाण्डादीरः ॥७।२।३८॥

काण्डीरः।

## कच्छ्वा डुरः ॥७।२।३९॥

कच्छुरः।

दन्तादुन्नतात् ॥७।२।४०॥

दन्तुरः ।

मेघारथान्नवेरः ॥७।२।४१॥

मेघिरः । रथिरः ।

कृपाहृदयादालुः ॥७।२।४२॥

कृपालुः । हृदयालुः ।

केशाद्वः ॥७।२।४३॥

केशवः । केशी । केशवान् । केशिकः । केशव इति विष्णुवाची स्वशब्दोऽयम् ।

मण्यादिभ्यः ॥७।२।४४॥

मणिलः ।

हीनात्स्वाङ्गादः ॥७।२।४५॥

कर्णः कर्णोऽस्यास्तीति कर्णः ।

अभ्रादिभ्यः ॥७।२।४६॥

मत्वर्थे अः स्यात् । अभ्राण्यस्मिन्नभ्रम् नभः ।

अस्तपोमायामेधास्रजो विन् ॥७।२।४७॥

यशस्वी । यशस्वान् ।

आमयाद्दीर्घश्च ॥७।२।४८॥

आमयावी ।

स्वान्मिन्नीशे ॥७।२।४९॥

मिन्प्रत्ययस्तस्य प्रकृतेर्दीर्घः । स्वामी ।

गोः ॥७।२।५०॥

मिन् । गोमी ।

ऊर्जोविन्वलावश्चान्तः ॥७।२।५१॥

ऊर्ज् शब्दान्मत्वर्थे विन्वलावेतौ प्रत्ययौ स्तः । प्रकृते आस् चान्तः । ऊर्जस्वी । ऊर्जस्वलः । ऊर्जवान् ।

## तमिस्रार्णवज्योत्स्नाः ॥७।२।५२॥

निपातः ।

## गुणादिभ्यो यः ॥७।२।५३॥

गुण्यः पुरुषः । हिम्यः पर्वतः । गुणवान् । हिमवान् ।

## रूपात्प्रशस्ताहतात् ॥७।२।५४॥

प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । आहतं रूपमस्यास्मिन् रूप्यः कार्षापणः । मायादिस्त्वस्य पूर्णोऽवधिः ।

## पूर्णमासोऽण् ॥७।२।५५॥

पूर्णमाश्च प्रोऽस्यामस्ति पौर्णमासी ।

## गोपूर्वादत इकण् ॥७।२।५६॥

गौशतिकः ।

## निष्कादेः शतसहस्रात् ॥७।२।५७॥

नैष्कशतिकः ।

## एकादेः कर्मधारयात् ॥७।२।५८॥

एका गौरेकगवः । सोऽस्यास्तीत्यैकगविकः ।

## सर्वादेरिन् ॥७।२।५९॥

सर्वं धनं सर्वधनम् । तदस्यास्तीति सर्वधनी ।

## वातातीसारपिशाचात्कश्चान्तः ॥७।२।६१॥

वातादेरिन्, कश्चान्तः । वातकी ।

## पूरणाद्वयसि ॥७।२।६२॥

पञ्चमो मासोऽस्यास्तीति पञ्चमी बालकः ।

## सुखादेः ॥७।२।६३॥

सुखी ।

## मालायाः क्षेपे ॥७।२।६४॥

माली ।

## धर्मशीलवर्णान्तात् ॥७।२।६५॥

मुनिधर्मी । यतिशीली । ब्राह्मणवर्णी ।

## बाह्वूर्वादेर्बलात् ॥७।२।६६॥

बाहुबली ।

## मन्माब्जादेर्नाम्नि ॥७।२।६७॥

मन्नन्तेभ्य इन् नाम्नि । दामिनी । मान्तेभ्यश्च, यमिनी । भामिनी । अब्जादेरपि, अब्जिनी । कमलिनी ।

## हस्तदन्तकराज्जातौ ॥७।२।६८॥

हस्तोऽस्यास्तीति हस्ती । करी ।

## वर्णाद्ब्रह्मचारिणि ॥७।२।६९॥

वर्णो ब्रह्मचर्यम् । तदस्यास्तीति वर्णी ।

## पुष्करादेर्देशे ॥७।२।७०॥

पुष्करिणी देशः ।

## प्रकारे जातीयर् ॥७।२।७५॥

पटुः प्रकारोऽस्य पटुजातीयः ।

## षष्ठ्या रूप्यप्चरट् ॥७।२।८०॥

षष्ठ्याः स्यः । राज्ञो भूतपूर्वोऽश्वो राजरूप्यः । राजचरः ।

## भूतपूर्वे प्चरट् ॥७।२।७८॥

स्वार्थे । भूतः पूर्वं आढ्यः आढ्यचरः ।

## व्याश्रये तसु. ॥७।२।८१॥

नानापक्षाश्रयणे गम्ये षष्ठ्यन्तात्तसुः स्यात् । देवा अर्जुनतः । अभवन् । रविः कर्णतः । कर्णतस्य ।

## पर्यभेः सर्वोभये ॥७।२।८३॥

परितः । अभितः ।

## आद्यादिभ्यः ॥७।२।८४॥

आदितः । मध्यतः । अग्रतः । अन्ततः ।

## क्षेपातिग्रहाव्यथेष्वकर्तुस्तृतीयायाः ॥७।२।८५॥

वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः ।

## पापहीयमानेन ॥७।२।८६॥

आभ्यां योगेऽकर्तृवाचिनस्तृतीयान्तात्तसुः स्यात् । वृत्तेन पापो वृत्ततः पापः । वृत्तेन हीयते वृत्ततो हीयते ।

## प्रतिना पञ्चम्याः ॥७।२।८७॥

श्रीहीरगुरुर्गौतमतः प्रति गौतमतुल्यः । माषानस्मै तिलेभ्यः प्रतियच्छति तिलतः प्रतियच्छति ।

## अहीयरुहोऽपादाने ॥७।२।८८॥

तसुर्वा स्यात् । ग्रामतः आगच्छति ग्रामाद्वा । चौरतश्चौराद्वा बिभेति । अहीयरुहः इति किम्? सार्थाद्धीयते । पर्वतादवरोहति ।

## किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस् ॥७।२।८९॥

किंशब्दाद्द्व्यादिवर्जं सर्वादेरवैपुल्यवाचिनो बहुशब्दाच्च पञ्चम्यास्तस् स्यात् स च पित् । कस्मात्कुतः । सर्वतः । यतः । ततः । बहुतः । अनेन ह्रस्वत्वं स्यात् ।

## इतोऽतः कुतः ॥७।२।९०॥

एते निपाताः । इदम् इतः । एतद् अतः । किम् कुतः ।

## भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात् ॥७।२।९१॥

एतैः समानाधिकरणात्किमद्व्यादीति सूत्रोक्तात्पित्तस् स्यात् । स भवान् । ततो भवान् । तौ भवन्तौ । ततो भवन्तौ । ते भवन्तः इत्यादि सर्वासु विभक्तिषु ज्ञेयम् ।

## त्रप् च ॥७।२।९२॥

प्राग्वदेव विधिः । स भवान् । तत्रभवान् । तौ भवन्तौ । तत्रभवन्तौ । इत्यादिवत् । सप्तम्या तु तस्मिन् भवति । तत्र भवति । ततो भवति द्वैरूप्यम् ।

## क्वकुत्रात्रेह ॥७।२।९३॥

एते त्रबन्ता निपाताः ।

## सप्तम्याः ॥७।२।९४॥

सप्तम्यन्तात्किमद्व्यादीतिसूत्रोक्तात् त्रप् प्रत्ययः स्यात् । कस्मिन् कुत्र । सर्वत्र । यत्र । तत्र । बहुत्र । पित्करणात्सुपश्चाभावे बहीषु बहुत्र ।

धर्मशीलवर्णान्तात् ॥७।२।६५॥

मुनिधर्मी । यतिशाली । ब्राह्मणवर्णी ।

बाह्वूर्वादेर्बलात् ॥७।२।६६॥

बाहुबली ।

मन्माब्जादेर्नाम्नि ॥७।२।६७॥

मन्नन्तेभ्य इन् नाम्नि । दामिनी । मान्तेभ्यश्च, प्रथमिनी । भामिनी । अब्जादेरपि, अब्जिनी । कमलिनी ।

हस्तदन्तकराज्जातौ ॥७।२।६८॥

हस्तोऽस्यास्तीति हस्ती । करी ।

वर्णाद्ब्रह्मचारिणि ॥७।२।६९॥

वर्णो ब्रह्मचर्यम् । तदस्यास्तीति वर्णी ।

पुष्करादेर्देशे ॥७।२।७०॥

पुष्करिणी देशः ।

प्रकारे जातीयर् ॥७।२।७५॥

पटुः प्रकारोऽस्य पटुजातीयः ।

षष्ठ्या रूप्यप्चरट् ॥७।२।८०॥

षष्ठी स्वः । राज्ञो भूतपूर्वोऽश्वो राजरूप्यः । राजचरः ।

भूतपूर्वे प्चरट् ॥७।२।७८॥

स्वार्थे । भूतः पूर्वं आढ्यः आढ्यचरः ।

व्याश्रये तसु. ॥७।२।८१॥

नानापक्षाश्रयेऽर्थे गम्ये षष्ठ्यन्तात्तसुः स्यात् । देवा अर्जुनतः । अर्जुनपक्षे । रविः कर्णतः । कर्णपक्षे ।

पर्यभे सर्वोभये ॥७।२।८३॥

परितः । अभितः ।

आद्यादिभ्य ॥७।२।८४॥

आदितः । मध्यतः । अन्ततः । अग्रतः ।

## क्षेपातिग्रहाव्यथेष्वकर्तुस्तृतीयायाः ॥७।२।८५॥

वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः ।

## पापहीयमानेन ॥७।२।८६॥

आभ्यां योगेऽकर्तृवाचिनस्तृतीयान्तात्तसुः स्यात् । वृत्तेन पापो वृत्ततः पापः । वृत्तेन हीयते वृत्ततो हीयते ।

## प्रतिना पञ्चम्याः ॥७।२।८७॥

श्रीहीरगुरुर्गौतमतः प्रति गौतमतुल्यः । माषानस्मै तिलेभ्यः प्रतियच्छति तिलतः प्रतियच्छति ।

## अहीयरुहोऽपादाने ॥७।२।८८॥

तसुर्वा स्यात् । ग्रामत आगच्छति ग्रामाद्वा । चौरतश्चौराद्वा बिभेति । अहीयरुह इति किम्? सार्थाद्धीयते । पर्वतादवरोहति ।

## किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस् ॥७।२।८९॥

किंशब्दाद्द्व्यादिवर्जसर्वादेरवैपुल्यवाचिनो बहुशब्दाच्च पञ्चम्यास्तस् स्यात् स च पित् । कस्मात्कुतः । सर्वतः । यतः । ततः । बहुतः । अनेन ह्रस्वत्वं स्यात् ।

## इतोऽतः कुतः ॥७।२।९०॥

एते निपात्याः । इदम् इतः । एतद् अतः । किम् कुतः ।

## भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात् ॥७।२।९१॥

एतैः समानाधिकरणात्किमद्व्यादीति सूत्रोक्तात्पित्तस् स्यात् । स भवान् । ततो भवान् । तौ भवन्तौ । ततो भवन्तौ । ते भवन्तः इत्यादि सर्वासु विभक्तिषु ज्ञेयम् ।

## त्रप् च ॥७।२।९२॥

प्रागुक्तेष्वेव विषये । स भवान् । तत्रभवान् । तौ भवन्तौ । तत्रभवन्तौ । इत्यादिवत् । सप्तम्यां तु तस्मिन् भवति । तत्र भवति । ततो भवति त्रैरूप्यम् ।

## क्वकुत्रात्रेह ॥७।२।९३॥

एते त्रबन्ता निपात्याः ।

## सप्तम्याः ॥७।२।९४॥

सप्तम्यन्तात्किमद्व्यादीतिसूत्रोक्तात् त्रप् प्रत्ययः स्यात् । कस्मिन् कुत्र । सर्वत्र । यत्र । तत्र । बहुत्र । पित्करणात्पुंवद्भावे बह्वीषु बहुत्र ।

## कियत्तत्सर्वैकान्यात्काले दा ॥७।२।९५॥

कस्मिन् कदा । यदा । तदा । सर्वदा । एकदा । अन्यदा ।

## सदाधुनेदानींतदानीमेतर्हि ॥७।२।९६॥

एते निपाताः कालेऽर्थे ।

## सद्योऽद्यपरेद्यव्यह्नि ॥७।२।९७॥

एते निपाता अह्नि वाच्ये । समानेऽह्नि सद्यः । अस्मिन्नहनि अद्य । परस्मिन्नहनि परेद्यवि ।

## पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् ॥७।२।९८॥

पूर्वेद्युः । इत्यादि ।

## उभयाद् द्युश्च ॥७।२।९९॥

चादेद्युस् । उभयस्मिन्नहनि उभयद्युः । उभयेद्युः ।

## ऐषमः परुत्परारि वर्षे ॥७।२।१००॥

अस्मिन् वर्षे ऐषमः । पूर्वस्मिन् परस्मिन् वा परुत् । पूर्वतरे परतरे वा वर्षे परारि ।

## अनद्यतनेर्हि. ॥७।२।१०१॥

कस्मिन्ननद्यतने काले कर्हि । यर्हि । तर्हि । अन्यर्हि । एतस्मिन् काले एतर्हि । अमुष्मिन् अमुर्हि । यमुर्हि ।

## प्रकारे था ॥७।२।१०२॥

सर्वेण प्रकारेण सर्वथा । यथा । तथा । उभयथा । अन्यथा ।

## कथमित्थम् ॥७।२।१०३॥

निपातौ । केन प्रकारेण कथम् । अनेन एतेन वा इत्थम् ।

## सङ्ख्याया धा ॥७।२।१०४॥

एकेन प्रकारेण एकधा । द्विधा । त्रिधा । चतुर्धा । शतधा । बहुधा । गणधा । कतिधा । यावद्धा । तावद्धा ।

## विचाले च ॥७।२।१०५॥

विचालो द्रव्यस्य सङ्ख्यात्यागः । परसङ्ख्यापत्तिः । एकस्यानेकीभावः । तस्मिन् गम्ये सङ्ख्याया धा स्यात् । एको राशिर्द्वौ क्रियेत द्विधा क्रियते । त्रिधा

क्रियते। एको राशिर्द्विधा भवति। त्रिधा भवति। द्विः करोति। एवमन्योपि। अनेक एकः क्रियते एकधा क्रियते।

## वैकाद्ध्यमञ् ॥७।२।१०६॥

एकशब्दात्प्रकारे विधार्थे च वाच्ये ध्यमञ् प्रत्ययः स्यात्। एकेन प्रकारेणैकध्यम्। एकधा भुङ्क्ते। अनेकमेकं करोति ऐकध्यं करोति।

## द्वित्रेर्द्धमञेधौ वा ॥७।२।१०७॥

द्वाभ्यां प्रकाराभ्यां द्वैधम्। त्रैधम्। द्वेधा। त्रेधा। वा वचनात्, द्विधा। त्रिधा वा। एकं राशिं द्वौ करोति द्वैधम्। त्रैधम्। द्विधा। त्रिधा। द्वेधा त्रेधा करोति।

## तद्वति धण् ॥७।२।१०८॥

द्वित्रिभ्यां तद्वति प्रकारवति विधावति चाऽभिधेये धण् प्रत्ययः स्यात्। द्वौ प्रकारौ भागौ वा एषां द्वैधानि। त्रैधानि। राजद्वैधानि। राजत्रैधानि। द्वैधीभावः। त्रैधीभावः।

## वारे कृत्वस् ॥७।२।१०९॥

वारः क्रियाया आवृत्तिस्तस्मिन् सङ्ख्याया वारवति वाऽर्थे कृत्वस् स्यात्। पञ्च वारा अस्य पञ्चकृत्वो भुङ्क्ते।

## द्वित्रिचतुरः सुच् ॥७।२।११०॥

द्वौ वारावस्य द्विर्भुङ्क्ते त्रिर्भुङ्क्ते चतुर्भुङ्क्ते।

## एकात्सकृच्चास्य ॥७।२।१११॥

एकं वारं भुङ्क्ते सकृद्भुङ्क्ते। पदस्येति सलोपः।

## बहोर्द्धासन्ने ॥७।२।११२॥

बहवः आसन्ना वारा अस्य बहुधा भुङ्क्ते।

## दिक्शब्दाद्दिग्देशकालेषु प्रथमापञ्चमी-सप्तम्याः ॥७।२।११३॥

स्वार्थे धा स्यात्। प्राची दिग् रमणीया प्राग् रमणीयम् १, प्राग्देशो रमणीयः

प्राग्रमणीयः २, प्राक्कालो रमणीयः प्राग्रमणीयः ३। प्राच्या दिशः, प्राचो देशात्, प्राचः कालात् आगतः, सर्वत्र प्रागागत इत्येवम्। प्राच्यां दिशि, प्राचि देशे २ वा वसति प्राग्वसति। लुबञ्चेरिति धालुप्। लुपि सत्यां ङ्यादेरित्यादिना ङीलुप्।

## ऊर्ध्वाद्रिरिष्टातावुपश्चास्य ॥७।२।११४॥

दिगादिद्वये प्रथमादित्रयान्तात् रिरिष्टात् एतौ स्तः। आपवादः। ऊर्ध्वस्य उप इत्यादेशः। उपरि रम्यम् उपरिष्टाद्रम्यम् आगतः वसति इति दिशि देशे चोदाहरणम्।

## पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम् ॥७।२।११५॥

एभ्यो दिगाद्यर्थेषु प्रथमाद्यन्तेभ्योऽस् अस्तात् प्राग्विधिनैव स्यात्। परा दिग् देशः कालो वा रम्यः परस्ताद्रम्यः। एवमपरस्ताद्रम्यः।

## दक्षिणोत्तराच्चातस् ॥७।२।११७॥

प्रागुक्तविधिनैवातस् स्यात्। दक्षिणा दिग् देशो वा रम्यो दक्षिणतो रम्यः। उत्तरा दिग्देशः कालो वा रम्य उत्तरतो रम्यः। एवं परतो रम्यम्। अपरतो रम्यम्। एवं चापरशब्दस्य चातूरूप्यम्। दक्षिणशब्दः कालेऽसम्भवाति दिग्देशवृत्तिरेव।

## अधरापराच्चात् ॥७।२।११८॥

प्रागुक्तविधिनैव आत्प्रत्ययः। चकाराद्दक्षिणोत्तराभ्यां च। अधरा दिग् देशः कालो वा रम्यः अधराद्रम्यः। एवं चापरशब्दस्य त्रैरूप्यम्।

## वा दक्षिणात्प्रथमासप्तम्या आः ॥७।२।११९॥

दक्षिणा रम्यम्। दक्षिणावसति। पक्षेऽतसातौ। दक्षिणतो रम्यम्। दक्षिणाद्रम्यम्। आ प्रत्ययः पञ्चम्यन्तान्न। दक्षिणत आगतः। दक्षिणादागतः।

## आहि दूरे ॥७।२।१२०॥

दूरे दिशि देशे वा दक्षिणशब्दाद्वा आहि इत्येतौ स्तः। ग्रामाद्दूरा दक्षिणा दिग् देशो वा रम्यः। एवं दक्षिणाहि रम्यः।

## वोत्तरात् ॥७।२।१२१॥

प्रथमा सप्तम्यन्तात् आ आही स्तः । उत्तरा रम्यम् । उत्तराहि रम्यम् । पक्षे अतसातौ । उत्तरतः । उत्तरात् ।

## अदूरे एनः ॥७।२।१२२॥

दिगाद्यर्थेषु प्रथमासप्तम्यन्तात् दिक्शब्दाददूरे एन प्रत्ययः स्यात् । अस्याः पूर्वा अदूरा दिग् रम्या देशः कालो वा । पूर्वेणास्य परस्य पूर्वेणास्य वसति ।

## लुबञ्चेः ॥७।२।१२३॥

अञ्चत्यन्ताद्दिगाद्यर्थेषु प्रथमासप्तम्यन्तात् यः प्रत्ययो विहितः आ एनो वा तस्य लुप्स्यात् । प्राची दिगदूरा वा रम्या प्राग् रम्या । रम्यो देशः कालो वा रम्यः पश्चाद्रम्यः । तल्लुपि स्त्रीप्रत्ययस्यापि लुप् ।

## पश्चोपरस्य दिक्पूर्वस्य चाति ॥७।२।१२४॥

अपरशब्दस्य केवलस्य दिक्पूर्वस्य चातौ प्रत्यये परे पश्चादेशः स्यात् । अपरा दिग्देशः कालो वा रम्यः पश्चाद्रम्यः । दक्षिणा च सा अपरा च दक्षिणापरा दिक् देशो रम्यः दक्षिणपश्चाद्रम्यः । एवमुत्तरपश्चाद्रम्यम् ।

## वोत्तरपदेऽर्द्धे ॥७।२।१२५॥

अपरमर्द्धं पश्चार्द्धम् अपरार्द्धं वा ।

## कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः ॥७।२।१२६॥

करोतेः कर्मणः अस्तिभ्वोश्च प्राक् पूर्वमतद्रूपस्य तत्त्वे गम्यमाने नाम्नश्च्विः प्रत्ययः स्यात् । प्राग् अशुक्लं शुक्लं करोति शुक्लीकरोति पटम् । अशुक्लः शुक्लो भवति शुक्लीभवति । शुक्लीस्यात् ।

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ ॥७।२।१२७॥

एषामन्तस्य लुक् स्याच्च्वौ परे । अनरुः अरुः करोति अरूकरोति । अरू भवति । अरूस्यात् । महारूकरोति । मनीकरोति । उन्मनीकरोति ।

## इसुसोर्बहुलम् ॥७।२।१२८॥

लुप् । असर्पिः सर्पिः करोति सर्पीकरोति नवनीतम् । बाहुलकात् भवति । सर्पिः करोति ।

## व्यञ्जनस्यान्त ईः ॥७।२।१२९॥

दृषदीभवति शिला । दृषद्भवतीत्यपि ।

## व्याप्तौ स्सात् ॥७।२।१३०॥

कर्मकर्तृभ्यां प्रागतत्त्वे व्याप्तौ सर्वात्मना द्रव्येणाभिसम्बन्धे, तस्यां गम्यमानायां कृभ्वस्तियोगे सात्स्यात् । अनग्निमग्निं करोति अग्निसात्करोति ।

## जातेः सम्पदा च ॥७।२।१३१॥

कृभ्वस्तिभिः सम्पदा च योगे करोतेः कर्मणः कृभ्वस्तिकर्तुः सम्पदिकर्तुश्च प्रागतत्त्वे जातेः समानस्य व्याप्तौ सात्प्रत्ययः । अस्यां सेनायां सर्वशस्त्रमग्निसात्करोति भवति । अग्निसात्सम्पद्यते ।

## तत्राधीने ॥७।२।१३२॥

कृभ्वस्तिभ्यां कर्मकर्तृभ्यामिति चानुवर्तते । तत्रेतिसप्तम्यन्तात्कृभ्वस्तिसम्पद्योगे सात्स्यात् । राजनि अधीनं राजसात् ।

## देये त्रा च ॥७।२।१३३॥

देवेऽधीनं देयं करोति देवत्रा करोति ।

## सप्तमीद्वितीयान्ताद्देवादिभ्यः ॥७।२।१३४॥

स्वार्थे त्रा वा स्यात् । देवेषु वसति । देवत्रा वसति । देवान् करोति । देवत्रा करोति ।

## तीयशम्बबीजात्कृगाकृषौ डाच् ॥७।२।१३५॥

कृगा कृषौ डाच् । क्षेत्रं द्वितीयवारं करोति द्वितीया करोति क्षेत्रम् । शम्बाकरोति । बीजाकरोति क्षेत्रम् ।

## सङ्ख्यादेर्गुणात् ॥७।२।१३६॥

द्विगुणं कर्षणं करोति द्विगुणाकरोति ।

## समयाद्यापनायाम् ॥७।२।१३७॥

समयाकरोति तन्तुवायः । अद्य श्वः पटं दास्यामीति कालक्षेपं करोतीत्यर्थः ।

## सपत्रनिष्पत्राददतिव्यथने ॥७।२।१३८॥

डाच् । सपत्राकरोति मृगम् ।

## निष्कुलान्निष्कोषणे ॥७।२।१३९॥

दाडिमं निष्कुलाकरोति । बीजनिष्काशनं करोतीत्यर्थः ।

## प्रियसुखादानुकूल्ये ॥७।२।१४०॥

डाच् । प्रियाकरोति गुरुम् । सुखाकरोति । गुरोरानुकूल्यं करोतीत्यर्थः ।

## दुःखात्प्रातिकूल्ये ॥७।२।१४१॥

दुःखाकरोति शत्रुम् । शत्रोः प्रतिकूलं करोतीत्यर्थः ।

## शूलात्पाके ॥७।२।१४२॥

शूलाकरोति मांसम् ।

## सत्यादशपथे ॥७।२।१४३॥

डाच् । सत्याकरोति वणिग्भाण्डम् ।

## मद्रभद्राद्वपने ॥७।२।१४४॥

डाच् । मद्रं वपनं करोति मद्राकरोति । भद्राकरोति ।

## अव्यक्तानुकरणादनेकस्वरात्कृभ्वस्तिना अनितौ द्विश्च ॥७।२।१४५॥

पटत्करोति । पटपटाकरोति ।

## डाच्यादौ ॥७।२।१४९॥

अव्यक्तानुकरणस्यानेकस्वरस्याच्छब्दान्तस्य द्वित्वे सत्यादौ पूर्वपदस्यान्तत-कारस्य लुक्स्यात् । पटपटाकरोति ।

## बह्वल्पार्थात्कारकादिष्टानिष्टेप्शस् ॥७।२।१५०॥

बहूनि धनं ददाति बहुशो धनं ददाति । अल्पशो धनं ददाति । अबहल्पार्थत्वे गां ददाति न शस् ।

## संख्यैकार्थाद्वीप्सायां शस् ॥७।२।१५१॥

संख्यावाचिन एकत्वविशिष्टार्थवाचिनश्च कारकाभिधायिनो नाम्नो वीप्सायां द्योत्यायां शस् स्यात् । एकैकं ददाति एकशो ददाति । द्वौ द्वौ द्विशः । त्रिशः । तावच्छः । कतिशः । गणशः । एकार्थे माषं माषं देहि माषशो देहि ।

## सङ्ख्यादेः पादादिभ्यो दानदण्डे चाकल्लुक् च ॥७।२।१५२॥

सङ्ख्यायाः पादन्ताभ्यां दानदण्डे च वीप्सायां विषयेऽकल् स्यात्, तद्योगे प्रकृतेरन्त्यस्य लुक् स्यात्। द्वौ पादौ ददाति द्विपदिकां ददाति। द्वौ पादौ दण्डितः द्विपदिकां दण्डितः। द्वे शते व्यवसृजति द्विशतिकां व्यवसृजति। द्विशतिकां दण्डितः। वीप्सायां, द्वौ द्वौ पादौ भुङ्क्ते द्विपदिकां भुङ्क्ते।

## तीयाट्टीकण् न विद्या चेत् ॥७।२।१५३॥

स्वार्थे। द्वितीयमेव द्वैतीयीकम्। तृतीयम्। तार्तीयीकम्।

## निष्फले तिलात्पिञ्जपेजौ ॥७।२।१५४॥

निष्फलस्तिलः तिलपिञ्जः। तिलपेजः।

## प्रायोऽतोर्द्वयसट्मात्रट् ॥७।२।१५५॥

यावदेव यावद्द्वयसम्। यावन्मात्रम्।

## मर्त्तादिभ्यो यः ॥७।२।१५९॥

मर्त एव मर्त्यः। सुर एव सुर्य्यः। भाग्यम्।

## नामरूपभागाद्धेयः ॥७।२।१५८॥

स्वार्थे। नामैव नामधेयम्। रूपधेयम्। भागधेयम्।

## नवादीनतनत्न च नू चास्य ॥७।२।१६०॥

नवमेव नवीनम्। नूतनम्। नूत्नम्। नव्यम्। चकाराद्यप्रत्ययोऽपि।

## देवात्तल् ॥७।२।१६२॥

स्वार्थे। देव एव देवता।

## प्रात्पुराणे नश्च ॥७।२।१६१॥

स्वार्थे। चकारादीनतनत्नाश्च। प्रगतं कालेन पुराणमुच्यते। प्रणम्। प्रीणम्। प्रतनम्। प्रत्नम्।

## होत्राया ईयः ॥७।२।१६३॥

स्वार्थे। होत्रमेव होत्रीयम्।

## भेषजादिभ्यष्ट्यण् ॥७।२।१६४॥

भेषजमेव भैषज्यम्। अनन्तमेव आनन्त्यम्। ऐतिह्यम्। चातुर्वर्ण्यम्।

## प्रज्ञादिभ्योऽण् ॥७।२।१६५॥

स्वार्थे। प्रजानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञः । प्राज्ञी कन्या । वणिगेव वाणिजः ।

## श्रोत्रौषधिकृष्णाच्छरीरभेषजमृगे ॥७।२।१६६॥

स्वार्थेऽण्। श्रोत्राच्छरीरे, श्रोत्रमेव श्रौत्रम् शरीरम् । श्रोत्रमेवान्यत्। ओषधिरेवौषधम् ।

## कर्मणः सन्दिष्टे ॥७।२।१६७॥

स्वार्थेऽण्। कर्मैव कार्मणम्। सन्दिष्टं कर्म करोतीत्यर्थः ।

## वाच इकण् ॥७।२।१६८॥

सन्दिष्टेऽर्थे वाक्शब्दात्स्वार्थिकण्। वागेव वाचिकम् वक्ति। मित्यं विधिद्वयम्।

## विनयादिभ्यः ॥७।२।१६९॥

स्वार्थे इकण् वा स्यात्। विनय एव वैनयिकम्। समय एव सामयिकम्।

## उपायाद्ध्रस्वश्च ॥७।२।१७०॥

स्वार्थे इकण्वा स्यात् तद्योगे ह्रस्वश्च। उपाय एवौपयिकम्।

## मृदस्तिकः ॥७।२।१७१॥

स्वार्थे। मृदेव मृत्तिका।

## सस्नौ प्रशस्ते ॥७।२।१७२॥

मृद्शब्दात्प्रशस्तेऽर्थे सस्न एतौ स्तः। प्रशस्ता मृत् मृत्स्ना। मृद्रूपा इत्यपि।

इति मत्वर्थिकाधिकारः ॥

---

राजीमतीत्याभयसाधनानां, राजीमतीत्याजयिषी घनानाम्।
शिवानुग विजहौतमेमि (?) समुद्रजन्मा वसुधाऽनुधात्तु (?) ॥ १ ॥

## प्रकृते मयट् ॥७।३।१॥

प्राचुर्येण प्राधान्येन च कृत प्रकृतम् । तस्मिन्नर्थे नाम्नो मयट् स्यात्। अन्नं प्रकृतम् अन्नमयम्। दधिमयम्। स्त्रकारोऽस्त्र्यर्थ । यवागूमयी। स्वार्थिकाः प्रत्यया सिद्धवचने अतिवर्तन्तेऽपि। यवागूः प्रकृता यवागूमयम्।

## अस्मिन् ॥७।३।२॥

सप्तम्यर्थे मयट्। अन्नं प्रकृतमस्मिन्नन्नमयं भोजनम्।

## तयोः समूहवच्च बहुषु ॥७।३।३॥

प्रकृतविषये सप्तम्यर्थे विषये च बहुषु वर्तमानात्प्रातिपदिकात् समूहवत्प्रत्ययः स्यात्। चकारान्मयट् च। अपूपाः प्रकृता आपूपिकम्। अपूपमयं पर्व। धैनुकम्। धेनुमयम्।

## निन्द्ये पाशप् ॥७।३।४॥

निन्द्यो भिषग् भिषक्पाशः।

## प्रकृष्टे तमप् ॥७।३।५॥

सर्वे शुक्लाः पटाः, अयमेषां प्रकृष्टः शुक्लः शुक्लतमो गौरयम्। यः सुतरां शकटं वहति गोतमोऽयम्। इयं गोतमा। या प्रतिवर्षं विजायते।

## द्वयोर्विभज्ये च तरप् ॥७।३।६॥

द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुः पटुतरः।

## क्वचित् स्वार्थे ॥७।३।७॥

अभिन्नमेव अभिन्नतरकम्। उच्चैरेवोच्चैस्तराम्।

## किन्त्याद्येऽव्ययादसत्त्वे तयोरन्तस्याम् ॥७।३।८॥

क्रियाप्रधानात्तिङन्तात् एकारान्ताद्व्ययेभ्यश्च परयोः तरप्तमप्प्रत्यययोरन्तस्यामादेशः स्यात् अद्रव्ये। द्वयमनयोरतिशयेन किं पचति किंतरां पचति। इदमेषामतिशयेन किं पचति किन्तमां पचति। एवं द्वयोर्विभागे पठतितराम्। बहूनां पठतितमाम्। प्रगेतराम्। प्रगेतमाम्। नितराम्। सुतराम्। नतराम्। असत्त्वे किम्? उच्चैस्तरस्तरुः। पटु पटुतरः। पटुतमः।

## गुणाङ्गाद्वेष्ठेयसू ॥७।३।९॥

अयमेषामतिशयेन पटुः पटिष्ठः। पटुतमः। अयमनयोरतिशयेन पटुः पटीयान्। पटुतरः। एवं लघिष्ठः। गरिष्ठः। लघीयान्। गरीयान्।

## त्यादेश्च प्रशस्ते रूपप् ॥७।३।१०॥

प्रशस्तं पठति पठतिरूपम्। अत्र क्लीबे एकवचनमेव। क्रियाप्रधानत्वात्। पण्डितरूपः। पकारः पुंवद्भावार्थः।

## अतमबादेरीषदसमाप्ते कल्पप्देश्यप्देशीयर् ॥७।३।११॥

ईषदसमाप्तं पचति पचतिकल्पम्। पचतिदेश्यम्। पचतिदेशीयम्।

## नाम्नः प्राग्बहुर्वा ॥७।३।१२॥

ईषदसमाप्तेऽर्थे नाम्नो बहुप्रत्ययः स्यात्। स च प्रकृतेः प्राक् न परः। ईषद् समाप्तः पटुः। बहुपटुः। बहुगुडकम्। बहुगुडा द्राक्षा। पक्षे कल्पयादयः।

## न तमबादि. कपोऽच्छिन्नादिभ्यः ॥७।३।१३॥

छिन्नादिवर्जमन्यस्मात्कप्प्रत्ययान्तात्तमबादिर्न स्यात्। अयमेषां प्रकृष्टः पटुकः। अयमनयोः प्रकृष्टः पटुकः। नात्र तमप्। न तरप्। प्रकर्षवत्यपि कुत्सि तत्वादिविवक्षाया तमबादिः स्यात्। अयमेषां प्रकृष्टः पटुः कुत्सितः पटुतमकः। अयमनयोः पटुतरकः।

## अनत्यन्ते ॥७।३।१४॥

अस्मिन्नर्थे कबन्तात्तु तमबादि। अनत्यन्तं छिन्नं छिन्नकम्। इदमेषां प्रकृष्टं छिन्नकमित्येव। इदमनयोर्भिन्नं भिन्नकम्।

## यावादिभ्यः कः ॥७।३।१५॥

स्वार्थे। याव एव यावकः। मणिरेव मणिकः। अस्याकृतिगणत्वात् भिन्नत रकम्। बहुतरकम् सिद्ध्यति।

## कुमारीक्रीडने यसोः ॥७।३।१६॥

स्वार्थे कः। कन्दुरेव कन्दुकः। उत्कण्ठकः। समुद्गकः। दोलिका। ईषस न्तात्, श्रेयानेव श्रेयस्कः।

## लोहितान्मणौ ॥७।३।१७॥

स्वार्थे। लोहित एव लोहितको मणिः। कथित। लोहितो मणिः।

## रक्तानित्यवर्णयोः ॥७।३।१८॥

रक्ते लोहित एव लोहितकः पटः। अनित्यवर्णे, लोहितकं नेत्ररूपम् कोपेन।

## कालात् ॥७।३।१९॥

कप्रत्ययादिना रक्तेऽनित्ये वा वर्णेऽर्थे कः स्यात्। काल एव कालकः पटः। अनित्यवर्णे कालकं मुखम् वैलक्ष्येण।

## शीतोष्णादृतौ ॥७।३।२०॥

कः। शीत एव शीतकः ऋतुः। एवमुष्णकः।

## लूनवियातात्पशौ ॥७।३।२१॥

स्वार्थे कः। लून एव लूनकः। वियातकः पशुः। स्तब्धाशून्यः।

## स्नाताद्वेदसमाप्तौ ॥७।३।२२॥

वेदं समाप्य स्नातः स्नातकः।

## तनुपुत्राणुबृहतीशून्यात्सूत्रकृत्रिमनिपुणाच्छादनरिक्ते ॥७।३।२३॥

एष्वर्थेषु कः। तनौ सूत्रं तनुकम्। मक्षिकादिमयम्, कल्पादिषु कृत्रिमाः पुत्राः पुत्रकाः। निपुणो निष्णातोऽणकः अणकाः व्रीहिः। बृहती आच्छादनं बृहतिका। शून्य एव शून्यकः।

## भागेऽष्टमाञ्ञः ॥७।३।२४॥

अष्टम एव आष्टमो भागः। अष्टमो जिनश्चन्द्रप्रभः। नाम।

## षष्ठात् ॥७।३।२५॥

षष्ठ एव षाष्ठो भागः।

## माने कश्च ॥७।३।२६॥

षष्ठ एव षष्ठकः। भागे तु षाष्ठः।

## एकादाकिन्चासहाये ॥७।३।२७॥

चकारात्कश्च। एक एव एकाकी। एककः।

## प्रागनित्यात्कप् ॥७।३।२८॥

नित्यशब्दसङ्कीर्तनमाप्ते येऽर्थास्तेषु कबधिकृतो वेदितव्यः।

## त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक् ॥७।३।२९॥

कपोऽपवादः। कुत्सितमल्पमज्ञातं वा पचति पचतकि। पचतकः पचन्तकि। सर्वकेः, सर्वके। विश्वके। सर्वकस्मै। यकत्पिता। तकत्पिता। त्वकत्पिता। मकत्पिता।

## युष्मदस्मदोऽसोभादिस्यादेः ॥७।३।३०॥

सकारादिभकारादिककारादिं च विभक्तिं विहाय स्याद्यन्तयोर्युष्मदस्मदोः स्वरेष्वन्त्यात्पूर्वोऽक् स्यात्। युष्मदस्मदोः स्वरेष्वन्त्यात् पूर्वस्यापवादः। त्वयका। मयका। त्वयकि। मयकि। युष्माककम्। अस्माककम्। परमत्वयका। परममयका। युष्मदस्मद इति किम्? तकया। यकया। सर्वकेण। इमकेन। अमुकेन। इमकैः। अमुकैः। भवकन्तौ। भवकन्तः। असोभादिस्यादेरिति किम्? युष्मासु। अस्मासु। युवकयोः। आवकयोः। युवकाभ्याम्। आवकाभ्याम्। युष्मकाभिः। अस्मकाभिः।

## अव्ययस्य कोद् च ॥७।३।३१॥

प्राग् नित्यात् येऽर्थास्तेषु गम्येषु अव्ययस्यान्त्यात्स्वरात्पूर्वमक् प्रत्ययः स्यात्। तद्योगे ककारान्तमव्ययं तस्य दकारोऽन्तादेशः स्यात्। कपोऽपवादः। कुत्सितमल्पमज्ञातं वोच्चैरुच्चकैः। नीचैः। नीचकैः। धिक्, धकित्। हिरुक्। हिरकुक्। पृथक्, पृथकक्।

## तूष्णीकाम् ॥७।३।३२॥

निपातोऽयम्। कुत्सितमल्पमज्ञातं वा तूष्णीं तूष्णीकामास्ते।

## कुत्सिताल्पाज्ञाते ॥७।३।३३॥

यथायोगं कपादयः। कुत्सितोऽल्पोऽज्ञातो वाऽश्वोऽश्वकः। गर्दभकः। घृतकम्। तैलकम्। भिन्धकि।

## अनुकम्पातद्युक्तनीत्योः ॥७।३।३४॥

अनुकम्पायां तथाऽनुकम्पायुक्तनीतौ च गम्यायां यथायोगं कपादयः स्युः। अनुकम्प्यः पुत्रः पुत्रकः। वत्सकः। बालकः। जनकैः। स्वपितकि। जल्पतकि। एहकि। अनुकम्पमान एव पुत्रं पुत्रक एहकि। अस्मद्धके उपविश।

## अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा ॥७।३।३५॥

अनुकम्पार्थे इय इक इल एते प्रत्ययाः स्युरजातिशब्दं विना। अनुकम्पितो देवदत्तो देवियः। देविकः। देविलः। कपि। देवदत्तकः। जिनियः। जिनिकः। जिनिलः। जिनदत्तकः। अजातेरिति किम्? महिषकः। एष जातिशब्दो मनुष्यनामापि।

## वोपादेरडाकौ च ॥७।३।३६॥

अनुकम्पित उपेन्द्रदत्त उपडः। उपकः। उपिकः। उपिलः। पक्षे कप्। उपेन्द्रदत्तकः।

## ऋवर्णोवर्णात्स्वरादेरादेर्लुक् प्रकृत्या च ॥७।३।३७॥

ऋवर्णान्तादुवर्णान्ताच्च परस्यानुकम्पायां विहितस्य स्वरादेः प्रत्ययस्यादेर्लुक्, तत्र ऋवर्णान्तोवर्णान्ता प्रकृत्या तिष्ठति। अनुकम्पितो मातृदत्तो मातृयः। मातृकः। मातृलः। अनुकम्पितो वायुदत्तो वायुयः। वायुकः।

## लुक्युत्तरपदस्य कप् ॥७।३।३८॥

यन्नाम्नो यदुत्तरपदं तस्य ते लुग्वा इति लुकि सति कप्प्रत्ययो न स्यात् अनुकम्पायाम्। कपादीनामपवादः। देवदत्तो देवः। अत्र।

## ते लुग्वा ॥३।२।१०८॥

नामविषये पूर्वोत्तरपदे लुग्वा स्याताम् । इति परपदलोपः । अनुकम्पितो देवः देवकः । एवमनुकम्पितो यज्ञो यज्ञकः । यकारः पुत्रकाद्यर्थः । नका इया पुंसोऽनित् क्याप्परे इत्यत्र पर्युदासार्थः । अनुकम्पिता दत्ती दत्तिका । अत्र कपि सति पित्त्वात् आप्परेऽपि ककारे ह्रस्व न स्यात् । उत्तरपदस्येति किम्? देवदत्ता दत्ता । अत्र ते लुग्वेति पूर्वपदस्य लुक् । अनुकम्पितो व्याघ्राजिनो नाम मनुष्यो व्याघ्रकः । सिंहकः ।

## षड्वर्जैकस्वरपूर्वपदस्य स्वरे ॥७।३।४०॥

अनुकम्पायाम् । अनुकम्पितो वागाशीर्दत्तः । वाचियः । षड्वर्जेति किम्? अनुकम्पितः षडङ्गुलिः । षडियः । षडिकः । षडिलः ।

## द्वितीयात्स्वरादूर्ध्वम् ॥७।३।४१॥

अनुकम्पार्थस्वरादौ प्रत्यये परे प्रकृतेर्द्वितीयस्वरादूर्ध्वशब्दरूपस्य लुक् । अनुकम्पितो देवदत्तो देवियः । देविकः । देविलः ।

## सन्ध्यक्षरात्तेन ॥७।३।४२॥

अनुकम्पार्थस्वरादौ प्रत्यये परे । द्वितीयात्स्वरात् व्यञ्जनेन सह लुक् । अनुकम्पितः कुबेरदत्तः कुबियः । कुबिकः । कुबिलः ।

## शेवलाद्यादेस्तृतीयात् ॥७।३।४३॥

ऊर्ध्वं लुक् । अनुकम्पितो शेवलदत्तः शेवलियः ३ ।

## क्वचित्तुर्यात् ॥७।३।४४॥

अनुकम्पितो बृहस्पतिदत्तो बृहस्पतियः ३ ।

## पूर्वपदस्य वा ॥७।३।४५॥

तथैव लुक् । अनुकम्पितो देवदत्तो दत्तियः ३ । पक्षे देवियः ३ ।

## ह्रस्वे ॥७।३।४६॥

यथायोगं कप्रत्ययः । ह्रस्वः पटः पटकः । ह्रस्वं पचति पचतकि । ह्रस्वाः सर्वे सर्वके ।

## कुटीशुण्डाद्रः ॥७।३।४७॥

ह्रस्वा कुटी कुटीरः । शुण्डारः ।

## शम्या रुरौ ॥७।३।४८॥

ह्रस्वा शमी शमीरुः । शमीरः ।

# कृत्वा डुपः ॥७।३।४९॥

कृडुप ।

# कासूगोणीभ्यां तरट् ॥७।३।५०॥

ह्रस्वा कासूः कासूतरी । गोणीतरी । पुल्लिङ्गे कासूतरः । गोणीतरः । कासूः शक्तिनामायुधम् ।

# वत्सोक्षाश्वर्षभाद्ध्रासे पित् ॥७।३।५१॥

ह्रस्वो वत्सो वत्सतरः ।

# वैकाद्द्वयोर्निर्द्धार्ये डतरः ॥७।३।५२॥

एकतरो भवतोः कठः पटुर्गन्ता ।

# यत्तत्किमन्यात् ॥७।३।५३॥

यतरो भवतोः पटुर्गन्ता । ततर आगच्छतु । एवमन्यतरः । कतरयोर्भवतोः पटुः स आगच्छतु ।

# बहूनां प्रश्ने डतमश्च वा ॥७।३।५४॥

यत्तत्किमन्यात् । यतमो भवतां मध्ये शूरस्ततमोऽभ्येतु । चकाराड्डतरः ।

# वैकात् ॥७।३।५५॥

बहूनामेकस्य निर्धारणे डतमः । एकतमो भवतां वीरः शूरो वा । वा वचनात्कः । एककः ।

# क्तातमवादेश्चानत्यन्ते ॥७।३।५६॥

क्तान्तात्केवलात्तमवाद्यन्तात्चानत्यन्तेऽर्थे कप् स्यात् । अनत्यन्तं भिन्नं भिन्नकम् । अनत्यन्तं भिन्नतमं भिन्नतमकम् । एवं भिन्नतरकम् । भिन्नकल्पकम् ।

# न सामिवचने ॥७।३।५७॥

अनत्यन्तेऽर्थे कप् न स्यात् । सामि अनत्यन्तं भिन्नमेव कृतम् ।

# नित्यं ञिञिनोऽण् ॥७।३।५८॥

ञिन्प्रत्ययान्तात् स्वार्थे नित्यमण् स्यात् । तत्र प्रत्ययसूत्रं यथा ।

# व्यतिहारेऽनीहादिभ्योऽञः ॥५।३।११६॥

व्यतिहरणं व्यतिहारः । परस्परस्य कृतप्रतिकृतिः । व्यतिहारविषयेभ्यो धातुभ्यः ईहादिवर्जं स्त्रियां ञः स्यात् । परस्परमाक्रोशनं व्यावक्रोशी व्यावहासी इत्यादिरिन् प्रत्ययान्तः ।

## अभिव्याप्तौ भावेन जिन् ॥५।३।९०॥

क्रियाश्वसम्बन्धिनः साकल्येनाभिसम्बन्धो योऽभिव्याप्तिस्तस्यां गम्यमानायां भावे धातोरञ्जिन् इत्येतौ स्तः । नित्यधनास्केषकस्य अप्रत्ययान्तस्य प्रयोगो नास्ति । समन्ताद्रवः सांराविणं । साङ्कोटिनम् । अभिव्याप्तौ भावे जिन् ।

## विसारिणो मत्स्ये ॥७।३।५९॥

स्वार्थेऽण् । विसरतीति विसारी । ग्रहादित्वाण्णिन् । मत्स्यभेदे वैसारिणः ।

## पूगादमुख्यकाञ्ञ्यो द्रिः ॥७।३।६०॥

अर्थकामप्रधानाः सङ्घाः पूगास्तद्वाचिनाम्नः स्वार्थे ञ्यः स्यात् । स च द्रिसंज्ञः । न चेत्पूगनाम । सोऽस्य मुख्य इतिसूत्रे विहितकप्रत्ययान्तं स्यात् । लौहध्वज्यः । लौहध्वज्यौ । बहुत्वे द्रिसंज्ञकत्वाल्लुकि लोहध्वजाः पूगाः । शैब्यः । शैब्यौ । शिबयः ।

## व्रातादस्त्रियाम् ॥७।३।६१॥

शरीरायासजीविनः सङ्घा व्रातास्तद्वाचिनाम्नोऽस्त्रियां वर्तमानात्स्वार्थे ञ्यः स्यात् । स च द्रिः । कापोतपाक्यः । कापोतपाक्यौ । कपोतपाकाः ।

## शस्त्रजीविसङ्घाञ्ञ्यड् वा ॥७।३।६२॥

स च द्रिः । शाबर्यः शाबर्यौ । शबराः ।

## वाहीकेष्वब्राह्मणराजन्येभ्यः ॥७।३।६३॥

शस्त्रजीविसङ्घात्स्वार्थे ञ्यट् नित्यम् । स च द्रिः । कुण्डीविशाः । शस्त्रजीविसंघः । कौण्डीविश्यः । कौण्डीविश्यौ । कुण्डीविशाः ।

## वृकादेण्यण् ॥७।३।६४॥

स च द्रिः । वार्केण्यः । वार्केण्यौ । वृकाः ।

## यौधेयादेरञ् ॥७।३।६५॥

स च द्रिः । युधाया अपत्यं यौधेयः । यौधेयाः ।

## पर्श्वादेरण् ॥७।३।६६॥

स च द्रिः । पर्शोरपत्यं माणवकाः पर्शवः । द्रिसंज्ञकत्वाणो लुप् । ते शस्त्रजीविसंघः पार्शवः ।

## दामन्यादेरीय ॥७।३।६७॥

स्वार्थे स च द्रिः । दमनस्यापत्यं बहवः कुमारा दामनयः । ते शस्त्रजीविसंघो दामनीयः । दामनीयौ । दामनयः ।

# श्रुमच्छमीवच्छिखावच्छालावदूर्णावद्विदभृदभिजितो गोत्रेऽणो यञ् ॥७।३।६८॥

इत्यादिगणे गोत्रार्थे योऽण् तदन्तेभ्यः स्वार्थे यञ् स्यात्स च द्रिः । श्रुमतोऽपत्यम् । अण् । तदन्ताद्यञ् । शौमत्यः । शौमत्यौ । शौमताः । शौसायताः । भीमपच्छन्दावपीच्छन्त्येके ।

# समासान्तः ॥७।३।६९॥

एतत्सूत्रात्परतः पादसमाप्तिं यावत् ये प्रत्ययास्ते समासावयवाः स्युः । ते च समासाधिकारे प्रागुक्ताः ।

इति प्रकृत्याद्यर्थप्रत्ययाधिकारः ॥

शङ्खेश्वरः शाश्वत एष भास्वानसन्निभः पार्श्वविभुर्द्विषाऽपि ।
पद्माभिसेव्यः सकलार्थसिद्धिं देयात्तदीयस्तुतिनिश्चितानाम् ॥ १ ॥

# वहीनरस्यैत् ॥७।४।४॥

अस्य ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्यैकारादेशः । वहीनरस्यापत्यं वैहीनरिः ।

# न्यग्रोधस्य केवलस्य ॥७।४।७॥

एतच्छब्दस्य यकारस्य समीपे यः स्वरेष्वादिः स्वरस्तस्य वृद्धिप्राप्तौ तत एव यकारात्प्रागैकारागमः स्यात् ञ्णिति तद्धिते । न्यग्रोधस्य विकारो नैयग्रोधः ।

# न्यङ्कोर्वा ॥७।४।८॥

न्यङ्कोरिदं नैयङ्कवम् न्याङ्कवम् वा ।

# न स्वाङ्गादेः ॥७।४।९॥

व्यपदान्तस्य स्वाङ्गादेश्च ञ्णिति तद्धिते य्वः प्राक् ऐकारौकारौ न स्याताम् । व्यावक्रोशी । व्यात्युक्षी । व्यतिहारे नीहादिभ्यो ञ इति ञः । ततो नित्यं मनिनोऽण् इत्यण् । स्वाङ्गवि, स्वाङ्गस्यापत्यं स्वाङ्गिः । व्याडिः । स्वागतमित्याह स्वागतिकः । व्यावहारिकः ।

# श्वादेरिति ॥७।४।१०॥

श्वादेर्नाम्न इकारादौ ञ्णिति तद्धिते च प्रागौकारो न स्यात् । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वागणिकः ।

# इञः ॥७।४।११॥

श्वादेरिञ् प्रत्ययान्तस्य ञ्णिति तद्धिते वा प्रागौकारो न स्यात् । श्वाभस्त्रेरिदं श्वाभस्त्रम् ।

## पदस्यानिति वा ॥७।४।१२॥

पदशब्दान्तस्य आदेरिकारवर्जे ञ्णिति तद्धिते च आगौकारो वा स्यात्। शुभ इव पदमस्य आपदम् । तस्य विकार: पौवापद आपदम् । अनितीति किम्? आपादिक: ।

## प्रोष्ठभद्रपदाज्जाते ॥७।४।१३॥

उत्तरपदस्य पाद इत्यसौ वृद्धि: । प्रोष्ठपदासु जात: प्रोष्ठपाद: । भद्रपादो माणवक: ।

## अंशादृतो: ॥७।४।१४॥

अंशवाचिन: शब्दात्परस्य उत्तरपदस्यस्य ऋतुवाचिन: प्राग्वत् । पूर्वासु वर्षासु भव: पूर्ववार्षिक: । अपरवार्षिक: ।

## सुसर्वार्द्धाद्राष्ट्रस्य ॥७।४।१५॥

प्राग्वत् । सुपञ्चालेषु भव: सौपाञ्चालक: । सर्वमागधक: ।

## अमद्रस्य दिश: ॥७।४।१६॥

दिग्वाचिन: परस्य राष्ट्रवाचिन: प्राग्वत् । पूर्वपाञ्चालक: । मद्रवर्जनात् पौर्वमद्र: । अन्यत्रापि । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविक: ।

## अर्द्धात्परिमाणस्याऽनतोवात्वादे: ॥७।४।२०॥

अर्द्धकुडवेन क्रीतमर्द्धकौडविकम् । विकल्पात्पूर्वोत्तरपदादि आर्द्धकौडविकम् ।

## नञ: क्षेत्रज्ञेश्वरकुशलचपलनिपुणशुचे: ॥७।४।२३॥

नञ: क्षेत्रज्ञादे: स्वरेष्वादे: स्वरस्य वृद्धि: स्यात्, आदेस्तु नञो वा । अक्षेत्रज्ञस्येदम् आक्षेत्रज्ञम् । अक्षेत्रज्ञम् । अक्षेत्रज्ञस्य भाव: कर्म वा अक्षेत्रज्ञ्यम् । राजादित्वात्ष्यण् ।

## जङ्गलधेनुवलजस्योत्तरपदस्य तु वा ॥७।४।२४॥

जङ्गलादे: पूर्वपदस्य ञ्णिति तद्धिते तथा नित्यं वृद्धि: स्यात् उत्तरपदस्य पुनर्वा । कुरुजङ्गलेषु भव: कौरुजङ्गल: । कौरुजाङ्गल: ।

## हृद्भगसिन्धो: ॥७।४।२५॥

आदेरुत्तरपदस्य चेतिद्वयमनुवर्तते । हृदाद्यन्तानां पदद्वयेऽपि तथा वृद्धि: स्यात् । सुहृद इदं सौहार्दम् । सौभाग्यम् । सक्तुप्रधाना: सिन्धव: सक्तुसिन्धवस्तेषु साक्तुसिन्धव: ।

## देवतानामात्वादौ ॥७।४।२८॥

वृद्धिः समासे प्रोक्तम् आकाराधिकरणे। अग्निश्च विष्णुश्च देवता अस्य आग्नावैष्णवम् सूक्तम्। ऐन्द्रापौष्णं हविः। अग्निश्चेन्द्रश्च तौ देवते अस्य आग्नेन्द्रम्। ऐन्द्रावरुणम्।

## सारवैक्ष्वाकमैत्रेयभ्रौणहत्यधैवत्यहिरण्मयम् ७।४।३०॥

सारवादयोऽण्प्रत्ययान्ताः कृता अय् लोपादयो निपाताः। सरस्याः अर्थं सारवं जलम्। इक्ष्वाकोरपत्यमैक्ष्वाकः। मित्रयोरपत्यं मैत्रेयः।

## वान्तमान्तितमान्तितोऽन्तियान्तिपत् ॥७।४।३१॥

अन्तम अन्तितम अन्तित अन्तिय अन्तिपद् एते निपाताः। विकल्पात् पक्षे, अन्तिकतमः। अन्तिकितः। अन्ति अस्य पक्षे अन्तिकयः। अन्तिपद् पक्षे अन्तिकसद्।

## विन्मतोर्णीष्ठेयसौ लुप् ॥७।४।३२॥

स्रग्विणमाचष्टे स्रजयति। अतिशयेनायमेषां स्रग्वी स्रजिष्ठः। अयमनयोरतिशयेन स्रग्वी स्रजीयान्।

## अल्पयूनो. कन्वा ॥७।४।३३॥

कनयति कनिष्ठः। कनीयान्। पक्षे अल्पयति। यवयतीत्यादि।

## प्रशस्यस्य श्रः ॥७।४।३४॥

णीष्ठेयःसु। श्रयति श्रेष्ठः। श्रेयान्।

## वृद्धस्य च ज्यः ॥७।४।३५॥

ज्यपति। ज्येष्ठः।

## ज्यायान् ॥७।४।३६॥

ईयसि निपातः।

## बाढान्तिकयोः साधनेदौ ॥७।४।३७॥

साधयति साधिष्ठ। साधीयान्। नेदयति नेदिष्ठः। नेदीयान्।

## प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारुकस्येमनि च प्रास्थास्फावरगरबहत्रपद्राघवर्षवृन्दम् ॥७।४।३८॥

एषामेते आदेशाः स्युः इमनिणीष्ठेयःसु। प्रियस्य आदेशो प्रेमा। प्रापयति प्रेष्ठः प्रेयान्। स्थिरस्य स्था। स्थेमा। स्थापयति स्थेष्ठः। स्थेमान् इत्यादयः।

## पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः ॥७।४।३९॥

इमनिणीष्ठेयस्सु । प्रथिमा । प्रथिष्ठः । प्रथीयान् इत्यादयः ।

## बहोर्णीष्ठे भूय् ॥७।४।४०॥

भूययति भूयिष्ठः ।

## भूर्लुक् चेवर्णस्य ॥७।४।४१॥

बहुशब्दस्येमनीयसोः परतो भू इत्यादेशः, अनयोरिवर्णस्य लुक् । भूमा । भूयान् । भूयांसौ ।

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्यान्तस्थादेर्गुणश्च नामिनः ॥७।४।४२॥

स्थूलादीनां यथायोगमिमनिणिष्ठेयस्सु अन्तस्थादेरवयवस्य लुक्, नामिनश्च गुणः स्यात् । स्थवयति स्थविष्ठः । स्थवीयान् । दवयति दविष्ठः । दवीयान् । यविष्ठः । ह्रसीयान् । क्षेपिष्ठः ।

## त्र्यन्तस्वरादेः ॥७।४।४३॥

तृमत्वयस्यान्त्यस्वरादेश्चावयवस्य इमनिणीष्ठेयस्सु परेषु च लुक् स्यात् । कर्तृमन्तमाचष्टे करयति । करिष्ठः । करीयान् । कर्तारमाचष्टे करयति । मातयति । भ्रातयति । इत्यादावनर्थकत्वात्तृशब्दस्य न स्यात् । पटिमा । लघिमा ।

## नैकस्वरस्य ॥७।४।४४॥

अन्त्यस्वरादेर्लुक् न इमनिणिष्ठेयस्सु च । स्रजयति । स्रजिष्ठः । एकस्वरस्येति किम् ? वसुमन्तमाचष्टे वसयति । वसिष्ठः ।

## प्रायोऽव्ययस्य ॥७।४।६५॥

अव्ययस्यासत्त्वस्यैकस्य तद्धितेऽन्त्यस्वरादेः प्रायो लुक् स्यात् । स्वर्भवः सौवः । बहिर्जातो बाह्यः । बाहीकः । पौनःपुन्यम् । परत आगतः पारतः ।

## अनीनादट्यह्नोऽतः ॥७।४।६६॥

ईनः अत् अट् वर्जिते तद्धितेऽह्नोऽकारस्याऽवयवस्य लुक् स्यात् । इकारमध्यस्थस्य लुक् । अह्नां समूह आह्नम् । अह्ना निर्वृत्तमाह्निकम् । ईने द्व्यहीनः । अति समासान्ते, अन्वहम् । अटि, द्वयोरह्नोः समाहारः द्व्यहः ।

## विंशतेस्तेर्डिति ॥७।४।६७॥

लुक् । विंशत्या क्रीतः विंशकः ।

## अकद्रूपाण्ड्वोरुवर्णस्यैये ॥७।४।६९॥

लुक् । जम्ब्वा जाम्बेयः । कद्रूपाण्ड्वोः काद्रवेयः ।

## ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतो लुक् ॥७।४।७१॥

मातुरागतं मातृकम् । अत इकण् । शाबरजम्बुकः । उवर्णाद्विकण् । दोर्भ्यां तरति दौष्कः । सर्पिः पण्यमस्य सार्पिष्कः । धनुः प्रहरणमस्य धानुष्कः । तकारान्तात्, उदश्विता संस्कृतं औदश्वित्कः । शश्वद्भवं शाश्वतिकम् । आकस्मिकम् । नामेकारलुक् ।

## असकृत्सम्भ्रमे ॥७।४।७२॥

भयादिभिर्निमित्तस्याक्षेपात्प्रयोक्तुस्त्वरणं सम्भ्रमः । तस्मिन् द्योत्ये यत्पदं वाक्यं तदनेकवारं प्रयुज्यते । अहिः २ । बुध्यस्व २ । त्रिवारमपि ।

## भृशाभीक्ष्ण्याविच्छेदे द्विः प्राक्तमवादेः ॥७।४।७३॥

क्रियायाः साकल्यम् अवयवक्रियाणां कार्त्स्न्यम् । भृशार्थः । पौनःपुन्यमाभीक्ष्ण्यम् । सातत्यं क्रियान्तरैरव्यवधानमविच्छेदः । एषु यत्पदं वाक्यं वा तत्र तमबादिप्रत्ययेभ्यः प्रागेव द्विरुच्यते । लुनीहि लुनीहि इत्येवायं लुनाति । भोजम् २ व्रजति । अविच्छेदे, पचति २ । मन्दम् २ नुदति । प्राक्तमबादेः, पचति पचतितमाम् ।

## नानावधारणे ॥७।४।७४॥

नाना भूतानां भेदं नैयत्यापरिच्छेदो नानावधारणम् । तस्मिन् यच्छब्दरूपं तद्विरुच्यते । अस्मात्कार्षापणादिह भवद्भ्यां माषं २ देहि । द्वौ २ देहि । त्रीन् २ देहि ।

## आधिक्यानुपूर्व्ये ॥७।४।७५॥

एतयोर्यच्छब्दरूपं तद्विरुच्यते । आधिक्यं प्रकर्षः । आनुपूर्व्यं क्रमानुल्लङ्घनम् । आधिक्ये नमो नमः । अधिकतमं इत्यर्थः । आनुपूर्व्ये, ज्येष्ठं २ अनुप्रवेशय ।

## पूर्वप्रथमावन्यतोऽतिशये ॥७।४।७७॥

प्रकर्षे द्योत्ये द्विः । पूर्वम् २ पुष्यति । प्रथमं २ पच्यते ।

## प्रोपोत्सम्पादपूरणे ॥७।४।७८॥

एतानि उपसर्गाणि द्विरुच्यन्ते । प्र चेत्पादः पूर्यते । प्रप्रणाम्तकपापाभेद पोपप्लववर्जितम् । उदुद्गतं तपो यस्य ससमयत [illegible] जिनम् ॥ १ ॥

## सामीप्येऽधोऽध्युपरि ॥७।४।७९॥

अधोऽधो ग्रामम्। अध्यधि ग्रामम्। उपर्युपरि ग्रामम्।

## वीप्सायाम् ॥७।४।८०॥

युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा। तस्यां पदस्वरूपं तद्द्विरुच्यते। वृक्षं २ सिञ्चति। गृहे २ अश्वाः। भिन्नं २। क्षीणं २। नवम् २ प्रीतिः।

## प्लुप् चादावेकस्य स्यादेः ॥७।४।८१॥

एकशब्दस्य वीप्सायां द्विरुक्तस्यादौ वर्तते य एकशब्दस्तत्सम्बन्धिनः स्यादेः लुप्स्यात्। एकैकः। एकैकम्। एकैकस्याः। एक एक एकस्याः अत्र विरामस्याविवक्षितत्वात् पुंवद्भावेऽपि सन्धिकार्यं न स्यात्।

## द्वन्द्वं वा ॥७।४।८२॥

द्वन्द्वमिति वीप्सायां द्विरुक्तद्विशब्दस्यादौ स्यादेः लुप्। इकारस्याम्भावः। उत्तरमेकारस्यात्व स्यादेश्चाम्भावो वा निपात्यते। द्वन्द्व तिष्ठतु। द्वौ द्वौ तिष्ठतः। द्वन्द्वं कृतम्। द्वाभ्यां द्वाभ्यां कृतम्।

## रहसमर्यादोक्तिव्युत्क्रान्तियज्ञपात्रप्रयोगे ॥७।४।८३॥

द्वन्द्वमिति द्विशब्दस्य द्विवचनं शेषं पूर्ववत् रहस्यादिषु गम्यमानेषु निपात्यते। रहस्ये, द्वन्द्व मन्त्रयते। रहस्य मन्त्रयते इत्यर्थः। मर्यादोक्तौ, आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते। माता पौत्रेण तत्सुतेन मिथुनेन यातीत्यर्थः। व्युत्क्रान्तौ, द्वन्द्वं व्युत्क्रान्ताः। द्वैराश्येन भिन्ना इत्यर्थः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वे द्वे प्रयुनक्तीत्यर्थः। रहस्यादिष्विति किम्? द्वौ तिष्ठतः। द्वन्द्वः समासः। द्वन्द्व युग्मम्। अत्र द्वन्द्वं शब्दान्तरम्।

## लोकज्ञातेऽत्यन्तसाहचर्ये ॥७।४।८४॥

द्विशब्दस्य पूर्ववत् द्वन्द्वमिति निपात्यते। द्वन्द्वं रामलक्ष्मणौ। द्वन्द्वमित्यत्र नपुंसकत्वमनुप्रयोगस्य नपुंसकार्थम्।

## आबाधे ॥७।४।८५॥

आबाधो मनःपीडा। तद्विषये शब्दरूपं द्विरुच्यते। तत्र चाद्यौ पूर्वपदे स्यादेः लुप्स्यात्। पू' २। गत' २। मध्य २। न नकारोति गुरुस्वारणादिमा वीक्ष मान' प्रयोक्ता एव प्रयुङ्क्ते। अधमी' २।

## नवा गुणा. सदृशे रित् ॥७।४।८६॥

गुणशब्दो मुख्यसदृशे गुणवति वर्तमाने वा द्विः स्यात्। आद्यौ वर्तमानस्य

स्यादे' पित् लुप्स्यात् । स च रित् । रित्करण प्रतिपदिस्य पुंवद्भावस्यापि रितीतिविधानार्थम् । शुक्लशुक्ल रूप श्रीचन्द्रप्रभमध्याईत' । शुक्लशुक्ल' पटः ।

# वाक्यस्य परिवर्जने ॥७।४।८८॥

परिशब्दो वर्जने वर्तमाने वा द्विरुच्यते । परि २ सौवीरेभ्यो वृष्टिर्मेघस्य । पक्षे परि सौवीरेभ्यो मेघविजयकरी वृष्टिः ।

# प्रियसुखं चाकृच्छ्रे ॥७।४।८७॥

प्रियसुखशब्दौ अकृच्छ्रे मङ्गले वर्तमानौ वा द्विरुच्येते तत्र चादौ शब्दस्य स्यादे' लुप्स्यात् । प्रियप्रियेण ददाति । पक्षे प्रियेण ददाति । सुखसुखेनाधीतेऽर्हन्मतम् ।

इति श्रीचन्द्रप्रभायां प्रक्रियायां द्विरुक्तिसाधनम् ॥

विजयतां त्रिशलातनया मम स्फुरतराउसदक्षसुलक्षणं ।
विनयमूलमिव धरयासन, जयति यस्य दयरपरमोदयम् ॥ १ ॥
नीरं क्षीरगभीरनीरधिजलैर्देवाचलस्योपरि
रिन्द्रैः कुसमहाभिषेचनविधि श्रीवर्द्धमानाहयं ।
नित्यानन्दमसम्पदे भवतु मे सिद्धार्थभूपालम्
देवः श्रीत्रिशलाङ्गजो गजमदप्रोत्सर्पसम्भ्रमं ॥ २ ॥
तदीयशिष्योऽभवदिन्द्रभूतिर्विभूतिकर्ता बहुलब्धिशाली ।
पट्टे प्रभु पञ्चमवर्णनीयं स पञ्चमं श्रीगणभृत्सुधर्मा ॥ ३ ॥
श्रीहीरविजयसूरिस्तदन्वये तपगणे समुदियाय ।
श्रीमदकब्बरसाहि' प्रबोधितो येन जगद्गुरुः ॥ ४ ॥
श्रीविजयसेनसूरिस्ततोऽभवद्विजयदेवसूरिरितः ।
पट्टेऽस्य सूरिभानुर्विजयप्रभुगणपतिस्त्वभूत् ॥ ५ ॥
तत्पट्टोदयशैले मौलौ रत्नोपमाजितसपत्ना' ।
श्रीविजयरत्नमाला सूरिवरा तिमकरा भाशा ॥ ६ ॥
विजयन्ते ते गुरवः पौषेशरपीन्दुवत्सरे तेषाम् ।
आदेशादेकपते स्थिति' कृता राजधान्यन्त' ॥ ७ ॥
चातुर्मास्यामस्या नाम्ना श्री आगराधराख्यायाम् ।
नानायोगै' रचिता चन्द्रप्रभा सुधिया ॥ ८ ॥

तत्परम्परा चैवम्—

श्रीश्वेताम्बरजैनधर्मनृपते' प्राधान्यमुद्भावयन्,
श्रीमान् हीरगुरुर्जगद्गुरुरितिख्यातिं दधौ सद्गुणौ ।

योर्यं प्रापदकब्बरक्षितिपतिश्रवीव यत्सन्निधौ,
कीर्तिं क्षीरपयोधिमार्जनमथात्तूर्कमिन्दुर्यमी ॥ ९ ॥
तच्छिष्यं कनकादिमं सविजयं श्रीवाचकोऽस्थापयत्,
शीलादिर्विजयं कविस्तत इमे शिष्यास्त्रयो जज्ञिरे ।
आद्यं श्रीकमलप्रसिद्धिविजयश्चारुत्ववाग्वाचकोऽ-
मीषां शिष्यवरं कृपादिविजयं प्राज्ञं समाशाम्बुधिः ॥ १० ॥
श्रीमेघविजयनाम्नोपाध्यायोऽध्यायतत्परं परमं ।
चन्द्रप्रभमा चक्रे भामूलयबुद्धि वृद्धिकरी ॥ ११ ॥
महोजिमाख्या मयकीर्तितेन सिद्धान्तयुक्ता वरकौमुदी या ।
श्रीसिद्धहैमानुगता व्यधायि सेवाश्रिता मानुविभोदयाय ॥ १२ ॥
स्फुरद्याचज्योतिर्वलयममलं मेरुमभितो,
दधत्याशाज्योतिर्वसनमुदये चार्कशशिनोः ।
ज्वलत्ताराहाराकृतमपि धरेयू पीयूषमिव,
चिरं स्थेयात्तावन्ममसि रसिनां तत्सुमनसा ॥ १३ ॥
स्नाहे साष्टसहस्रलक्षणधरं क्ष्माभिषेकः सुरैः,
सेन्द्रैः साष्टसहस्रमानसहितैः कुम्भैर्यथा वृत्ते स्तुतः ।
मन्येऽप्यष्टसहस्रसम्मिततया सल्लक्षणैर्लक्षिते,
कुर्यात्सोऽभ्युदयं धियां समुदयं वीरस्त्रिलोकीगुरुः ॥ १४ ॥
श्रीहेमचन्द्रगुरुरोर्विनयस्य सिद्धे
शास्त्रार्णवोऽलभत पूर्णदशा रसेन ।
दीपोत्सवस्य दिवसे कुशलेन योऽसौ,
सौभाग्यमेरुविजयादिभिरीक्ष्यमाणः ॥ १५ ॥
विचार्य शोधमुत्साय कार्यं पाणिमहोऽनया ।
सज्जनेन रसाभ्युद्धलक्षणान्वितया श्रिये ॥ १६ ॥

इति श्रीमन्मेघविजयमहोपाध्यायविरचिता चन्द्रप्रभाख्या
हैमकौमुदी समाप्तिमगादगाधगुणततिः ॥

---

श्रीजिनाय नमः।

## अथ द्वितीयावृत्तिः।

---

श्रीमानभिजस्याद्भुतयोगसिद्धेर्वधातुधातुर्गविधायपश्यः।
हरेर्महैश्वर्यस्य रस प्रकृत्याः सत्यादिकृज्ञानविमोक्षकृत्या ॥ १ ॥

### क्रियार्थो धातुः ॥३।३।३॥

आख्यातप्रत्यया धातोः प्रयोज्याः।

**वर्तमाना तिव् तस् अन्ति, सिव् थस् थ, मिव् वस् मस्, ते आते अन्ते, से आथे ध्वे ए वहे महे ॥३।३।६॥**

इमानि वचनानि वर्तमानसंज्ञानि।

**सप्तमी यात् यातां युस्, यास् यात यात, यां याव याम, ईत ईयाताम् ईरन्, ईथास् ईयाथाम् ईध्वम्, ईय ईवहि ईमहि ॥३।३।७॥**

इयं विभक्तिः सप्तमीसंज्ञा।

**पञ्चमी तुव् ताम् अन्तु, हि त, त, आनिव् आवव् आमव्, ताम् आताम् अन्ताम्, स्व आथाम् ध्वम्, ऐव् आवहैव् आमहैव् ॥३।३।८॥**

इयं विभक्तिः पञ्चमीसंज्ञा।

**ह्यस्तनी दिव् ताम् अन्, सिव् त त, अम्व् व म, त आताम् अन्त, थास् आथा ध्वम्, इ वहि महि ॥३।३।९॥**

अस्या ह्यस्तनी संज्ञा।

एताः शितः ॥३।३।१०॥

एताश्चतस्रः शित्संज्ञा ज्ञेयाः।

अद्यतनी दि ताम् अन्, सि त त अम् व म, त आताम् अन्त, थास् आथा ध्वम् इ वहि महि ॥३।३।११॥

इयमद्यतनी संज्ञा।

परोक्षा णव् अतुस् उस्, थव् अथुस् अ, णव् व म, ए आते इरे, से आथे ध्वे, ए वहे महे ॥३।३।१२॥

इमानि वचनानि परोक्षासंज्ञानि।

आशीः क्यात् क्यास्ताम् क्यासु:, क्यास्, क्यास्तम् क्यास्त, क्यासम् क्यास्व क्यास्म, सीष्ट सीयास्ताम् सीरन्, सीष्ठास् सीयास्थाम् सीष्वम्, सीय सीवहि सीमहि ॥३।३।१३॥

इमान्याशीः संज्ञानि।

श्वस्तनी ता तारौ तारस्, तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस्, ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे तास्महे ॥३।३।१४॥

इयं विभक्तिः श्वस्तनी ज्ञेया।

भविष्यन्ती स्यति स्यतस् स्यन्ति, स्यसि स्यथस् स्यथ, स्यामि स्यावस् स्यामस्, स्यते स्येते स्यन्ते, स्यसे स्येथे स्यध्वे, स्ये स्यावहे स्यामहे ॥३।३।१५॥

इमानि वचनानि भविष्यन्तीसंज्ञानि।

## क्रियातिपत्तिः स्यत् स्यतां स्यन्, स्यस् स्यतं स्यत, स्यं स्याव स्याम, स्यत स्येतां स्यन्त, स्यथास् स्येथाम् स्यध्वम्, स्ये स्यावहि स्यामहि ॥३।३।१६॥

इयं क्रियातिपत्तिसंज्ञा।

## नवाद्यानि शतृक्वसू च परस्मैपदम् ॥३।३।१९॥

सर्वासां त्यादिविभक्तीनामाद्यानि नववचनानि शतृक्वसू च कृतौ प्रत्ययौ एषां परस्मैपदमितिसंज्ञा।

## पराणि कानानशौ चात्मनेपदम् ॥३।३।२०॥

स्पष्टम्।

## त्रीणित्रीण्यन्ययुष्मदस्मदि ॥३।३।१७॥

सर्वासां त्यादिविभक्तीनां त्रीणि त्रीणि वचनानि अन्यदर्थे युष्मदर्थे अस्मदर्थे चाभिधेये यथाक्रमं परिभाष्यन्ते।

## सति ॥५।२।१९॥

सन् विद्यमान आरम्भापरिसमाप्त क्रियाप्रबन्धो वर्तमानस्तदर्थाद्धातोर्वर्तमाना स्यात्।

## तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च ॥३।३।२१॥

तदात्मनेपदं कृत्यक्तखलर्थाश्च प्रत्ययाः साप्यात्सकर्मकाद्धातोः कर्मणि, अनाप्यादकर्मकादविवक्षितकर्मकाच्च भावे भवन्ति।

## इङितः कर्तरि ॥३।३।२२॥

इकारेतो ङकारेतश्च धातोः कर्तर्यात्मनेपदं स्यात्।

## ईगितः ॥३।३।९५॥

ईकारेतो गकारेतश्च धातोः फलवति कर्तर्यात्मनेपदं स्यात्।

## शेषात्परस्मै ॥३।३।१००॥

पूर्वोक्तादात्मनेपदविधानादन्यः सर्वो धातुः शेषस्तस्मात् परस्मैपदं स्यात् कर्तरि।

## एकद्विबहुषु ॥३।३।१८॥

नव्यादिषु यानि त्रीणि त्रीणि वचनान्युक्तानि तानि एकद्विबहुष्वर्थेषु परिभाष्यन्ते । आख्यातवाच्यकारकवाचिनि युष्मदर्थे युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने वा मध्यमप्रत्ययत्रिकम् । अस्मदर्थे प्रयुज्यमानेऽप्रयुज्यमाने परस्मैपदे वाऽऽत्मनेपदे वाऽन्त्यप्रत्ययत्रय प्रयोज्यम् । शेषे प्रथमत्रिकम् । भूसत्तायाम् ॥ अस्माद्धातोः कर्तरि विवक्षिते भू तिव् इतिस्थिते वकारो वित्कार्यार्थः ।

## कर्तर्यनद्भ्यः शव् ॥३।४।७१॥

अदादिवर्जधातोः कर्तरि विहिते शिति शव् प्रत्ययः स्यात् । शकारवकारौ कार्यार्थौ ।

## नामिनो गुणोऽक्ङिति ॥४।३।१॥

नाम्यन्तस्य धातोः कित् ङिद्वर्जिते प्रत्यये परे आसन्नो गुणः स्यात् । यथा वेषः । भवति । भवतः ।

## शिदवित् ॥४।३।२०॥

विद्वर्जः शित् ङिद्वत्स्यात् । इति तसि गुणाभावेऽपि शव्निमित्तो गुणः । लुगस्यादेत्यपदे इत्यकारलुकि, भवन्ति । भवसि । भवथः । भवथ ।

## म्व्यस्याः ॥४।२।११३॥

धातोर्विहिते मादौ वादौ च प्रत्ययेपरेऽत आः स्यात् । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

## स्पर्धे ॥७।४।११९॥

स च त्वं च भवथः । स चाहं च भवावः । स च त्वं चाहं च भवामः ।

## विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थने ॥५।४।२८॥

विधिरज्ञाते नियोगः । क्रियायां प्रेरणा । अज्ञातज्ञापनमित्येके । प्रेरणायामेव यस्यां प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम् । प्रेरणायामेव यस्यां प्रत्याख्याने कामचारस्तदामन्त्रणम् । प्रेरणैव सत्कारपूर्विकाऽधीष्टम् । सम्प्रधारणा सम्प्रश्नः । प्रार्थनं याच्ञा । एष्वर्थेषु सप्तमी पञ्चमी च स्यात् । सम्भावनादिषु च ।

## यः सप्तम्याः ॥४।२।१२२॥

अतः परस्य सप्तम्या या इयः स्यात् । शिष्यो गुरुसेवी भवेत् । भवेदसौ मध्यस्थस्वभावात् । भवेताम् ।

## याम्युसोरियमियुसौ ॥४।२।१२३॥

अकारात्परयोरनयोरेतावादेशौ स्तः। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

## प्रैषानुज्ञावसरे कृत्यपञ्चम्यौ ॥५।४।२९॥

न्यक्कारपूर्विका प्रेरणा प्रैषः। अनुज्ञा कामचारानुमतिः। अवसरः प्राप्तकालता। एतदर्थत्रये पञ्चमीकृदन्तकृत्यप्रत्ययाश्च। कटं करोतु भवानिति, प्रागुक्त विध्यादिष्वपि पञ्चमी। त्रिसन्ध्यमावश्यकं करोतु भवान्। अध्ययनायोद्यतो भवतु चैत्रः। आशिष्यपि पञ्चमी।

## आशिषि तुह्योस्तातङ् ॥४।२।११९॥

स्पष्टम्। आयुष्मान् भवतु भवान्। भवताद्वा। भवताम्। भवन्तु।

## अतः प्रत्ययाल्लुक् ॥४।२।८५॥

धातोः परस्यादन्तप्रत्ययस्य योऽकारस्तस्मात्परस्य हेर्लुक् स्यात्। भव। भवताद्वा। भवतम्। भवत। भवानि। भवाव। भवाम।

## अनद्यतने ह्यस्तनी ॥५।२।७॥

आन्याय्यादुत्थानादान्याय्याच्च संवेशनादहरुभयतः सार्धरात्रं वाऽद्यतनः कालस्तस्मिन् सति भूतेऽर्थे वर्तमानाद्धातोर्ह्यस्तनी स्यात्।

## ख्याते दृश्ये ॥५।२।८॥

लोकविज्ञाते दृश्ये प्रयोक्तुः शक्यदर्शने भूतानद्यतनेऽर्थे धातोर्ह्यस्तनी स्यात्। अरुणत्सिद्धराजोऽवन्तीम्। परोक्षापवादः। ख्यात इति किम्? चकार कटं चैत्रः। दृश्य इति किम्? जघान कंसं किल वासुदेवः।

## अड्धातोरादिर्ह्यस्तन्यांचामाङा ॥४।४।२९॥

ह्यस्तन्यामद्यतनीक्रियातिपत्त्योश्च विषये धातोरादिरवयवोऽट् स्यात् न तु माङ्योगे। अभवत्। अभवद्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम। योऽभवज्जिनार्चा।

## अविवक्षिते ॥५।२।१४॥

परोक्षत्वेनाविवक्षिते भूतानद्यतने ह्यस्तनी स्यात्। अभवद्वीरोऽर्हन्।

## स्मेच वर्तमाना ॥५।२।१६॥

भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्मे पुरादौ चोपपदे वर्तमाना स्यात्। शिष्यास्तत्र भवन्ति स्म। पुरा भवसि ते पयम्। अभवदित्यर्थः।

## अद्यतनी ॥५।२।४॥

भूतेऽर्थे धातोरद्यतनी स्यात् ।

## सिजद्यतन्याम् ॥३।४।५३॥

अद्यतन्यां परस्यां धातोः परः सिच् प्रत्ययः स्यात् । इकार उच्चारणार्थः । चकारो विशेषणार्थः ।

## पिबैतिदाभूस्थः सिचो लुप्परस्मै न चेट् ॥४।३।६६॥

एभ्यः परस्य सिचः परस्मैपदे लुप् स्यात् । लुप्सन्नियोगे चैतेभ्यो नेट् स्यात् ।

## भवतेः सिज्लुपि ॥४।३।१२॥

सिचो लुपि भवतेर्न गुणः ।

## अवौ दाधौ दा ॥३।३।५॥

दा धा इत्येवं रूपौ धातू दासंज्ञौ स्तः । दावृक् लवने ॥ दाप् नहि । धेट् शोषणे ॥ अवदातं सुखम् । पतौ पितौ धातू अपत्ये । अडागमेऽद्यतन्यां च धातोः । अभूत् । अभूताम् । अभू स् अन् इतिस्थिते सिज्लोपे धातोरिवर्णोवर्ण- स्येत्युवादेशो ।

## भुवोव परोक्षाद्यतन्योः ॥४।२।४३॥

अमपोः परतो धान्तस्य भुव उवः परोक्षाद्यतन्योस्स्यात् । अभूवन् । अभूः । अभू- तम् । अभूत । अभूवम् । अभूव । अभूम ।

## परोक्षे ॥५।२।१२॥

भूतानद्यतने परोक्षेऽर्थे धातोः परोक्षा स्यात् । भू णव् इति स्थिते । णकारो वृद्ध्यर्थः ।

## द्विर्धातुः परोक्षाङे प्राक्तु स्वरे स्वरविधेः ॥४।१।१॥

परोक्षायां ङे च प्रत्यये परे धातुर्द्विः स्यात्, स्वरादौ तु द्वित्वनिमित्ते स्वरस्य कार्यात्प्रागेव द्वित्वं स्यात् । तेन निनायेत्यादौ वृद्धेः प्रागेव द्वित्वम् ।

## भूस्वपोरदुतौ ॥४।१।७०॥

भूस्वपोः परोक्षायां द्वित्वे सति पूर्वस्य क्रमात् अत् उत् स्यात् ।

## द्वितीयतुर्ययोः पूर्वौ ॥४।१।४२॥

द्वित्वे पूर्वयोर्द्वितीयतुर्ययोः क्रमादाद्यतृतीयौ स्याताम् । वादेशो भुवोव इत्यनेन च बभूव भीलीरः । बभूवतुः । बभूवुः ।

## स्कृऽसृवृभृस्तुद्रुश्रुस्रोर्व्यञ्जनादेः परोक्षायाः॥४।४।८१॥

स्कृगसस्तथा सर्वधातुभ्य परस्य व्यञ्जनादेः परोक्षाया आदिरिट् स्यात्। सृ भृ वृ स्तु द्रु श्रु स्रु एतान् वर्जयित्वा। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

## कृतास्मरणातिनिह्नवे परोक्षा ॥५।२।११॥

कृतस्य व्यापारस्यास्मरणे तथाऽपलापेऽपरोक्षेऽपि भूतानद्यतनेऽर्थे धातोः परोक्षा स्यात्। सुप्तोऽहं किल विललाप। नाहं कलिङ्गान् जगाम।

## आशिष्याशीःपञ्चम्यौ ॥५।४।३८॥

परस्येष्टार्थशंसनमाशीः। तदर्थे धातोराशीः पञ्चमी च विभक्तिर्भवति। भू क्यात् इति स्थिते। ककारो गुणनिषेधार्थः। भूयात्कल्याणं विजयमङ्गलरिम्यः। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।

## अनद्यतने श्वस्तनी ॥५।३।५॥

अनद्यतनभविष्यदर्थे धातोः श्वस्तनी स्यात्। भू ता इतिस्थिते।

## स्ताद्यशितोऽत्रोणादेरिट् ॥४।४।३२॥

धातोः परस्य सकारादेस्तकारादेश्चाशितः प्रत्ययस्यादिरिट् स्यात् नतु अत्र-स्य उणादिषु च। भविता श्वः पुत्रोत्सवः। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

## भविष्यन्ती ॥५।३।४॥

सामान्यतो भविष्यदर्थाद्धातोर्भविष्यन्ती स्यात्। स्ताद्यशितादिरिट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

## पुरायावतोर्वर्तमाना ॥५।३।७॥

अनयोरुपपदयोर्भविष्यदर्थाद्धातोर्वर्तमाना स्यात्। पुराभवति। यावद्भवति। भविष्यतीत्यर्थः।

## कदाकर्ह्योर्नवा ॥५।३।८॥

कदा भवति। कदा भविष्यति। एवं कर्हियोगे। कर्हि भवति। कर्हि भविष्यति।

## माङ्यद्यतनी ॥५।४।३९॥

माङ्युपपदे धातोरद्यतन्येव स्यात्। मा भूत्।

## सस्मे ह्यस्तनी च ॥५।४।४०॥

स्मसहिते माङ्युपपदे ह्यस्तनी, अद्यतनी च स्यात्। मा स्म भवत्। मा स्म भूत्।

## अयदि स्मृत्यर्थे भविष्यन्ती ॥५।२।९॥

स्मृत्यर्थे धातावुपपदे भूतानद्यतनार्थे भविष्यन्ती स्यात् न तु यच्छब्देन योगे। स्मरसि साधो सिद्धाद्रौ वत्स्यामः। यच्छब्दयोगे तु स्मरसि मित्र यत्तत्र तपस्विनोऽभवाम।

## धातोः सम्बन्धे प्रत्ययाः ॥५।४।४१॥

धात्वर्थानां विशेषणविशेष्यभावे सति, अयथाकालमपि प्रत्ययाः स्युः। विश्वदृश्वाऽस्य पुत्रो भविता। भावि कृत्यमासीत्।

## प्रचये नवा सामान्यार्थस्य ॥५।४।४३॥

भृशाभीक्ष्ण्ये यथाविधीति च नानुवर्तते। प्रचये धात्वर्थानां समुच्चये गम्ये सामान्यार्थस्य धातोः परौ हिस्वौ तध्वमौ तद्युष्मदि वा स्याताम्। व्रीहीन् वप लुनीहि पुनीहि इत्येवं यत्यते यतते वा। पक्षे वपति लुनाति पुनाति इत्येव यतते चैत्रः। यतत चैत्र। सूत्रमधीष्व। नियुक्तिमधीष्व। भाष्यमधीष्वेत्येवाधीते पक्षे सूत्रमधीते। नियुक्तिमधीते। भाष्यमधीते इत्येवमधीते। एवं तध्वमोरप्युदाहरणीयानि।

## भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मदि ॥५।४।४२॥

गुणक्रियाणामधिश्रयणादीनां क्रियान्तरैरव्यवहितानां साकल्य फलातिरेको वा भृशत्वम्। प्रधानक्रियाया विच्छेदाभावे क्रियान्तरैरव्यवहिताया पौनःपुन्यमाभीक्ष्ण्यम्। सर्वकालेऽर्थे वर्तमानाद्धातोः सर्वविभक्तिवचनविषये हिस्वौ स्तः, यतो धातोः यत्र च कारके हिस्वौ विधीयेते तस्यैव धातोस्तत्कारकविशिष्टस्यानुप्रयोगे सति। तथा तध्वमौ हिस्वौ च तद्युष्मदि विशिष्ट तध्वमसम्बन्धिनि युष्मदभिधेये भवतो यथाविधि धातोरनुप्रयोगे। लुनीहि लुनीहीत्येवायं लुनाति। अधीष्वाधीष्वेत्येवायमधीते। लुनीत लुनीत इत्येव यूयं लुनीथ। लुनीहि लुनीहि वा। अधीध्वमधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेति वा।

## सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः ॥५।४।१॥

सप्तम्या अर्थो निमित्तं हेतुफलकथनादिका सामग्री क्वचिद्वैगुण्यादिकपायाः अनभिनिर्वृत्तौ सत्यां भविष्यदर्थाद्धातोः सप्तम्यर्थे क्रियातिपत्तिर्विभक्तिः स्यात् । सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । एवं दशापि विभक्तयः ।

## अदुरुपसर्गान्तरो णहिनुमीनानेः ॥२।३।७७॥

दुर्वर्जोपसर्गस्थादन्तःशब्दस्थाच्च रेफषकारात्परस्य णहिनुमीनाभिसम्बन्धिनो नकारस्य णत्वं स्यात् । णेति णोपदेशधातुग्रहणम् । उपसर्गाण्णत्वविधानात् । प्रभवाणि । दुर्वर्जनाद्दुर्भवानि । अन्तर्भवाणि ।

## अकखाद्यषान्ते पाठे वा ॥२।३।८०॥

पाठे धातूपदेशे कादिः खादिर्वा षकारान्तश्च यो धातुस्तदन्यस्मिन् धातौ परे अदुरुपसर्गान्तःशब्दस्थाद्रेफषकारात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥ भू सत्तायामिति सत्तार्थोऽत्रोपलक्षणम् । भूतो घटो भवति इत्यादावुत्पद्यते इत्याद्यर्थात् । उपसर्गा अतएवार्थविशेषद्योतकाः । प्रभवति । पराभवति । सम्भवति । अनुभवति । अभिभवतीत्यादौ विविधार्थोपगतेः । उक्तं च, उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । विहाराहारसंहारप्रहारप्रतिहारवत् ॥ १ ॥ पा पाने ॥ २ ॥ अनुस्वार एकस्वरादनुस्वारेत इतीण्निषेधार्थः ।

## श्रौतिकृवुधिवुपाघ्राध्मास्थाम्नादाम्दृश्यर्तिशदसदः शृकृधिपिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदम् ॥४।२।१०८॥

श्रुणोत्यादीनां शिति परे आदयः क्रमात् स्युः । पिबेरदन्तत्वान्न शपि गुणः । पिबति । पिबतः । पिबन्ति । पिबेत् । पिबेताम् । पिबेयुः । पिबतु । पिबतात् । पिबताम् । पिबन्तु । अपिबत् । अपिबताम् । अपिबन् । पिबेतिदाम्भ्वातिसिज्लोपे अपात् । अपाताम् ।

## सिज्विदोऽभुवः ॥४।२।९२॥

सिच्प्रत्ययान्ताद्विदश्च धातोः परस्यान्तः जुस् स्यात् । जकार इत् ।

## इडेत्पुसि चातो लुक् ॥४।३।९४॥

क्ङित्यशिति स्वरे, इटि, एतिपुसि च परे आदन्तस्य धातोर्लुक् स्यात्। अपुः। अपाः। अपातम्। अपात। अपाम्। अपाव। अपाम।

## ह्रस्वः ॥४।१।३९॥

द्वित्वे सति पूर्वस्य ह्रस्वः स्यात्।

## आतो णव औः ॥४।२।१२०॥

आतः परस्य णव औः स्यात्। पपौ।

## इन्ध्यसंयोगात्परोक्षाकिद्वत् ॥४।३।२१॥

इन्धेर्धातोरसंयोगाच्च पराऽवित्परोक्षा किद्वत्स्यादिति कित्त्वादिडेत्पुसीत्यातो लुक्। पपतुः। पपुः।

## सृजिदृशिस्कृस्वराऽत्वतस्तृज्नित्यानिटस्थवः ४।४।७८

सृजिदृशिभ्यां तथा स्कृद्युक्कृगो धातोस्तथा स्वरान्तादकारोपान्त्याच्च तृचि नित्यानिटो विहितस्य थव आदिरिड् वा स्यात्। पपिथ। पपाथ। पपथुः। पप। पपौ। पपिव। पपिम।

## गापास्थासादामाहाकः ॥४।३।९६॥

एषां क्ङित्याशिष्येः स्यात्। पेयात्। पेयास्ताम्। पेयासुः। पेयाः। पेयास्तम्। पेयास्त। पेयासम्। पेयास्व। पेयास्म।

## एकस्वरादनुस्वारेतः ॥४।४।५६॥

एकस्वरादनुस्वारेतो धातोः स्ताद्यशित आदिरिण्न स्यात्। पाता। पातारौ। पातारः। पास्यति। पास्यतः। पास्यन्ति। अपास्यत्। अपास्यताम्। अपास्यन्। घ्रां गन्धोपादाने ॥ १ ॥ जिघ्रति। जिघ्रेत्। जिघ्रतु। जिघ्रतात्। अजिघ्रत्।

## धेघ्राशाच्छासो वा ॥४।३।६७॥

एभ्यः परस्य सिचः परस्मैपदे लुप् वा स्यात्। अघ्रात्। पक्षे।

## स सिजस्तेर्दिस्योः ॥४।३।६५॥

सिजन्ताद्धातोरस्तेश्च परयोर्दिस्योरादिरीत् स्यात्।

## यमिरमिनम्यातः सोऽन्तश्च ॥ ४।४।८६ ॥

एभ्यस्तथाऽऽकारान्तेभ्यश्च परस्मैपदे परे सिच आदिरिट् स्यात्, एषां च सोऽन्तः।

# इट ईति ॥४।३।७१॥

इट' परस्य सिर्चाईसि परे लुक्स्यात्। अघ्रासीत्। अघ्राताम्। अघ्रासिषुम्। अघ्रु'। अघ्रासिपु'। अघ्रा'। अघ्रासी'। अघ्रातम्। अघ्रासिष्टम्। अघ्रात। अघ्रासिष्ट। अघ्राम्। अघ्रासिषम्। अघ्राव। अघ्रासिष्व। अघ्राम। अघ्रासिष्म। परोक्षायां घ्राघेति द्वित्वे।

# व्यञ्जनस्यानादेर्लुक् ॥४।१।४४॥

द्वित्वे पूर्वस्यानादेर्व्यञ्जनस्य लुक्स्यात्। द्वितीय तुर्ययोरिति घस्य गत्वे।

# गहोर्जः ॥४।१।४०॥

द्वित्वे पूर्वयोर्गहोर्ज' स्यात्। जघ्रौ। जघ्रतु'। जघ्रु'। जघ्रिथ। जघ्राथ। जघ्रधु'। जघ्र। जघ्रौ। जघ्रिव। जघ्रिम।

# संयोगादेर्वाशिष्येः ॥४।३।९५॥

सयोगादेरादन्तस्य क्ङित्याशिष्येर्वा स्यात्। घ्रेयात्। घ्रायात्। घ्रेयास्ताम्। घ्रायास्ताम्। घ्रेयासु'। घ्रायासु'। घ्राता। घ्रास्यति। अघ्रास्यत्। ध्मा शब्दाग्नि सयोगयो' ॥ ४ ॥ धमति । ४। अध्मासीत्। दध्मौ। ध्मायात्। ध्मेयात्। ध्माता। ध्मास्यति। अध्मास्यत्। ष्ठा गतिनिवृत्तौ ॥ ५ ॥

# षः सोऽष्ट्यैष्ठिवष्वष्कः ॥२।३।९८॥

पाठे धात्वादे' ष' स' स्यात्तु ष्ट्यैष्ठिवष्वष्काम्। अरदन्त्यपरसकारादय: स्मिसिदिस्वदिस्विदिस्विपयश्च। षोपदेशाः सृपिसृजिस्त्यास्तृसृसेकृवर्जम् ॥ १ ॥ निमित्ताभावे नैमित्तिकस्याप्यभाव इति ठस्य थत्वे स्था धातु'। तिष्ठति ४। अस्थात्। अस्थाताम्। अस्थु'।

# अघोषे शिटः ॥४।१।४५॥

द्वित्वे पूर्वस्य शिटस्तस्मिन्सेवाघोषे लुक् स्यात्। तस्थौ। तस्थतु'। तस्थुः। तस्थिथ। तस्थाथ।

# स्थासेनिसिधसिचसञ्जां द्वित्वेऽपि ॥२।३।४०॥

उपसर्गस्थात्सम्यन्तस्थात्स्कवर्णाच्च परेषामेषामट्यवधानेऽपि सस्य ष' स्यात् द्वित्वेऽपि। अधितष्ठौ। स्थेयात्। स्थाता। स्थास्यति। अस्थास्यत्। म्ना अभ्यासे ॥ ६ ॥ मनति ४। अम्नासीत्। मम्नौ। म्नेयात्। म्नायात्। म्नाता। म्नास्यति। अम्नास्यत्। दाँ दाने ॥ ७ ॥ यच्छति ४। सिचो दासञ्ज्ञत्वात् पिबैतीत्यादिना

लुप्। अधात्। दधौ। गापास्थेत्येकारे धेयात्। धाता। धास्यति। अधास्यत्। जि ज्रि अभिभवे ॥ ८ ॥ जयति। जयेत्। जयतु। जयतात्। अजयत्।

## सिचि परस्मै समानस्याङिति ॥४।३।४४॥

समानान्तस्य धातोः परस्मैपदविषये सिचि, अङिति वृद्धिः स्यात्। अजैषीत्। अङितीति किम्? धूधातोः कुटादित्वान्ङित्त्वेन अधुवीत्। नात्र वृद्धिः। अजैष्टाम्। अजैषुः। अजैषीः। अजैष्टम्। अजैष्ट। अजैषम्। अजैष्व। अजैष्म।

## जेर्गिः सन्परोक्षयोः ॥४।१।३५॥

सनि परे परोक्षायां च परस्यां द्वित्वे सति पूर्वात्परस्य जेर्गिः स्यात्।

## नामिनोऽकलिहलेः ॥४।३।५१॥

नाम्यन्तस्य धातोर्नामिनोऽकलिहलिवर्जस्य ञिति णिति च वृद्धिः स्यात्। जिगाय। योऽनेकस्वरस्य। जिग्यतुः। जिग्युः। जिगयिथ। जिगेथ। जिग्यथुः। जिग्य।

## णिद्वान्त्यो णव् ॥४।३।५८॥

परोक्षायामन्त्यो णव् वा णित्स्यात्। जिगय जिगाय। जिगियिव। जिगियिम।

## दीर्घश्च्वियङ्यक्क्येषु च ॥४।३।१०८॥

च्वौ यङि यक्क्ये च यकारादावाशिषि च परतोऽन्त्यस्वरस्य दीर्घः स्यात्। जीयात्। जीयास्ताम्। जीयासुः। जेता। जेष्यति। अजेष्यत्। एतावभिभवे न्यूनीकरणे न्यूनीभवने वा। प्रथमे सकर्मकः। अरीञ्जयति। द्वितीये सकर्मकः। अध्ययमास्पराजयते। अध्येतुं ग्लायतीत्यर्थः।

## परावेर्जेः ॥३।३।२८॥

आत्मनेपदं कर्तरि। विजयते। क्षि क्षये ॥९॥ अकर्मकः। अन्तर्भावितण्यर्थत्वे सकर्मकः। क्षयति। अक्षैषीत्। चिक्षाय। चिक्षियतुः। चिक्षियुः। चिक्षयिथ। चिक्षेथ। क्षीयात्। शेषं जिवत्। ई इ दु द्रु स्रुं गतौ ॥ १० ॥ अयति। अयेत्। अयतु। आयत्। आयताम्। आयन्। ऐषीत्। ऐष्टाम्। ऐषुः। इयाय। इयतुः। इयुः। योऽनेकस्वरस्येति द्वित्वे सति यत्वम्। प्रयति। अयतन्याम्।

## णिश्रिद्रुस्रुकमः कर्तरि ङः ॥ ३।४।५८॥

इति वक्ष्यमाणविधिना अदुद्रुवत्। दुद्राव। दुद्रुवतुः। दुद्रुवुः। थपि द्रुवर्जमा-भेद। दुद्रोथ। द्रूयात्। द्रोता। दुधातोस्तु दुदविथ। दुदोथ। दवति। दुदाव।

शुश्रुषतु । शुश्रोष । सूयात् । सोता । सुषाती सषति । णिभीति के असुस्त्र- षत् । सुप्रसवैश्वर्ययो ॥ ११ ॥ प्रसवोऽभ्यनुज्ञानम् । सवति ४ ।

# धूञ्सुस्तोः परस्मै ॥४।४।८५॥

एभ्यः परस्मैपदे सिच आदिरिट् स्यात् । इत्यग्रग्रहणे असावीत् । पक्षे अ सौषीत् । अयोपदेशत्वात् षत्वम् । सुसाव । सुसोथ । सुसविथ । पोपदेशोऽय दीक्षितमते । सूयात् । सोता । सोष्यति । षु स्यैर्यं ॥ १२ ॥ षाल्लुती । धुवति ४ । दीक्षितमतेऽय कुटादी गत्यर्थः । ध्रुवति । स्मृ चिन्तायाम् ॥ १३ ॥ स्मरति ४ । अस्मार्षीत् । अस्मार्ष्टाम् । अस्मार्षुः । स्मृ स्मृ इति द्वित्वे सति ।

# ऋतोऽत् ॥४।१।३८॥

द्वित्वे सति पूर्वस्य ऋतोऽत्स्यात् । सस्मार ।

# संयोगादृदर्त्तेः ॥४।३।९॥

संयोगात्परो यऋकारस्तदन्तस्यार्तेश्चाकस्तुकानघर्य्यपरोक्षायां गुणः स्यात् । सस्म रतुः । सस्मरुः ।

# ऋतः ॥४।४।७९॥

ऋकारान्ताद्धातोस्थवि नित्यामिटो विहितस्य थव आदिरिण्न स्यात् । सस्मर्थ । सस्मरथुः । सस्मर । सस्मार । सस्मरिव । सस्मरिम ।

# क्ययङ्ङाशीर्ये ॥४।३।१०॥

संयोगात्परो यऋकारस्तदन्तस्यार्तेश्च क्ययङाशीर्ये गुणः स्यात् । स्मर्यात् । स्मर्यास्ताम् । स्मर्यासुः । स्मर्ता ।

# हनृतः स्यस्य ॥४।४।४९॥

हन्तेः ऋदन्ताच्च परस्य स्यस्यादिरिट् स्यात् । स्मरिष्यति । अस्मरिष्यत् । ह्वृ कौटिल्ये ॥१४॥ ह्वरति । अह्वार्षीत् । जह्वार । जह्वरतुः । जह्वर्थ । ह्वर्यात् । श्रौस्रृ ध्वोपतापयोः ॥ १५ ॥ स्वरति ४ । अस्वारीत् । अस्वारिष्टाम् । पक्षे अस्वार्षीत् । अस्वार्ष्टाम् । सस्वार । सस्वरिथ । थवि नित्यानिट्त्वाभावाच्च विकल्पः । सस्वर्थ स्पपि दीक्षितः । सस्वरिव । सस्वरिम । स्वर्यात् । औदित्त्वात् । स्वर्ता । स्वरिता । स्वरिष्यति । अस्वरिष्यत् । हनृतः स्यस्येतिपरत्वान्नित्यमिट् । तृ प्लवनतरणयोः ॥ १६ ॥ तरति ४ । अतारीत् । अतारिष्टाम् । अतारिषुः । ततार ।

# स्कृच्छ्रृतोऽकि परोक्षायाम् ॥४।३।८॥

स्टा सहितस्य कृगश्छेस्तथा ऋदन्तानां च परोक्षायां गुणः स्यात् । कोपलक्षितपरोक्षाया न गुणः । तर् इति जाते ।

## तॄत्रपफलभजाम् ॥४।१।२५॥

एषां चतुर्णामपि परोक्षासेट्थवयोः परयोः स्वरस्य, एः स्यान्न च द्विः। तेरतुः। तेरुः। तेरिथ।

## ॠतां क्ङितीर् ॥४।४।११६॥

दीर्घऋकारान्तस्य धातोः क्ङिति क्ङिति च परे इर् स्यात्।

## भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने ॥२।१।६३॥

तीर्यात्।

## वृतो नवाऽनाशीः सिच्परस्मै च ॥४।४।३५॥

वृवॄभ्यां तथा ऋकारान्तेभ्यश्च परस्येटो दीर्घो वा स्यात्, न तु परोक्षायामाशिषि सिचि परस्मैपदे च। तरिता। तरीता। तरिष्यति। तरीष्यति। अतरिष्यत्। अतरीष्यत्। सृ गतौ ॥ १७ ॥ सरति ४।

## सर्त्यर्त्तेर्वा ॥३।४।६१॥

सृऋभ्यां कर्तर्यद्यतन्यां वाऽङ् स्यात्। अत्र कथात्मनेपदविधिर्वा।

## ऋवर्णदृशोऽङि ॥४।३।७॥

गुणः। असरत्। पक्षे असार्षीत्। असार्ष्म। सर्त्यर्त्ती जौहोत्यादिकाविति दीक्षितः। ससार। ससर्थ। ससृव। ससृम। ऋदिस्त्वाशेट्।

## रिः शक्याशीर्ये ॥४।३।११०॥

ऋकारान्तस्य धातोर्यत्र स्यान्न मो यपे आशीर्ये च परे रिः स्यात्। स्रि-यात्। सर्ता। सरिष्यति।

## वेगे सर्तेर्धाव ॥४।२।१०७॥

शिति परे धावो। धावति। ऋ प्रापणे च ॥ १८ ॥ चाद्गतौ। श्रौतीत्यादिना ऋच्छति।

## स्वरादेस्तासु ॥४।४।३१॥

स्वरादेर्धातोरादेः स्वरस्य ह्यस्तन्यद्यतनीक्रियातिपत्तिषु विषये वृद्धिः स्यात्। आर्च्छत्। आर्च्छताम्। आर्च्छन्। आर्षीत्। आर्ष्म। पक्षे सर्त्यर्त्तेर्वा आरत्। द्वित्वे वृद्धौ। आर। आरतुः। आरुः।

## ऋवृव्येऽद इट् ॥४।४।८०॥

अर्तेर्वृङो व्ययतेरदश्च धातोः परस्य थव आदिरिट् स्यात् । आरिथ । अर्षीत् । अर्ता । अरिष्यति । आरिष्यत् । घृ घृ सेचने ॥ १९ ॥ गरति । अगार्षीत् । जगार । जगर्थ । जग्रिव । जग्रिम । ग्रियात् । गर्ता । गरिष्यति । अगरिष्यत् । धृ वरणे ॥ २० ॥ ध्वृ हूर्छने । ध्वरति । अध्वार्षीत् । दध्वार । दध्वर्थ । धेट् पाने ॥ २१ ॥ धयति ।

## आत्सन्ध्यक्षरस्य ॥४।२।१॥

धातोः सन्ध्यक्षरान्तस्य आः स्यान्न तु शिति । ततश्च दासञ्ज्ञा ।

## ट्धेश्वेर्वा ॥३।४।५९॥

आभ्यां कर्तर्यद्यतन्यां ङो वा स्यात् । द्विर्धातुरिति द्वित्वे पूर्वस्य ह्रस्वत्वे दत्वे च अदधत् । अदधताम् । अदधन् । पक्षे ट्धेश्वेति सिज्लोपे । अधात् । अधाताम् । अधुः । विकल्पद्वये धेरूप्यमिति यमिरमिनम्यातः सोऽन्तश्च । अधासीत् । अधासिष्टाम् । अधासिषुः । दधौ । धाता । धेय पायात् । ध्यै चिन्तायाम् ॥ २२ ॥ ध्यायति । अध्यासीत् । दध्यौ । दध्यतुः । दध्युः । दध्यिथ । दध्याथ । ध्येयात् । ध्यायात् । ग्लै हर्षक्षये ॥ २३ ॥ धातुक्षये इत्यर्थः । म्लै गात्रविनामे । कान्तिक्षये इत्यर्थः । ग्लायति । अग्लासीत् । जग्लौ । जग्लिथ । जग्लाथ । ग्लेयात् । ग्लायात् । द्यै न्यक्करणे ॥ २४ ॥ द्यायति । अद्यासीत् । दद्यौ । द्रै स्वप्ने ॥ २५ ॥ ध्रै तृप्तौ ॥ २६ ॥ कै गै रै शब्दे ॥ २७ ॥ अकासीत् । अगासीत् । अरासीत् । इत्यादि । ष्ट्यै स्त्यै शब्दसंघातयोः ॥ २८ ॥ ष्ट्यायति । स्त्यायति । खै खदने ॥२९॥ क्षै जै षै क्षये ॥ ३० ॥ क्षायति । जायति । सायति । अजासीत् । ससौ । जजौ । गापास्थेत्यत्र स्यतेरेव ग्रहणादस्य सायादित्यत्र नैकारः । असासीत् । नात्र सिच्लुक् । श्रै स्रै पाके ॥ ३१ ॥ पै ओवै शोषणे ॥ ३२ ॥ पेयात् । अपासीत् । अयं गैवत् । आशिषि पायादिति दीक्षितः । ष्णै वेष्टने ॥ ३३ ॥ स्नायति । दैप् शोधने ॥ ३४ ॥ दायति । दासञ्ज्ञाऽभावाद्दायात् । अदासीत् । इत्यत्र नैकारसिज्लोपौ । तक हसने ॥ ३५ ॥ तकति । फक्क नीचैर्गतौ ॥ ३६ ॥ तकि कृच्छ्रजीवने ॥ ३६ ॥ शुक गतौ ॥ ३७ ॥ बुक्क भाषणे । भषण इत्यन्ये । ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः ॥ ३८ ॥ ओखति । गुरुनाम्यादेरित्याम् । ओखाञ्चकार । शाखृ श्लाखृ व्याप्तौ ॥ ३९ ॥ कक्ख हसने ॥ ४० ॥ उख नख णख मख रख लख मखु रखु लखु रिखु इख इखु ईखु वल्ग रगु लगु तगु श्रगु श्लगु अगु वगु मगु स्वगु त्रगु त्वगु रिगु लिगु गतौ ॥ ४१ ॥ णवि नख् णख् इति द्वित्वे ।

---

१ [illegible] महत्वमिति [illegible] इत्यत्र [illegible] । [illegible] महत्वमिति [illegible] ।

# लघोरुपान्त्यस्य ॥४।३।४॥

धातोरुपान्त्यस्य नामिनो लघोरकिति गुणः स्यात्। इति गुणे।

# पूर्वस्यास्वे स्वरे य्वोरियुव् ॥४।१।३७॥

द्विस्वे पूर्वस्येवर्णोवर्णयोरस्वे स्वरे इयुवौ स्तः। उवोच। ऊचतुः। ऊचुः। इह समानानां तेन दीर्घस्य पूर्वग्रहणेन ग्रहणाद्रूस्वः प्राप्तोऽपि न भवति सकृत्प्रवृत्तत्वात्। पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः परत्वात्।

# उदितः स्वरान्नोऽन्तः ॥४।४।१८॥

उदितो धातोः स्वरात्परो नोऽन्तः स्यात्। मङ्खति। खगु कम्पने च ॥ ४० ॥ खङ्गती। मुधु मृधु बुधु वर्जने ॥ ४१ ॥ गग्ध हसने ॥ ४४ ॥ रक्ष पालने ॥ ४५ ॥ वर्जनेऽपीत्यन्ये। चिपु आघ्राणे ॥ ४६ ॥ चिङ्खति। लघु शोषणे ॥ ४७ ॥ लङ्घति। चवर्गान्ताः। शुच शोके ॥ ४८ ॥ शोचति। कुच शब्दे तारे ॥ ४० ॥ कोचति। कुञ्च गतौ ॥ ४९ ॥ कुञ्च च कौटिल्याल्पीभावयोः ॥ ५० ॥ लुञ्च अपनयने ॥ ५१ ॥

# नो व्यञ्जनस्यानुदितः ॥४।२।४५॥

व्यञ्जनान्तस्यानुदितो धातोरुपान्त्यस्य नकारस्य किति ङिति च परे लुक् स्यात्। कुच्यात्। कुच्यात्। लुच्यात्। अर्च पूजायाम् ॥ ५२ ॥ अर्चति। आर्चत्। आर्चीत्। आर्चिष्टाम्।

# अनातो नश्चान्त ऋदाद्यशौ संयोगस्य ॥४।१।६१॥

ऋवर्णादेरश्नोतेः संयोगान्तस्य च परोक्षायां द्विस्वे पूर्वस्यादेरात्स्थानादन्यस्याकारस्य स्यात्। कृतात्स्थान् नोऽन्तश्च। आनर्च। आनर्चतुः। आनर्चुः। अर्च्यात्। अर्चिता। अर्चिष्यति। अञ्चु गतौ च ॥ ५३ ॥ चात्पूजायाम्।

# अञ्चोऽनर्चायाम् ॥४।२।४६॥

अच्यात्। पूजायाम्। अञ्च्यात्। वच् चच् तच् त्वच् मच् मुच् म्रुच् म्लुच् ग्लुच् ग्लुञ्च् षस्ज् गतौ ॥ ५४ ॥ ग्रुचु ग्लुचु स्तेये ॥ ५५ ॥ गतावपि केचित्।

# ऋदिच्छ्विस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चू- ञ्चो वा ॥२।४।६५॥

ऋदितो धातोः श्विप्रभृतिभ्यश्च कर्तर्यद्यतन्यां परस्मैपदे परे वाऽङ् स्यात्। अम्रुचत्। अम्रोचीत्। अम्लुचत्। अम्लोचीत्। अग्रुचत्। अग्रोचीत्। अग्लुचत्। अग्लोचीत्। अग्लुञ्चीत्। षस्ज गतावस्य सस्य धात्वादेरिति सत्व धाः। सज्जति। म्लेच्छ अव्यक्तायां वाचि ॥ ५६ ॥ म्लेच्छति। याचृ याच्ञायाम् ॥५७॥

घाञ्छति । लच्छ लाच्छु लक्षणे ॥ ५७ ॥ लाञ्छति । अनात इति सूत्रेऽनाकार स्थानकथनात् । आछु आयामे ॥ ५८ ॥ आञ्छ । आञ्छतुः । आञ्छुः । कश्चित्तु आनाञ्छ । आनाञ्छतुरिति । ह्रीच्छ लज्जायाम् ॥ ५९ ॥ जिह्रीच्छ । हूर्छा कौटिल्ये ॥ ६० ॥ हूर्च्छति । मूर्च्छा मोहसमुच्छ्राययोः ॥ ६१ ॥ मूर्च्छति । स्फुर्च्छा विस्मृतौ ॥ ६२ ॥ स्फूर्च्छति । युच्छ प्रमादे ॥ ६३ ॥ उछु उञ्छे ॥ ६४ ॥ धान्यकणादाने इत्यर्थः । उञ्छति ।

## गुरुनाम्यादेरनृच्छूर्णोः ॥३।४।४८॥

गुरुर्नामी आदिर्यस्य तस्माद्धातोः ऋच्छूर्णुवर्जं परस्याः परोक्षायाः स्थाने आमादेशः स्यात् । आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते । उञ्छाञ्चकार । धृज धृञ्जु ध्वज ध्वञ्जु ध्रज ध्रञ्जु वज व्रज षस्ज गतौ ॥ ६४ ॥ धर्जति । धृञ्जति । ध्रजति ।

## वदव्रजलः ॥४।३।४८॥

वदव्रजोर्लकारान्तानां रेफान्तानां च धातूनामुपान्त्यस्याकारस्य परस्मैपदे परे सिचि वृद्धिः स्यात् । अव्राजीत् । सज्जति । कश्चिदात्मनेपदमपि । अज क्षेपणे च ॥ ६० ॥ चाद्गतौ । अजति ।

## अघञ्क्यबलच्यजेर्वी ॥४।४।२॥

घञ् क्यप् अल् अच् वर्जेऽशिति विषयभूतेऽजेर्वीत्यादेशो वा स्यात् । अवैषीत् । आजीत् । विवाय । विव्यतुः । अत्र वकारस्य व्यञ्जनपरत्वात् य्वादेर्नामिन इति दीर्घे प्राप्ते स्वरस्य परे प्राग्विधाविति स्थानिवद्भावेन स्वरपरत्वम् । न च न मा वीति निषेध इति वाच्यम् । स्वरदीर्घयलोपेषु लोपस्वरादेशः एव न स्थानिवदित्युक्तेः । थवि सृजिदृशीत्यादिना वेट् । विवयिथ । विवेथ । तदुक्तम् । स्वरान्तोऽकारवान्वा यस्तृच्यनिट् थवि वेडयम् । अकर्त्तृईड्ङ्स्यानिट् त्राद्यन्यः सेट् परोक्षके ॥ १ ॥ पक्षे आजिथ । विव्यथुः । विव्य । विवाय । विवय । विव्यिव । आजिव । विव्यिम । आजिम । वीयात् । अज्यात् । वेता । अजिता । वेष्यति । अजिष्यति । अवेष्यत् । आजिष्यत् । कुजू खुजू स्तेये ॥ ६५ ॥ कोजति । खोजति । अर्ज षर्ज अर्जने ॥ ६६ ॥ अर्जति । आनर्ज । सर्जति । कर्ज व्यथने ॥ ६७ ॥ चकर्ज । खर्ज मार्जने च ॥ ६८ ॥ खज मन्थे ॥ ६९ ॥ चखाज । खजु गतिवैकल्ये ॥ ७० ॥ खञ्जति । एजृ कम्पने ॥ ७१ ॥ एजति । एजाञ्चकार । ट्वोस्फूर्जा वज्रनिर्घोषे ॥ ७२ ॥ स्फूर्जति । क्षीज कूज गुज गुजु अव्यक्ते शब्दे ॥ ७३ ॥ गोजति । गुञ्जति । लजलजु तर्ज भर्त्सने ॥ ७४ ॥ अनादेशादेरेकव्यञ्जनमध्ये इति वक्ष्यमाणमेत्वम् । लेजतुः । लाज लाजु भर्जने च ॥७५॥ लाजति । लाञ्जति । जज जजु युद्धे ॥ ७६ ॥ जजाज । जेजतुः । जजञ्ज । जजञ्जतुः । तुज

---

१ सेट् सूत्रमात्रा नास्त्यादयाम ... वर्णोनस्त्रीव ।

हिंसायाम् ॥ ७७ ॥ तोजति । अतोजीत् । तुञ्ज पालने च ॥ ७८ ॥ तुञ्जति । गर्ज गञ्ज गृज गृञ्ज मुज मुञ्ज ध्वज ध्वञ्ज शब्दे ॥ ७९ ॥ जगर्ज । जगर्जतुः । जगर्ज । जगृञ्जतुः । गज मदने च ॥ ८० ॥ चाच्छब्दे । मदन मदोत्पत्तिः । गजति । व्यञ्जनादेर्वोपान्त्यस्यात इति वा वृद्धौ अगाजीत् । अगजीत् । त्यज हानौ ॥ ८१ ॥ त्यजति ।

## व्यञ्जनानामनिटि ॥४।३।४५॥

इति वृद्धौ । अत्याक्षीत् । धुड्ह्रस्वादिति सिज्लुकि । अत्याक्ताम् । अत्याक्षुः । तत्याज । षञ्ज सङ्गे ॥ ८२ ॥

## दंशसञ्जःशवि ॥४।२।४९॥

इति नलोपे । सजति । रञ्जीं रागे ॥ ८३ ॥

## अकट्घिनोश्च रञ्जेः ॥४।२।५०॥

रञ्जेरकटि घिनणि शवि चोपान्त्यस्य नस्य लुक् । रजति । स्वञ्जेरपि केचित् । स्वजते ।

## स्वञ्जश्च ॥२।३।४५॥

उपसर्गस्थान्निमित्तात्स्वञ्जः सस्य षत्वम् । परिष्वजते । द्वित्वे त्वादेरेव । परिषस्वजे । अथ टवर्गान्ताः । शौटृ गर्वे इत्यपि क्वचित् पाठः । शौडृ गर्वे । शौडति । शुशौड । यौडृ बन्धे । यौडति । म्रेडृ म्लेडृ उन्मादे । द्वितीयो दान्तः । म्रेडति म्लेडति । कटे वर्षावरणयोः । चकाट ॥ ८४ ॥ सिचि ।

## न श्विजागृशसक्षणह्म्येदितः ॥४।३।४९॥

श्व्यादेर्हकारमकारयकारान्तानामेदितां च धातूनां परस्मैपदे सेटि सिचि वृद्धिर्न स्यात् । अकटीत् । शट रुजाविशरणगत्यवसादनेषु ॥ ८५ ॥ शटति । किट खिट त्रासे ॥ ८६ ॥ शिट षिट अनादरे ॥ ८७ ॥ शेटति । सेटति । जट झट संघाते ॥ ८८ ॥ पिट शब्दे च ॥ ८९ ॥ पेटति । भट भृतौ ॥ ९० ॥ तट उच्छ्राये ॥ ९१ ॥ खट काङ्क्षे ॥ ९२ ॥ णट नृत्तौ ॥ ९३ ॥ पाठे धात्वादेर्णो नः । नटति । नोपदेशोऽयमित्येके । प्रनटति । हट दीप्तौ ॥ ९४ ॥ षट अवयवे ॥ ९५ ॥ चिट परप्रेष्ये ॥ ९६ ॥ चेटति । विट शब्दे ॥ ९७ ॥ हेठ विबाधायाम् ॥ ९८ ॥ जिहेठ । दान्तोऽयमित्येके । अट पट इट किट कट कडु कटी गतौ ॥ ९९ ॥

## अस्यादेराः परोक्षायाम् ॥४।१।६८॥

धातोर्द्वित्वे सति पूर्वस्यादेरकारस्याकारः स्यात् । आट । आटतुः । आटुः । पटति ।

## व्यञ्जनादेर्वोपान्त्यस्यातः ॥४।३।४७॥

व्यञ्जनादेर्धातोरुपान्त्यस्याकारस्य सेटि सिचि परस्मैपदे परे वा वृद्धिः स्यात् । अपाटीत् । अपटीत् ।

## ञ्णिति ॥४।३।५०॥

ञिति णिति च प्रत्यये परे धातोरुपान्त्यस्याकारस्य वृद्धिः स्यात् । पपाठ ।

## अनादेशादेरेकव्यञ्जनमध्येऽतः ॥४।१।२४॥

अषित्परोक्षासेट्थयोः परयोर्योऽनादेशादिर्धातुस्तत्सम्बन्धिनोऽकारस्यासंयुक्तव्यञ्जनमध्यगतस्यैकारः स्यादभ्यासलोपश्च न द्विः । पेठतुः । पेठुः । चट वेष्टने ॥ १०० ॥ चचाट ।

## न शसददवादिगुणिनः ॥४।१।३०॥

शसिददयोर्वकारादीनां गुणिनां च धातूनां स्वरस्यैत्वं न स्यात् । चचटतुः । चचटुः । चट्ट विभाजने ॥ १०१ ॥ चण्टति । लुट विलोडने ॥ १०२ ॥ डान्तोऽयमिति कश्चित् । कुट्ट वैकल्ये ॥ १०३ ॥ कुण्टति । मुट प्रमर्दने ॥ १०४ ॥ चुट चुट्ट अल्पीभावे ॥ १०५ ॥ चोटति । चुण्टति । रुट्ट लुट्ट स्तेये ॥ १०६ ॥ रुण्टति । लुण्टति । स्फुट स्फुट्ट विदारणे ॥ १०७ ॥ अस्फुटत् । अस्फोटीत् । लट बाल्ये ॥ १०८ ॥ रट रठ च परिभाषणे ॥ १०८ ॥ रटति । रराट । रेटतुः । रठति । पठ व्यक्तायां वाचि ॥ १०९ ॥ पपाठ । वठ स्थौल्ये ॥ ११० ॥ ववठतुः । मठ मद निवासयोश्च ॥ १११ ॥ अमठीत् । अमाठीत् । कठ कृच्छ्रजीवने ॥ ११२ ॥ हठ बलात्कारे ॥ ११३ ॥ उठ रुठ लुठ उपघाते ॥ ११४ ॥ ओठति । उवोठ । रुरुठतुः । रोठति । लोठति । पिठ हिंसासंक्लेशयोः ॥११५॥ पेठति । शठ कैतवे च ॥११६॥ शुठ गतिप्रतिघाते ॥ ११७ ॥ कुठु लुठु आलस्ये च ॥११८॥ शुठु शोषणे ॥११९॥ अठ रुठु गतौ ॥ १२० ॥ अथ डान्ताः ॥ मुडु प्रमर्दने ॥ १२१ ॥ मुडु खण्डने च मडु भूषायाम् ॥१२२॥ गडु वदनैकदेशे ॥१२३॥ गण्डगतमङ्गनक्रियायामित्यर्थः । गण्डति । शौडृ गर्वे ॥ १२४ ॥ यौडृ सम्बन्धे ॥ १२५ ॥ मेडृ म्रेडृ म्लेडृ लोडृ लौडृ उन्मादे ॥ १२६ ॥ शौडादयो लोडृपर्यन्ता इत्यन्ये । रोडृ रौडृ तौडृ अनादरे ॥ १२७ ॥ क्रीडृ विहारे ॥ १२८ ॥ चिक्रीड । तुडृ तूडृ ओडृ तोडने ॥ १२९ ॥ तोडति । तूडति । प्रथमः संयुक्तान्त इत्येके । हूडृ हुडृ हौडृ होडृ गतौ ॥१३०॥ व्रोडृ प्रतिघाते ॥ १३१ ॥ चिड आक्रोशे ॥ १३२ ॥ अड उद्यमे ॥ १३३ ॥ आड । आडतुः । लड विलासे ॥ १३४ ॥ लडति । ललाड । ल्लडति । कडु मदे ॥ १३५ ॥ अयमात्मनेपदेऽपि । कण्डते । चुडु हावकरणे ॥ १३६ ॥ हावकरणमभिप्रायसूचनम् । चुडुति । चुचुडु । अडु अभियोगे ॥१३७॥ अडुति । आनडु । कडु कार्कश्ये ॥ १३७ ॥ कडुति । चकडु । चयोऽप्येते दोपान्त्याः । एषां क्विपि चुत् अत् कत् इति । अथ टवर्गीयान्तेषु णकारान्ताः । अण रण वण भ्रण बण भण भ्रण मण धण ध्वण ध्रण कण क्वण चण शब्दे ॥ १३८ ॥ अणनीत्यादि । ओणृ अपनयने ॥ १३९ ॥ ओणाञ्चकार । शोणृ वर्णगत्योः ॥ १४० ॥ श्रोणृ श्लोण सङ्घाते ॥ १४१ ॥ पैणृ गतिप्रेरणश्लेषणेषु ॥ १४२ ॥ पैणति । अथ तवर्गान्ताः ॥ अत सातत्यगमने ।

अततिं । आतीत् । आतिष्टाम् । आतिषु । ध्यञ्जनादेरिति किम्? । मा भवानतीत् । चिते सज्ञाने ॥ १४३ ॥ चेतति । अचेतीत् । अचेतिष्टाम् । अचेतिषुः । च्युतृ आसेचने ॥ १४४ ॥ आसेचनमार्द्रीकरणम् । च्योतति । कविरत्नाह । अच्युतत् । अच्योतीत् । श्चुतृ श्चुतृ श्च्युतृ क्षरणे ॥ १४५ ॥ श्च्योतति । श्च्योतेत् । श्च्योततु । अश्च्योतत् । अश्च्योतीत् । जुतृ भासने ॥ १४६ ॥ अतु बन्धने ॥ १४७ ॥ अन्तति । कित निवासे रोगापनयने संशये च ॥ १४८ ॥ केतति ।

## कितः संशयप्रतिकारे ॥३।४।६॥

सन् स्यात् । चिकित्सति । संशेते इत्यर्थः । व्याधिं चिकित्सति । प्रतिकरोतीत्यर्थः । अन्यत्र चुरादिपाठात् केतयति । पतॢ पथे च गतौ ॥१४९॥ पतति ।

## श्वयत्यसुवचपतःश्वास्थवोचपप्तम् ॥४।३।१०३॥

इति पप्तादेशो अपप्तत् । पपात । पेततुः । पेतुः । पथति । अपथीत् । पतौ ऋदित्वात् । कुथु पुथु लुथु मथु मन्थ मान्थ हिंसासंक्लेशनयोः ॥ १५० ॥ उदित्वात् श्नोपाभावः । कुन्थ्यात् । मन्थ्यात् । मथ्यात् । अर्द गतियाचनयोः ॥ १५१ ॥ आनर्द । नर्द णर्द गर्द शब्दे ॥ १५२ ॥ णोपदेशाभावान्न णत्वम् । प्रनर्दति । णोपदेशोऽपि प्रणर्दति । तर्द हिंसायाम् ॥ १५३ ॥ कर्द कुत्सिते शब्दे ॥ १५४ ॥ कुत्सिते कौक्ष इत्यर्थः । खर्द दशने ॥ १५५ ॥ अतु बन्धने ॥ १५६ ॥ इदु परमैश्वर्ये ॥ १५७ ॥ इन्दति । इदाञ्चकार । बिदु अवयवे ॥ १५८ ॥ पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । णिदु कुत्सायाम् ॥ १५९ ॥ खादृ भक्षणे ॥१६०॥ ऋकार इत् । खादति । अचखादत् । अखादीत् । खद स्थैर्ये हिंसायां च ॥ १६१ ॥ स्थैर्येऽकर्मकः । खदति । व्यञ्जनादेरिति वृद्धौ । अखादीत् । अखदीत् । चखाद । बद स्थैर्ये ॥ १६२ ॥ पवर्गतृतीयादिः । बदति । अबादीत् । अबदीत् । बबाद । बेदतुः । बेदुः । बेदिथ । गद व्यक्तायां वाचि ॥ १६३ ॥ गदति । अगादीत् । अगदीत् । अगादिष्टाम् । अगदिष्टाम् । जगाद ।

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु ॥२।३।७९॥

अदुरुपसर्गान्तस्थाद्रषुवर्णात्परस्य नेरुपसर्गस्य गदादिषु धातुषु परेषु णः स्यात् । डकारयोगान्मादग्नोर्मेग्रहणम् । मातिमिनोतिमीनोतीनां म । दा इति दासंज्ञाग्रहणम् । प्रणिगदति । रद विलेखने ॥ १६४ ॥ भदन इत्यर्थः । णद निर्दिष्टा अव्यक्ते शब्दे ॥ १६ ॥

## पाठे धात्वादेर्णो नः ॥२।३।९७॥

पाठविषय धात्वादेर्णस्य नः स्यात् । णतिनर्दिनाटिनाथिनाधिनन्दिनक्किनृनृतां णोपदेशाः । नाटीति मरण अपस्यन्दन इति चुरादयजनम् । मौबादिकस्य

णटन्नृसाविस्यस्य प्रणटयति । तवर्गतुर्यान्तनाधतेर्नूनयोश्च कश्चिण्णोपदेशतामाह । अदुरुपसर्गेत्यादिना समासेऽसमासे वा णत्वम् । प्रणदति । प्रणिनदति । टुनदु समृद्धौ ॥ १६६ ॥ नन्दति । उदित्वान्नलोपो न । नन्द्यात् । चदु आह्लादनदीप्त्योः ॥ १७१ ॥ चचन्द । छद ऊर्जने ॥ १७२ ॥ छदति । श्रदु चेष्टायाम् ॥ १६७ ॥ कदु क्रदु क्लदु रोदनाह्वानयोः ॥ १६८ ॥ क्लिदु परिदेवने ॥ १६९ ॥ स्कन्दृ गतिशोषणयोः ॥ १७० ॥ स्कन्त्वा । षिधू गत्याम् ॥ १७३ ॥ असेधीत् । सिषेध । सेधिता ।

## स्थासेनिसिधसिचसञ्जां द्वित्वेऽपि ॥२।३।४०॥

प्रतिषेधति । प्रतिषिषेध । प्रतिषिषेधिषति । प्रत्यषेधत् । परिनिर्विभ्यो निषेधति ।

## गतौ सेधः ॥२।३।६१॥

इति । न षत्वम् । अभिसेधति । षिधौ शास्त्रमाङ्गल्ययोः ॥ १७४ ॥ शास्त्रं शासनम् ।

## धूगौदितः ॥४।४।३८॥

धूग औदितश्च धातोः परस्य स्तादेशित आदिरिड् वा स्यात् । असैत्सीत् ।

## धुड्ह्रस्वाल्लुगनिटस्तथोः ॥४।३।७०॥

धुडन्ताद्ध्रस्वान्ताच्च धातोः परस्यानिटः सिचस्तथोः परयोर्लुक् स्यात् ।

## अधश्चतुर्थात्तथोर्धः ॥२।१।७९॥

चतुर्थात्परयोस्तकारथकारयोर्धारूपवर्जाद्धातोर्विहितयोर्धकारः स्यात् । असैद्धाम् । असैत्सु । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे । असेधीत् । असेधिष्टामित्यादि । शुन्ध शुद्धौ ॥ १७५ ॥ न लुक् । शुध्यात् । स्तन धन ध्वन चन स्वन शब्दे ॥ १७६ ॥ स्तनति । स्वनति । गृभ्र मेति वा णत्वम् । स्वेनतुः । सस्वनतुः । वनति । अवानीत् । अवनीत् । ववान । ववनतुः । वन षण भक्तौ ॥ १७७ ॥ सनति । असानीत् । असनीत् । ससान । सेनतुः ।

## ये न वा ॥४।२।६२॥

गनसनजनां ये क्ङिति प्रत्यये परे नस्याकारो वा स्यात् । सन्यात् । अन्यमते सायात् । सन्यादिति च । य इत्यकारान्तनिर्देशात्स्य क्तितीति क्ये साय्यते । सन्यते । कनी दीप्तिकान्तिगतिषु ॥ १७८ ॥ अथ पवर्गान्ताः ॥ गुपौ रक्षणे ॥ १७९ ॥

## गुपौधूपविच्छिपणिपनेरायः ॥३।४।१॥

एभ्य स्वार्थे आय प्रत्यय स्यात्। आयप्रत्ययान्तानामपि त्वादेव क्रिया- पेक्षाद्धातुसंज्ञा। गोपायति।

## अशवि ते वा ॥३।४।४॥

गुपादिभ्यस्त आयादयोऽशवि विषये वा स्युः। अगोपायीत्। अगौप्सीत्। अगोपीत्।

## धातोरनेकस्वरादाम्परोक्षायाः कृम्वस्तिचानुतद- न्तम् ॥३।४।४६॥

धातोरनेकस्वरात्परस्या परोक्षाया स्थाने आमित्यादेश स्यात्। आम- न्ताच्च परे कृभ्वस्तयो धातव परोक्षान्ता अनु पश्चादनन्तरं प्रयुज्यन्ते।

## अतः ॥४।३।८२॥

अकारान्ताद्धातोर्विहितेऽशिति प्रत्यये तस्यैव धातोर्लुगन्तादेश स्यात्। गोपायाञ्चकार। गोपायाम्बभूव। गोपायामास। पक्षे। जुगोप। जुगुपतु। जुगुपु। जुगोपिथ। औदित्त्वाद्वेडिति केचित्। जुगोप्थ। गुप्यात्। गोपाय्यात्। गोपिता। गोप्ता। गोपायिता। तप धूप सन्तापे ॥ १८० ॥ धूपायति। अधूपा- यीत्। अधूपीत्। धूपायाञ्चकार। दुधूप। धूपायिता। धूपिता। रप लप व्यक्ते वचने ॥ १८१ ॥ जप मानसे च ॥ १८२ ॥ चप सान्त्वने ॥ १८३ ॥ षप समवाये ॥ १८४ ॥ सृप्लृ गतौ ॥ १८५ ॥

## ऌदिद्द्युतादिपुष्यादेः परस्मै ॥३।४।६४॥

ऌदित्। असृपत्।

## स्पृशादिसृपो वा ॥४।४।११२॥

इति वा अदागमे। स्रप्ता। सर्प्ता। चुप मन्दायां गतौ ॥ १८६ ॥ तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ हिंसायाम् ॥ १८७ ॥ तोपति। अतोपीत्। तुतोप। तुम्पति। अतुम्पीत्। तुतुम्प। तुतुम्पतु। संयोगात्परस्या परोक्षायाः कित्त्वाभावान्नलो- पाभाव। आशिषि कित्त्वाभावे लुक् स्यात्। तुप्यात्।

## प्रात्तुम्पतेर्गवि ॥४।४।९७॥

प्रात्परस्य तुम्प इत्यस्य धातोः स्सडादि स्यात् गवि कर्तरि। प्रस्तुम्पति वत्सो मातरम्। इहाद्यौ द्वौ पञ्चमषष्ठौ च मीरेफौ अन्ये सरेफा। मर्फ रफ रगु

१ केचित्तिक्ते [illegible] । [illegible] । किन्तु [illegible]—[illegible] । [illegible] ।

सर्व कर्व खर्व गर्व चर्व तर्व नर्व पर्व बर्व शर्व षर्व सर्व रिफु रभु गतौ ॥ १८८ ॥ कुभु आच्छादने ॥ १८९ ॥ कुम्भति । लुभु तुभु अर्दने ॥ १९० ॥ जुपु यष्कसयोगे ॥ १९१ ॥ जुम्पति । अजुम्पीत् । जुजुम्प । स्तम् स्तम्भ् क्षिम् पिम् मर्भ हिंसायाम् ॥ १९२ ॥ शुम्भ भाषणे च ॥ १९३ ॥ यम जम मैथुने ॥ १९४ ॥ यमति । जभ मतुर्गात्सयोर्थ ॥ यम्भा ।

## जभः स्वरे ॥४।४।१००॥

स्वरात्परो नोऽन्त[1] । जम्भति ।

## अडप्रतिस्तब्धनिस्तब्धे स्तम्भः ॥२।३।४१॥

उपसर्गस्थाभिनिसात्परस्य स्तम्भाते सस्य षत्व द्विलेऽप्यपि च । विष्ट भाति । वितष्टम्भ । व्यष्टभात् । अडप्रतिस्तब्धनिस्तब्ध इति किम्? व्यतस्तम्भत् ।

## व्यवात्स्वनोऽशने ॥२।३।४३॥

सस्य षत्व द्विलेऽप्यड्यपि । विष्वणति । अवष्वणति । भुङ्क्ते इत्यर्थः ।

## सदोऽप्रतेः परोक्षाया त्वादेः ॥२।३।४४॥

प्रतिवर्जमुपसर्गस्थाभिनिसात्परस्य सदो धातोः सस्य षत्व स्यात् । परोक्षायां तु द्वित्वे सति पूर्वस्यैव स्यात् । निषीदति । परोक्षाया त्वादेरेव । निषसाद । षम ष्टम वैकल्ये ॥ १९५ ॥ ससाम । तस्ताम । अम शब्दभक्त्योः ॥१९६॥ अमति । आमीत् । आम । णम प्रह्वत्वे ॥ १९७ ॥ नमति । अनसीत् । ननाम । नेमतुः । नम्यात् । नन्ता । नस्यति । गम्लृ गतौ ॥ १९८ ॥

## गमिषद्यमश्छः ॥४।२।१०६॥

एषां शिति छः स्यात् । गच्छति । लृदित्त्वादङि । अगमत् । अगमताम् । जगाम । गमहनेत्युपान्त्यलुकि जग्मतुः । जग्मुः । जगमिथ । जगन्थ । जगाम । जगम । गम्यात् । गन्ता ।

## गमोऽनात्मने ॥४।४।५१॥

अशिति सादेरिट् । गमिष्यति । यम् उपरमे ॥ १९९ ॥ यच्छति । अय सीत् । स्यम् शब्दे ॥ २०० ॥ स्यमति । स्येमतुः । सस्यमतुः । क्रमू पाद विक्षेपे ॥ २०१ ॥

---

1 जभिरः स्वरान्तोम्तः [illegible] इति [illegible] स्वरादौ प्रत्यये नोऽन्त-[illegible] । [illegible] । तथा [illegible] जभः स्वरे इति [illegible] । [illegible] —

आसम्लाशभ्रमक्रमत्रसित्रुटिलषियसिसंयसेर्वा ॥३।१।७३॥

एभ्यः कर्तरि विहिते शिति वा श्यन् स्यात् ।

## क्रमो दीर्घः परस्मै ॥४।२।१०९॥

क्रमधातो दीर्घः स्यात्परस्मैपदविषये शित्यऽलादौ । क्राम्यति । पक्षे क्रामति ।

## क्रमः ॥४।४।५३॥

अस्मात्परस्य स्ताद्यशित आदिरिट् स्यादनात्मनेपदे । मकारान्तत्वान्न वृद्धिः । अक्रमीत् ।

## कहश्चज् ॥४।१।४६॥

द्वित्वे पूर्वयोः कहोश्चजौ स्तः । चक्राम । चक्रमतुः । क्रमिता । क्रमिष्यति । चमू छमू जमू झमू जिमू अदने ॥ २०२ ॥

## ष्ठिवुक्लम्वाचमः ॥४।२।११०॥

ष्ठिवे क्लमेराङ्पूर्वाच्चमेश्च शिति दीर्घः स्यात्, अलादौ । तिबादिभिर्व्यवधानतो न स्यात् । ष्ठीवति । क्लाम्यति । क्लामति । आचामति । अम द्रम हम्म मीमृ गतौ ॥ २०३ ॥ अमोऽर्थभेदार्थं पुनः पाठः । द्रमति । अद्रमीत् । दद्राम । हम्मति । अहम्मीत् । जहम्म । मीमति । अमीमीत् । मिमीम । हय हर्य क्लान्तौ च ॥२०४॥ चाद्गत्याम् । अहयीत् । मव्य बन्धने ॥२०५॥ मव्यति । सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यायाम् ॥ २०६ ॥ सुसूर्क्ष्य । दन्त्यादिस्तालव्य पक्षम् । ईर्क्ष्यति । ईर्ष्यति । शुच्य चुच्य अभिषवे ॥२०७॥ प्रकृष्टानां द्रव्याणां परिवासः अभिषवः । स्नानमित्यन्ये । शुशुच्य । त्सर छद्मगतौ ॥ २०८ ॥ अत्सारीत् । तत्सार । कमर हूर्छने ॥ २०९ ॥ अभ्र वभ्र मभ्र गतौ ॥ २१० ॥ आनभ्र । चर भक्षणे च ॥ २११ ॥ चरति । धोर्ऋ गतेश्चातुर्ये ॥ २१२ ॥ अधोरीत् । धोरति । खोर्ऋ प्रतिघाते ॥२१३॥ गतेरित्यनुवर्तते । चुखोर । फल निष्फला विशरणे ॥ २१४ ॥ अफालीत् । पफाल । फेलतुः । मील श्मील स्मील क्ष्मील निमेषणे ॥ २१५ ॥ निमेषणं सङ्कोचः । पील प्रतिष्टम्भे ॥ २१६ ॥ प्रतिष्टम्भो रोधनम् । णील वर्णे ॥ २१७ ॥ वर्णोपलक्षितायां क्रियायामित्यर्थः । शील समाधौ ॥ २१८ ॥ समाधिरैकाग्र्यम् । कील बन्धे ॥ २१९ ॥ कूल आवरणे ॥ २२० ॥ शूल रुजायाम् ॥ २२१ ॥ तूल निष्कर्षे ॥ २२२ ॥ निष्कर्षोऽन्तःस्थस्य

---

१ [illegible] (३।१।१५) [illegible] ।

बर्हिर्निस्सारणम् । पूल सघाते ॥ २२३ ॥ मूल प्रतिष्ठायाम् ॥ २२४ ॥ फल निष्पत्तौ ॥ २२५ ॥ फुल्ल विकसने ॥ २२६ ॥ चुल्ल हावकरणे ॥ २२७ ॥ चिल्ल शैथिल्ये च ॥ २२८ ॥ पेल्ल फेल्ल चेल्ल पेल्ल सेल्ल षेल्ल सल तिल तिल्ल पल्ल वेल्ल गतौ ॥ २२९ ॥ वेल्ल चेल्ल केल्ल फेल्ल खेल्ल स्वाल चलने ॥ २३० ॥ सल सचये च ॥ २३१ ॥ म्वल म्वल्ल आशुगमने ॥ २३२ ॥ गल चर्व अदने ॥ २३३ ॥ अगालीत् । अचर्वीत् । पूर्व पर्व मर्व पूरणे ॥ २३४ ॥ मर्व भवु शाव गतौ ॥ २३५ ॥ धन्वति । अशावीत् अशावीत् । कर्व खर्व गर्व दर्पे ॥ २३६ ॥ अगर्व । ष्ठिव् क्षिव् निरसने ॥ २३७ ॥ ष्ठीवति ।

## तिर्वा ष्ठिवः ॥४।१।४३॥

ष्ठिवेर्द्वित्वे पूर्वस्य तिर्वा स्यात् । तिष्ठेव । टिष्ठेव । चिक्षेव । जीव प्राणधारणे ॥ २३८ ॥ जिजीव । पीव मीव तीव णीव स्थौल्ये ॥ २३९ ॥ उर्वै तुर्वै थुर्वै दुर्वै धुर्वै जुर्वै अर्व मर्व शर्व हिंसायाम् ॥ २४० ॥ मुर्वै मव च बन्धने ॥ २४१ ॥ गुर्वै उद्यमे ॥ २४२ ॥ पिवु मिवु णिवु सेचने ॥ २४३ ॥ सेचनमित्येके । हिवु दिवु जिवु प्रीणने ॥ २४४ ॥ इवु व्याप्तौ ॥ २४५ ॥ इन्वति । इन्वाञ्चकार । अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभावबृद्धिषु ॥२४६॥ अवति । आवीत् । मा भवानवीत् । कश शब्दे ॥२४७॥ सौत्रोऽयमित्येके । मिश मश रोषे च ॥ २४८ ॥ शश प्लुतिगतौ ॥ २४९ ॥ उत्प्लुत्यगमन इत्यर्थः । णिश समाधौ ॥ २५० ॥ दश दशने ॥ २५१ ॥ दशन दन्तकर्म ।

## दशसञ्जः शवि ॥४।२।४९॥

अनयोरुपान्त्यनस्य लुक् स्यात् । दशति । सजति । शवीति किम्? ददंश । दृशं प्रेक्षणे ॥ २५२ ॥ पश्यति ।

## अः सृजिदृशोऽकिति ॥४।४।१११॥

अनयोः स्वरात्परो धुडादौ प्रत्ययेऽदन्तः स्यात् । नतु किति । द्रष्टा इति जाते । व्यञ्जनानामनिटीतिवृद्धौ यजसृजेति शस्य षत्वे ।

## षढो. क सि ॥२।१।६२॥

से परे षढोः कः स्यात् । नाम्यन्तस्थेति सस्य षत्वे । अद्राक्षीत् । अद्राष्टाम् । अद्राक्षुः । अद्राक्षीः । अद्राष्टम् । अद्राष्ट । अद्राक्षम् । अद्राक्ष्व । अद्राक्ष्म । पक्षे ऋदिच्छ्वि—इत्यङि । स्वरर्णदृशोऽङि गुणः । अदर्शत् । अदर्शताम् । ददर्श । ददृशतुः । ददृशुः । ददर्शिथ । ददष्ठ । दृश्यात् । द्रष्टा । द्रक्ष्यति । घुषूं शब्दे ॥२५३॥ अघुषत् । अघोषीत् । चूष पाने ॥ २५४ ॥ तूष तुष्टौ ॥ २५५ ॥ पूष वृद्धौ ॥२५६॥

---

१ १ ह्रस्वस्यसीत्यङो हेतौ निम्नावे (लोकयात्रीवाश्रित्यर्थ) वाहनमार्गाहवित इतीव प हस्नमागहवित । पं म क० मि

रुष मृष स्नेहे ॥ २५७ ॥ पूष प्रसवे ॥ २५८ ॥ सूषति । ऊष रुजायाम् ॥ २५९ ॥ ऊषाञ्चकार । ईष उञ्छे ॥ २६० ॥ उञ्छ उच्चयनम् । कष शिष जष झष वष मष मुष रुष रिष यूष जूष शष चष हिंसायाम् ॥ २६१ ॥ वृष संघाते च ॥ २६२ ॥ भष भर्त्सने ॥ २६३ ॥ भषति । पैशुन्येन वचनीत्यर्थः । जिषू विषू मिषू पिषू प्लुषू वृषू सेचने ॥ २६४ ॥ चतुर्थो धातुभिर्न पठ्यते । मृषू सहने च ॥ २६५ ॥ मर्षति । उषू श्रिषू श्लिषू प्रुषू प्लुषू दाहे ॥ २६६ ॥ ओषति । औषीत् ।

## जाग्रुषसमिन्धेर्नवा ॥३।४।४९॥

एभ्यः परस्याः परोक्षाया आम्वा स्यात् । कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते । ओषाञ्चकार । पक्षे । उवोष । ऊषतुः । ऊषुः । उवोषिथ । कृष विलेखने ॥ २६७ ॥ कर्षति ।

## स्पृशमृशकृषतृपदृपो वा ॥३।४।५४॥

एभ्योऽद्यतन्यां सिज्वा स्यात् ।

## स्पृशादिसृपो वा ॥४।४।११२॥

स्पृशादिपञ्चकस्य सृपश्च स्वरात्परो धुडादौ प्रत्ययेऽदन्तो वा स्यात् न तु किति । अक्राक्षीत् । पक्षे दृशिवत् । हशिटो नाम्युपान्त्यादिति सकि । अकृक्षत् । अकृक्षतामित्यादि । अथागमाभावे व्यञ्जनानामनिटीति वृद्धौ । अकार्क्षीदित्यादि । घृषू संघर्षे ॥ २६८ ॥ हृषू अलीके ॥ २६९ ॥ अहर्षत् । पुष पुष्टौ ॥ २७० ॥ भूष तसु अलङ्कारे ॥ २७१ ॥ भूषति । तसति । तुस ह्रस ह्लस रस शब्दे ॥२७२॥ तोसति । लस श्लेषणक्रीडनयोः ॥२७३॥ ललास । लेसतुः । घस्लृ अदने ॥२७४॥ घसति । अयं न सार्वत्रिक इति केचित् । [illegible] । घस्मरः । अघसत् ।

## घस्वसः ॥२।३।३६॥

नाम्यन्तस्थाकवर्गात्परस्य घसेर्वसश्च धातोः सस्य षः स्यात् । जघास । जक्षतुः । जक्षुः । जघसिथ । जघस्थ । जक्षथुः । जक्ष । जघास । जघस । जक्षिव । जक्षिम । अद्य ।

## गमहनजनखनघस स्वरेऽनङि क्ङिति लुक् ॥४।२।४४॥

एषामुपान्त्यस्याङ्वर्जे स्वरादौ क्ङिति परे लुक्स्यात् । इत्युपान्त्यलोपः । घस्ता ।

---

१ अयं न सार्वत्रिके [illegible] । [illegible]

## सस्तः सि ॥४।३।९२॥

सकारान्तस्य धातोरशिति सादौ प्रत्यये परे तकारान्तादेशः स्यात्। घत्स्यति। लिङ्गाद्यभावाच्छाब्दिकप्रयोग इति केचित्।

## लृदिद्द्युतादिपुष्यादेः परस्मै ॥३।४।६४॥

लृदितस्तथा द्युतादेः पुष्यादेश्च कर्तर्यद्यतन्या परस्मैपदेऽङ् स्यात्। हसे हसने ॥ २७५ ॥ पिसृ पेसृ वेसृ गतौ ॥ २७६ ॥ पिपिसतुः। पिपेसतुः। वेसति। शसू हिंसायाम् ॥ २७७ ॥ वृन्त्योष्मान्तः। न शसदलेत्येत्व न। शशसतुः। शशसुः। शंसू स्तुतौ च ॥ २७८ ॥ शशंस। आशिषि नलोपः। शस्यात्। मिहृ सेचने ॥ २७९ ॥ मेढा। मेक्ष्यति। दह भस्मीकरणे ॥ २८० ॥ दहति। भ्वादेर्नामिनो दीर्घ इति ह्रस्व घत्वे। गडदबादेरिति दस्य धत्वे। धुक्षौ च। अधाक्षीत्। धुड्ह्रस्वादिति सिज्लोपे। अघभ्तुर्थेति तस्य धत्वे। अदाग्धाम्। अधाक्षुः। ददाह। देहतुः। देहुः। दह्यात्। दग्धा। धक्ष्यति। चह कल्कने ॥ २८१ ॥ कल्कन दम्भः शाठ्यं च। अचहीत्। रह त्यागे ॥ २८२ ॥ अरहीत्। रहु गतौ ॥ २८३ ॥ रंहति। दृह दृहु वृह वृहु वृद्धौ ॥ २८४ ॥ दर्हति। दृंहति। वर्हति। वृह वृहु शब्दे च ॥ २८५ ॥ अवृहत्। अवर्हीत्। वृंहति। उहृ तुहृ दुहृ अर्दने ॥ २८६ ॥ औहत्। औहीत्। उवोह। अतुहत्। अतोहीत्। अदुहत्। अदोहीत्। अर्ह मह पूजायाम् ॥ २८७ ॥ अर्हति। आर्हीत्। आनर्ह। मह्यात्। अथ क्षान्ता विंशतिः। सेटश्च। षान्तेषु पाठो युक्तो वैचित्र्यार्थं सिद्ध कृतः। उक्ष सेचने ॥ २८८ ॥ उक्षाञ्चकार। रक्ष पालने ॥ २८९ ॥ मक्ष मुक्ष सघाते ॥ २९० ॥ अक्षौ व्याप्तौ च ॥ २९१ ॥

## वाक्षः ॥३।४।७६॥

अक्षतेः श्नुर्वा शप् विषये। अक्ष्णोति। अक्षति। आक्षीत्। आष्टाम्। आक्षिष्टाम्। आनक्ष। अक्षिता। अष्टा। तक्षौ त्वक्षौ तनूकरणे ॥ २९२ ॥ तनूकरण कार्श्यम्।

## तक्षः स्वार्थे वा ॥३।४।७७॥

श्नुः स्यात्। तक्ष्णोति। तक्षति। इदमेव स्वार्थग्रहणं ज्ञापकम्। अनेकार्था धातव इति। अन्यत्र सन्तक्षति वाग्भिः शिष्यम्। भिर्त्सयतीत्यर्थः। अतक्षीत्। अताक्षीत्। त्वक्षति। त्वक्षिता। त्वष्टा। णिक्ष चुम्बने ॥ २९३ ॥ चुम्बन वक्त्रसंयोगः। अदुरुपसर्गेति णत्वे। प्रणिक्षति। निक्षिता। स्तृक्ष स्त्रक्ष णक्ष गतौ ॥ २९४ ॥ वक्ष रोषे ॥ २९५ ॥ सघात इत्येके। त्वक्ष त्वचने ॥ २९६ ॥ त्वचन त्वग्ग्रहणम्। सवरणं वा। अत्वक्षीत्। सूर्क्ष अनादरे ॥ २९७ ॥ काक्षु वाक्षु माक्षु काङ्क्षायाम् ॥ २९८ ॥ द्राक्षु ध्राक्षु ध्वाक्षु घोरवासिते च ॥ २९९ ॥ द्राङ्क्षति। इतिभ्वादयः परस्मैपदिनः ॥

आत्मनेपदिनः ॥ एध वृद्धौ ॥ १ ॥ एधते ।

## आतामाते आथामाथे आदिः ॥४।२।१२१॥

अत' परेषामेषामात इ' स्यात् । एधेते । एधन्ते । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे । एधेत । एधेयाताम् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् । एधेय । एधेवहि । एधेमहि । एधताम् । एधेताम् । एधन्ताम् । एधस्व । एधेथाम् । एधध्वम् । एधै । एधावहै । एधामहै । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि । ऐधिष्ट । ऐधिषाताम् ।

## अनतोऽन्तोऽदात्मने ॥४।२।११४॥

अनकारात्परस्यात्मनेपदेऽन्त इत्यस्य अतादेश' स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् ।

## सो वि वा ॥४।३।७२॥

धातो धावौ प्रत्यये परे सस्य लुग्वा स्यात् । ऐधिध्वम् । ऐधिढ्वम् । नित्यं ढ-मिति कश्चित् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । गुरुनाम्यादेरित्यामि । एधाञ्चक्रे ।

## आमः कृगः ॥३।३।७५॥

आम' परादनुप्रयुक्तात्कृग आम एव पूर्वो यो धातुस्तस्मादिव कर्तर्यात्मनेपदं स्यात् । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ।

## नाम्यन्तात्परोक्षाद्यतन्याशिषो धो ढः ॥२।१।८०॥

रेफान्तान्नाम्यन्ताच्च धातो' परासां परोक्षाद्यतन्याशिषां धो ढ' स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । कृभ्वस्ति धातुनदं नमित्यनुप्रयोगवचनादासो भूश्च' । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । एधिता । एधितारौ । एधितार' । एधितासे । एधितासाथे । एधिताध्वे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे । ऐधिष्यत । ऐधिष्येताम् । इत्यादि । स्पर्ध सङ्घर्षे ॥ २ ॥ सङ्घर्षः पराभिभवेच्छा । धात्वर्थेनोपसङ्ग्रहादकर्मकः । स्पर्धते । अस्पर्धिष्ट । अपोषपिट' । पस्पर्धे । स्पर्धिषीष्ट । स्पर्धिता । स्पर्धिष्यते । अस्पर्धिष्यत । गाङ् गतौ ॥ ३ ॥ गाते । गाते । गाते । गासे । गाथे । गाध्वे । गै । गावहे । गामहे । गेत । गेयाताम् । गेरन् । गाताम् । गाताम् । गाताम् । गास्व । गाथाम् । गाध्वम् । गै । गावहै । गामहै । अगात । अगाताम् । अगात । अगास्त । जगे । गासीष्ट ।

१ [illegible] । [illegible] कर्मणोऽकर्मिका क्रिया ।

गाता । गास्यते । अगास्यत । ष्मिङ् ईषद्धसने ॥ ४ ॥ स्मयते । अस्मेष्ट । अस्मे पाताम् । सिष्मिये । सिष्मियाते ।

## हान्तस्थाञ्जीड्भ्यां वा ॥२।१।८१॥

परासां परोक्षाद्यतन्याशिषां धो ढः । इत्यनेन धस्य ढत्वे सिष्मियिढ्वे । सिष्मियिध्वे । स्मेषीष्ट । स्मेता । स्मेष्यते । अस्मेष्यत । डीङ् विहायसा गतौ ॥ ५ ॥ डयते । अडयिष्ट । डिड्ये । डयिषीष्ट । डयिता । डयिष्यते । अडयिष्यत । उङ् कुङ् गुङ् घुङ् ङुङ् शब्दे ॥ ६ ॥ अवते । औष्ट । ऊवे । ओषीष्ट । वार्णात्प्राकृतं बलीय इत्युव् । ततः समानदीर्घः । ओता । ओष्यते । कवते । अकोष्ट । अकोषाताम् । चुकुवे । च्युंङ् ज्युङ् श्रुङ् प्रुङ् प्लुङ् गतौ ॥ ७ ॥ रुङ् रेषणे च ॥ ८ ॥ चकाराद्गतौ । रेषणं हिंसाशब्दः । रोता । पुङ् पवने ॥ ९ ॥ पवनं नीरजीकरणम् । पवते । पविता । मूङ् बन्धने ॥ १० ॥ मवते । मविता । धृङ् अवध्वंसने ॥ ११ ॥ धरते । अधृत । धृषीष्ट । धर्ता । धरिष्यते । अधरिष्यत । मेङ् प्रणिदाने ॥ १२ ॥ प्रणिदानं प्रत्यर्पणम् । प्रणिमयते । नेर्ङ्मादा इत्यादिसूत्रे ङ्युक्तमाग्रहणात् । देङ् त्रैङ् रक्षणे ॥ १३ ॥ दयते ।

## इश्च स्थादः ॥४।३।४१॥

तिष्ठतेर्दासंज्ञकाच्च धातोः परः आत्मनेपदविषयः सिच् किद्वत्स्यात् । तस्मिन्योगे स्थादोरन्त्यस्येकारः स्यात् । अदित । अदिषाताम् । अदिषत । अदिथाः ।

## देर्दिगिः परोक्षायाम् ॥४।१।३२॥

देङ् इत्यस्य दिगिः स्यात् च द्विः । दिग्ये । दिग्याते । त्रायते । अत्रास्त । अत्रासाताम् । अत्रासत । तत्रे । तत्राते । तत्रिरे । त्रासीष्ट । त्राता । त्रास्यते । अत्रास्यत । श्यैङ् गतौ ॥ १४ ॥ प्यैङ् वृद्धौ ॥ १५ ॥ वकुङ् कौटिल्ये ॥ १६ ॥ वङ्कते । गतावपीत्येके । मकुङ् मण्डने ॥ १७ ॥ मण्डनं शोभनम् । अकुङ् लक्षणे ॥ १८ ॥ आनङ्क्षे । शीकृङ् सेचने ॥ १९ ॥ गतावप्यन्ये । शीकते । लोकृङ् दर्शने ॥ २० ॥ लोकते । अलोकिष्ट । लुलोके । श्लोकृङ् सङ्घाते ॥ २१ ॥ ग्रन्थ इत्यर्थः । स च ग्रन्थो व्यापारो बध्यमानस्य ग्रथितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । द्रेकृङ् ध्रेकृङ् शब्दोत्साहे ॥ २२ ॥ शब्दस्योत्साहः औद्धत्यं वृद्धिश्च । द्रेकते । रेकृङ् शकुङ् शङ्कायाम् ॥ २३ ॥ शङ्का सन्देहः पूर्वस्यार्थः । द्वितीयस्य त्रासश्च । ककि लौल्ये ॥ २४ ॥ लौल्यं गर्वश्चापल्यं च । ककते । चकके । कुकि वृकि आदाने ॥ २५ ॥ कोकते । इन्ध्यसंयोगादिति कित्वे । चुकुके । ववृके । चकि तृप्तिप्रतिघातयोः ॥ २६ ॥ चकते । चेके । ककुङ् श्वकुङ् त्रकुङ् श्रकुङ् श्लकुङ् ढौकृङ् त्रौकृङ् ष्वष्कि वस्कि मस्कि तिकि टिकि टीकृङ् सेकृङ् स्रेकृङ् रघुङ् लघुङ् गतौ ॥ २७ ॥ कङ्कते । डुढौके । तुत्रौके । ष्वष्कते । नाधातुपस्वम् । रङ्घते ।

---

१ [illegible] २।१।५८ इत्यनेन निषेधात्　　प ढ व मि

सहते । सघुङ् भोजननिवृत्तावपि । अघुङ् वघुङ् गत्याक्षेपे ॥ २८ ॥ आक्षेपो गम आरम्भ उपालम्भो वा । अघते । वघते । मघुङ् कैतवे च ॥ २९ ॥ बाहुलात् । राघृङ् लाघृङ् सामर्थ्ये ॥ ३० ॥ राघते । लाघते । द्राघृङ् आयासे च ॥ ३१ ॥ आयाम इत्यन्ये । श्लाघृङ् कत्थने ॥ ३२ ॥ लोचृङ् दर्शने ॥ ३३ ॥ लोचते । सु लोचे । षचि सेचने ॥ ३४ ॥ सचते । शचि व्यक्तायां वाचि ॥३५॥ तालव्यादिः । कचि बन्धने ॥ ३६ ॥ कचुङ् दीप्तौ च ॥ ३७ ॥ कचते । कञ्चते । श्वचि श्वचुङ् गतौ ॥ ३८ ॥ वर्चि दीप्तौ ॥ ३९ ॥ मचि मुचुङ् कल्कने ॥ ४० ॥ मचुङ् धारणोच्छ्रायपूजनेषु च ॥ ४१ ॥ पचुङ् व्यक्तीकरणे ॥ ४२ ॥ ष्टुचि प्रसादे ॥ ४३ ॥ स्तोचते । तुष्टुचे । एजृ भ्रेजृङ् भ्राजि दीप्तौ ॥ ४४ ॥ एजाञ्चक्रे । बिभ्रेजे । बभ्राजे । इजुङ् गतौ ॥ ४५ ॥ इञ्जते । इञ्जाञ्चक्रे । ऋजि गतिस्थानार्जनोपार्जनेषु ॥ ४६ ॥ अर्जते । नोऽन्ते । आनृजे । ईजि कुत्सने च ॥ ४७ ॥ ईजते । ईजाञ्चक्रे । भृजुङ् भृजैङ् भर्जने ॥ ४८ ॥ भर्जनं पाकप्रकारः । भञ्जते । भर्जते । तिजि क्षमानिशानयोः ॥ ४९ ॥ निशानं तीक्ष्णीकरणम् ।

## गुप्तिजो गर्हाक्षान्तौ सन् ॥३।४।५॥

स्वार्थे सन् ।

## सन्यङश्च ॥४।१।३॥

सन्नन्तस्य यङन्तस्य च धातोराद्य एकस्वरावयवो द्विः स्यात् ।

## स्वार्थे ॥४।४।६०॥

स्वार्थे सन आदिरिट् न स्यात् ।

## उपान्त्ये ॥४।३।३४॥

नामिन्युपान्त्ये धातोरनिट् सन् किद्वत्स्यात् । जुगुप्सते । गर्हत इत्यर्थः । अन्यत्र गोपायति । तितिक्षते । सहत इत्यर्थः । तेजने तु । तेजयति । घटि च घने ॥ ५० ॥ स्फुटि विकसने ॥ ५१ ॥ स्फोटते । चेष्टि चेष्टायाम् ॥ ५२ ॥ चेष्टते । गोष्टि लोष्टि संघाते ॥ ५३ ॥ वष्टि वेष्टने ॥ ५४ ॥ विवेष्टे । अटि हिंसातिक्रमयोः ॥ ५५ ॥ द्वोपान्त्यस्तोपान्त्यो वा । अट्टते । आनट्टे । एठि हेठि विबाधायाम् ॥ ५६ ॥ एठाञ्चक्रे । जिहेठे । मठुङ् कठुङ् शोके ॥ ५७ ॥ शोक आध्यानम् । मण्ठते । कण्ठते । मुठुङ् पलायने ॥ ५८ ॥ मुण्ठते । वठुङ् एकचर्यायाम् ॥ ५९ ॥ असहायस्य गत्यामित्यर्थः । ववण्ठे । अठुङ् पठुङ् गतौ ॥ ६० ॥ आनण्ठ । पण्ठते । हुडुङ् पिडुङ् संघाते ॥ ६१ ॥ हुण्डते । पिण्डते । शडुङ् रुजायां च ॥ ६२ ॥ घारसघात । तालव्यादिः । तुडुङ् तोडने ॥ ६३ ॥ कडुङ् मदे ॥ ६४ ॥ कण्डते । खडुङ् मन्थे च ॥ ६५ ॥ चखण्डे । गुडुङ् गतिवैकल्ये ॥ ६६ ॥ गुण्डते । कुडुङ्

---

१ द्रुघो ह्रासार्थाद् सामर्थ्येऽर्थान्तरवाचो । वधा दीधिन । राघ लाघ शाघ सामर्थ्ये । ध्राघ इत्यपि केचित् । द्राघ आयासे च । सर्वतो वैर्यम्—
धे न न मि

दाई ॥ ६७ ॥ वडुङ् मडुङ् वेष्टने ॥ ६८ ॥ विभाजन इत्येके । विभाजनं विभागीकरणम् । भरमामावश्च । मण्डते । मण्डने । भडुङ् परिभाषणे ॥ ६९ ॥ मुडुङ् मज्जने ॥ ७० ॥ मज्जनं शोधनम् । मुण्डते । तुडुङ् तोडने ॥ ७१ ॥ हुडुङ् वरणे ॥ ७२ ॥ वरणं स्वीकारः । हुण्डते । चडुङ् कोपे ॥ ७३ ॥ द्राडृङ् ध्राडृङ् विशरणे ॥ ७४ ॥ द्राडते । ध्राडते । शाडृङ् श्लाघायाम् ॥ ७५ ॥ लाडस्यादि । शाडते । फक्कादिविलात् डस्य लत्वे शालते । बाडृङ् आप्लाव्ये ॥ ७६ ॥ बाडते । हेडृङ् होडृङ् अनादरे ॥ ७७ ॥ हेडते । होडते । हिडुङ् गतौ च ॥ ७८ ॥ हिण्डते । घिणाङ् घुणाङ् घृणाङ् ग्रहणे ॥ ७९ ॥ घुणि घूर्णि भ्रमणे ॥ ८० ॥ घोणते । घुघूर्णे । पणि व्यवहारस्तुत्यो ॥ ८१ ॥ गुपो धूपेत्याये । पणायति । पणायाञ्चकार । पेणे । आयान्तस्य विकल्पाभावाद्वेपादिति परस्मैपदम् । पतेङ् भयने ॥ ८२ ॥ येते । युतङ् जुतङ् भासने ॥ ८३ ॥ योतते । जोतते । विथृङ् वेथृङ् याचने ॥ ८४ ॥ नाधृङ् याच्ञोपतापैश्वर्याशीःषु ॥ ८५ ॥

# आशिपि नाथः ॥१।३।२६॥

आशिष्येवार्थे नाथते कर्तर्यात्मनेपदं स्यात् । सर्पिषो नाथते । सर्पिर्मे भूयादित्याशास्ते । अन्यत्र नाथति । याचत इत्यर्थः । श्रथुङ् शैथिल्ये ॥ ८६ ॥ शैथिल्यमगाढता । ग्रथुङ् कौटिल्ये ॥ ८७ ॥ कत्थि श्लाघायाम् ॥ ८८ ॥ चकत्थे । श्विदुङ् श्वैत्ये ॥ ८९ ॥ सकर्मकोऽकर्मकश्च । वदुङ् स्तुत्यभिवादनयोः ॥ ९० ॥ वन्दते । भदुङ् सुखकल्याणयोः ॥ ९१ ॥ मदुङ् स्तुतिमोदमदस्वप्नगतिषु ॥ ९२ ॥ अमन्दिष्ट । स्पदुङ् किञ्चिच्चलने ॥ ९३ ॥ क्लिदुङ् परिदेवने ॥ ९४ ॥ मुदि हर्षे ॥ ९५ ॥ अकर्मकोऽयम् । मोदते । ददि दाने ॥ ९६ ॥ ददते । अददिष्ट । अददिषाताम् । परोक्षायां ददद्दे । ददद्दाते । हदि पुरीषोत्सर्गे ॥ ९७ ॥ हत्ता । ष्वदि स्वर्दि स्वादि आस्वादने ॥ ९८ ॥ आद्यः षोपदेशो नेतरौ । यत्स्मृतिः सरान्त्यपरः सकारादषः षोपदेशाः स्मिस्विदि स्वदि स्वञ्जि सपयश्च । सृपि सृजि स्तृस्त्या सेकृसृवर्जम् ॥ ष्वदिरनुभवे सकर्मको रुच्यावकर्मकः । स्वदते । उर्दि मानक्रीडयोश्च ॥ ९९ ॥ उपधायां चेति दीर्घे । कूर्दते । कुर्दि गुर्दि गुदि क्रीडायाम् ॥ १०० ॥ गुर्दि न्यामे ॥ १०१ ॥ खुर्दि भ्ये ॥ १०२ ॥ कूर्दते । गूर्दते । गोदते । जुगुदे । षूदि क्षरणे ॥ १०३ ॥ सूदते । सुषूदे । ह्रादि शब्दे ॥१०४॥ अव्यक्ते शब्द इत्यन्ये । अव्यक्तोऽपरिस्फुटवर्णः । ह्रादते । ह्लादीङ् सुखे च ॥ १०५ ॥ ह्लादते । पर्दि कुत्सिते शब्दे ॥ १०६ ॥ पर्दते । स्कुदुङ् आप्रवणे ॥ १०७ ॥ आप्रवणमुत्प्लव उद्धरणं च । स्कुन्दते । गाधृङ् प्रतिष्ठालिप्साग्रन्थेषु ॥ १०८ ॥ प्रतिष्ठायामकर्मकोऽयम् । बाधृङ् रोटने ॥ १०९ ॥ रोटनं प्रतिघातः । दधि धारणे ॥ ११० ॥ दधे । नाधृङ् नाधृङ्वत् ॥ १११ ॥ बधि बन्धने ॥ ११२ ॥ दान्शानिति सनि । बीभ

१ सेक षप धस्ट वस स्तुत्यान्वे इत्यन्ताश्चायाः । सेकाधाः षोपदेशा यत्र [illegible]
पं० व व सि

स्तते चिस्तम् । चिकुरुत इत्यर्थः । पनि स्तुतौ ॥ ११३ ॥ आयप्रत्यये । पनायति । पनायाञ्चकार । पेने । पणियत् । ग्लेपृङ् दैन्ये च ॥ ११४ ॥ चाचलने । गताच्यन्ये । जिग्लेपे । मेपृङ् रेपृङ् लेपृङ् गतौ ॥ ११५ ॥ देशान्तरप्राप्तिहेतुर्गतिः । तत्र स्थितस्य स्पन्दनं चलनमिति पृथगेषां पाठः । हेपृङ् चेति कौशिकः । त्रपौषि लज्जायाम् ॥ ११६ ॥ त्रपते । तृषपफलस्यास्ये । त्रेपे । औदित्त्वादिड्वा । त्रपिता । त्रप्ता । गुपि गोपनकुत्सनयोः ॥ ११७ ॥ गोपते । गर्हायां सनि जुगुप्सते । अमुङ् रमुङ् शब्दे ॥ ११८ ॥ आनम्बे । रम्बते । लबुङ् अवस्रंसने च ॥ ११९ ॥ लम्बते । कबृङ् वर्णे ॥ १२० ॥ कबते । वर्णो वर्णनं शुक्लादिश्च । क्लीबृङ् अधार्ष्ट्ये ॥ १२१ ॥ चिक्लीबे । क्षीबृङ् मदे ॥ १२२ ॥ क्षीबते । शीभृङ् चीभृङ् शल्भि कत्थने ॥ १२३ ॥ वल्भि भोजने ॥ १२४ ॥ गल्भि धार्ष्ट्ये ॥ १२५ ॥ गल्भते । रेभृङ् अभुङ् रभुङ् लभुङ् शब्दे ॥ १२६ ॥ ष्टभुङ् स्कभुङ् स्तुभुङ् स्तम्भे ॥१२७॥ स्तम्भः क्रियानिरोधः । ष स इति सत्वे । स्तम्भते । स्कम्भते । तुष्टुभे । जभुङ् जभैङ् जृभुङ् गात्रविनामे ॥ १२८ ॥ जम्भते ।

## जभः स्वरे ॥४।४।१००॥

जभेः स्वरादौ प्रत्यये मोऽन्तः स्यात् । इति ने । जम्भते । जृम्भते । मानि पूजायाम् ॥ १२९ ॥ विचारे मीमांसते । अन्यत्र पचि मानः । तिपृङ् टिपृङ् ष्टेपृङ् क्षरणे ॥१३०॥ तितिपे । तिष्टिपे । तिष्टेपे । तेपृङ् कम्पने च ॥१३०॥ टुवेपृङ् केपृङ् गेपृङ् कपुङ् चलने ॥ १३१ ॥ कम्पते । अकम्पिष्ट । चकम्पे । रभिं राभस्ये ॥ १३२ ॥ आरभते । डुलभिंष् प्राप्तौ ॥ १३३ ॥ लभते । अलब्ध । लेभे । लप्सीष्ट । लब्धा । लप्स्यते । भामि क्रोधे ॥ १३४ ॥ क्षमौषि सहने ॥ १३५ ॥ अक्षमिष्ट । अक्षंस्त । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षन्ध्वे ।

## मो नो म्वोश्च ॥२।१।६७॥

मकारान्तस्य धातोरन्तस्य पदान्ते वर्तमानस्य मकारवकारयोश्च परयोर्नकारादेशः स्यात् । स चासत् परे कार्ये । चक्षमिवहे । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । आशिषि । क्षमिषीष्ट । क्षंसीष्ट । क्षमिता । क्षन्ता । क्षमिष्यते । क्षंस्यते । रमिं क्रीडायाम् ॥ १३६ ॥ अत एवाकारादिः । रमते । अरंस्त । रेमे । रंसीष्ट । रन्ता । रंस्यते । अरंस्यत ।

## व्याङ्परे रमः ॥३।३।१०५॥

परस्मैपदम् । विरमति । व्यरंसीत् । विरराम । कमूङ् कान्तौ ॥ १३७ ॥ कान्तिरिच्छा ।

## कमेर्णिङ् ॥३।४।२॥

कमेर्धातोः स्वार्थे णिङ् प्रत्ययः स्यात् । कामयते ।

## णिश्रिद्रुस्रुकमः कर्तरि ङः ॥३।४।५८॥

णयन्तात् श्र्यादिभ्यश्च कर्तर्यद्यतन्यां ङ' प्रत्यय' स्यात् । अकाम् इ अ त इति स्थिते ।

## णो रनिटि ॥४।३।५३॥

अनिड्यशिति प्रत्यये णेर्लुक् स्यात् । इयुपस्वरगुणवृद्धिदीर्घतागमाना या धकोऽयम् । इय् । अततक्षत् । यस्वम् । आटिटत् । गुण' । कारणा । वृद्धि' । कारक' । दीर्घ' । कार्यते । तागम' । प्रकार्य ।

## उपान्त्यस्यासमानलोपि शास्वृदितो ङे ॥४।२।३५॥

समानलोपिशासऋदिद्वर्जिताद्धातोरुपान्त्यस्य ङपरे णौ ह्रस्व' स्यात् । द्विर्धातुरिति द्वित्वे ।

## स्वरादेर्द्वितीयः ॥४।१।४॥

स्वरादेर्धातोर्द्वित्वभाजो द्वितीयांश एकस्वरो द्वि' स्यात् नस्वाद्य' ।

## असमानलोपे सन्वल्लघुनि ङे ॥४।१।६३॥

न विद्यते समानलोपो यस्मिन् तस्मिन् ङपरे णौ द्वित्वे सति पूर्वस्य लघुनि धात्वक्षरे परे सनीव कार्य्यं स्यात् । सन्यस्येत्समुत्कमिहापि तथा ।

## सन्यस ॥४।१।५९॥

धातोर्द्वित्वे पूर्वस्याकारस्य इ' स्यात्सनि परे ।

## लघोर्दीर्घोऽस्वरादेः ॥४।१।६४॥

अस्वरादेर्धातोर्ङे परे णावसमानलोपे द्वित्वे पूर्वस्य लघोर्दीर्घ' स्यात् लघुनि धात्वक्षरे परे । अचीकमत । णिङभावपक्षे कमो ङे परे । अचकमत । अयि वयि नयि पयि मयि रयि वयि गतौ ॥ १९८ ॥ अयते । आयिष्ट ।

## दयायास्कासः ॥३।४।४१॥

एभ्य' परोक्षाया आमादेश' स्यात्, अनुप्रयोगश्च कृभ्वस्तीनाम् । अयाञ्चक्रे ।

## हान्तस्थाञ्ञीड्भ्यां वा ॥२।१।८१॥

हकाराद्यन्तस्थाया ञेरिटश्च परासां परोक्षाद्यतन्याशिषां धस्य ढो वा स्यात् । अयिपीढ्वम् । अयिपीध्वम् ।

## उपसर्गस्यायौ ॥२।३।१००॥

उपसर्गस्य रेफस्यायतौ परे ल' स्यात् । प्लायते । पलायते । निरयते । दुर

पन इत्यत्र निरनुबन्धोऽदन्तस्यापत्यस्य ग्रहणम् । निर्घुरोस्तु निरूपयते । तुगयते । तद्व्यतीत्यत्र इ दु द्रु स्रु गतौ इति इणादुः समते । परमते चात्मनेपदमनित्यमिति ज्ञापकात् ज्ञापनात् । तयि णयि रक्षणे च ॥ १३९ ॥ ताशृतौ । प्रणयते । पूर्वस्य तु प्रनयते । दयि दानगतिहिंसादहनेषु च ॥ १४० ॥ दयाञ्चक्रे । ऊयैङ् तन्तुसन्ताने ॥ १४१ ॥ ऊयाञ्चक्रे । पूयैङ् दुर्गन्धविशरणयोः ॥ १४२ ॥ पुपूये । क्नूयैङ् शब्दोन्दनयोः ॥ १४३ ॥ चन्द्रमं ग्लयमम् । दुर्गन्धेऽपीत्येके । क्ष्मायैङ् विधूनने ॥ १४४ ॥ क्ष्मायिता । स्फायैङ् ओप्यायैङ् वृद्धौ ॥ १४५॥ प्यायते ।

## दीपजनबुधिपूरितायिप्यायो वा ॥३।४।६७॥

एभ्यः कर्तर्यद्यतन्यास्ते परे ञिच्प्रत्ययो वा स्यात्, तलुक् च । अप्यायि । पक्षे अप्यायिष्ट ।

## प्यायः पी ॥४।१।९१॥

प्यायः पी स्यात् परोक्षायां यङि च । पिप्ये । पिप्याते । पिप्यिरे । तायृङ् सन्तानपालनयोः ॥ १४५ ॥ तायते । अतायि । अतायिष्ट । वलि वल्लि संवरणे ॥ १४६ ॥ ववले । ववल्ले । शलि चलने च ॥ १४७ ॥ तालव्यादिः । शलते । मलि मल्लि धारणे ॥ १४८ ॥ मेले । ममल्ले । भलि भल्लि परिभाषणहिंसादानेषु ॥१४९॥ बभले । बभल्ले । कलि शब्दसंख्यानयोः ॥ १५० ॥ कलते । चकले । कल्लि अशब्दे ॥ १५१ ॥ अशब्दस्तूष्णींभावः । शब्दार्थोऽपमित्येके । अव्यक्तशब्दार्थ इत्यपरे । कल्लते । तेवृङ् देवृङ् देवने ॥ १५१ ॥ तितेवे । दिदेवे । षेवृङ् सेवृङ् केवृङ् खेवृङ् गेवृङ् ग्लेवृङ् पेवृङ् प्लेवृङ् मेवृङ् म्लेवृङ् सेवने ॥ १५२ ॥

## परिनिवेः सेवः ॥२।३।४६॥

सस्य षत्वमड्व्यवायेऽपि । परिषेवते । द्वितीयस्य तु । परिसेवते । पर्यषेवत । परिसिसेव । रेवृङ् प्लवि गतौ ॥ १५३ ॥ रेवते । प्लवते । पेवे । काशृङ् दीप्तौ ॥ १५४ ॥ काशते । क्लिशि बाधने ॥१५५॥ क्लेशते । चिक्लिशे । भाषि च व्यक्तायां वाचि ॥१५६॥ चात्क्लेशिः । भाषते । अभाषिष्ट । ईषि गतिहिंसादर्शनेषु ॥१५७॥ ईषते । गुरुनाम्यादेरिति परोक्षायामामि । ईषाञ्चक्रे । गेषृङ् अन्विच्छायाम् । अन्वेषणमन्विच्छा । यतृङ् प्रयत्ने ॥१५८॥ जेषृङ् णेषृङ् एषृङ् हेषृङ् गतौ ॥१५९॥ जेषते । नेषते । एषते । एषाञ्चक्रे । हेषते । रेषृङ् हेषृङ् अव्यक्ते शब्दे ॥ १६० ॥ रेषते हेषते । जिहेषे । पर्षि स्नेहने ॥ १६१ ॥ पर्षते । पपर्षे । घुषुङ् कान्तिकरणे ॥ १६२ ॥ जघुषाते । घुषते । भ्रंसूङ् प्रमादे ॥ १६३ ॥ प्रमादोऽपक्षेपः । भ्रंसते । भ्रान्तोऽपमित्येके । विभ्रंसते । काशृङ् शब्दकुत्सायाम् ॥ १६४ ॥ शब्दस्य कुत्सा रोगः । भासि उभासि उभ्लासि दीप्तौ ॥ १६५ ॥ बभासे । भ्रासम्लासे ॥३।४।७३॥ ति वा श्ये । भ्राश्यते । भ्रासते । भृशमे ॥४।१।२६॥ लेसे । भ्रम । बभ्रासे । भ्लाश्यन । भ्लासते । भ्लेस । बभ्लास । रासृङ् णासृङ् शब्दे ॥ १६६ ॥

णसि कौटिल्ये ॥ १६७ ॥ प्रणसते । भ्यसि भये ॥ १६८ ॥ भ्यसते । अभ्यसिष्ट । बभ्यसे । भेषृ इति चन्द्र । भेषते । आङः शसुङ् इच्छायाम् ॥ १६९ ॥ आशंसते । ग्रसुङ् ग्लसुङ् अदने ॥ १७० ॥ घसुङ् करणे ॥ १७१ ॥ घसते । मूर्धन्यान्तोऽयमिति चन्द्र । ईहि चेष्टायाम् ॥ १७२ ॥ ईहते । ईहाञ्चक्रे । अहुङ् म्लिहि गतौ ॥ १७३ ॥ अहते । आनहे । म्लेहते । मिम्लिहे । गर्हि गल्हि कुत्सने ॥ १७४ ॥ बर्हि बल्हि प्राधान्ये ॥ १७५ ॥ वर्हि वल्हि परिभाषणहिंसाच्छादनेषु ॥ १७६ ॥ दानेऽप्यन्ये । दन्त्योष्ठ्यादी । अबर्हिष्यम् । अवल्हिषम् । वेहङ् जेहङ् बाहङ् प्रयत्ने ॥ १७७ ॥ विवेहे । जिजेहे । बबाहे । द्राहङ् निक्षेपे ॥ १७८ ॥ निद्राक्षेपे इत्येके । द्राहते । दद्राहे । ऊहि तर्के ॥ १७९ ॥ ऊहते । ऊहाञ्चक्रे । तर्क उत्प्रेक्षा । गाहौङ् विलोडने ॥ १८० ॥ विलोडनं परिमलनम् । अगाहिष्ट । अगाढ । जगाहे । गाहिषीष्ट । घाक्षीष्ट । गाहिता । गाढा । गाहिष्यते । घाक्ष्यते । ग्लहि ग्रहणे ॥१८१॥ ग्लकारादिरयम् । ग्लहते ।

## असोङसिवूसहस्सटाम् ॥२।३।४८॥

परिनिविभ्यः परेषामेषां सस्य षः स्यात् सोङ्विषय वर्जयित्वा । विषहते । निषहते ।

## स्तुस्वञ्श्चाटि नवा ॥२।३।४९॥

परिनिविभ्यः परस्य स्तुस्वञोरसोङसिवूसहस्सटां चाटि सति सस्य वा षः स्यात् । पर्यषहत । पर्यसहत । असहिष्ट । सेहे । सहिषीष्ट ।

## सहलुभेच्छरुषरिषस्तादेः ॥४।४।४६॥

एभ्यस्तादेरशित इट् वा स्यात् । सहिता । पक्षे । हस्य ढत्वे, तस्य धत्वे, धस्यापि ढत्वे, सहिवहेरोच्चेति ढलोपे, ओकारे च । सोढा । असोङ इति किम्? विसोढा । मा परिसीषिवत् । ग्लहौङ् ग्रहणे ॥ १८२ ॥ ग्लहते । जग्लहे । औदित्वादिट् । ग्लहिता । ग्लाढा । घहौङ् इत्येके ॥१८३॥ घहते । अघर्हिष्ट । इडभावे ।

## हशिटो नाम्युपान्त्याददृशोऽनिटः सक् ॥३।४।५५॥

हशिडन्तान्नाम्युपान्त्याद्दृशिवर्जितादनिटो धातोरद्यतन्यां परतः सक् प्रत्ययः स्यात् । अघृक्षत ।

## स्वरेऽतः ॥४।३।७५॥

सकोऽकारस्य स्वरादौ प्रत्यये परे लुक्स्यात् । अघृक्षाताम् । अघृक्षन्त । इत्यादि । घृहङ् महुङ् वृद्धौ ॥ १८४ ॥ बंहते । महते । दक्षि शैघ्र्ये च ॥ १८५ ॥ धुक्षि धिक्षि सन्दीपनक्लेशनजीवनेषु ॥ १८६ ॥ धुक्षते । धिक्षते । वृक्षि वरणे ॥ १८७ ॥ शिक्षि विद्योपादाने ॥ १८८ ॥ भिक्षि याच्ञायाम् ॥ १८९ ॥ दीक्षि

## कृगो यिच ॥४।२।८८॥

कृगः परस्योकारस्य यादौ वकारे मकारे चाविति प्रत्यये लुक् स्यात्। कुर्वः। कुर्मः।

## न कुरुच्छुरः ॥२।१।६६॥

अनयोर्नामिनो रेफे न दीर्घः। कुर्यात्। करोतु। कुरुतात्। कुरुताम्। कुर्वन्तु।

## असयोगादोः ॥४।२।८६॥

असंयोगात्परो य उकारः प्रत्ययस्तत्परस्य हेर्लुक् स्यात्। कुरु। कुरुतात्। कुरुतम्। कुरुत। करवाणि। करवाव। करवाम। अकरोत्। अकुरुताम्। अकुर्वन्। अकरोः। अकुरुतम्। अकुरुत। अकरवम्। अकुर्व। अकुर्म। अकार्षीत्। अकार्ष्टाम्। अकार्षुः। अकार्षीः। अकार्ष्टम्। अकार्ष्ट। अकार्षम्। अकार्ष्व। अकार्ष्म। चकार। चक्रतुः। चक्रुः। चकर्थ। चक्रथुः। चक्र। चकार। चकर। चकृव। चकृम। क्रियात्। क्रियास्ताम्। क्रियासुः। क्रियाः। क्रियास्तम्। क्रियास्त। कर्ता। करिष्यति। अकरिष्यत्। कुरुते। कुर्वाते। कुर्वते। कुर्वीत। कुर्वीयाताम्। कुर्वीरन्। कुरुताम्। कुर्वाताम्। कुर्वताम्। कुरुष्व। कुर्वाथाम्। कुरुध्वम्। करवै। करवावहै। करवामहै। अकुरुत। अकृत। अकृषाताम्। चक्रे। कृषीष्ट। कर्ता। करिष्यते। अकरिष्यत।

## सम्परेः कृगः स्सट् ॥४।४।९१॥

आभ्यां परस्य कृग आदिः स्सट् स्यात्। संस्करोति। परिष्करोति।

## उपाद्भूषासमवायप्रतियत्नविकारवाक्याध्याहारे ॥४।४।९२॥

उपात्परस्य कृगो भूषादिष्वर्थेषु आदिः स्सट् स्यात्। उपस्करोति कन्याम्। इत्यादि। हिक्की अव्यक्ते शब्दे ॥७॥ हिक्कति। हिक्कते। ईदित्वात्फलवति कर्तरि इगित इत्यात्मनेपदम्। अन्यत्र शेषात्परस्मैपदविधिषु पठित स चास्य पाठो गतौ फलवत्कर्तर्यपि परस्मैपदार्थः। अञ्चूग् गतौ च ॥ ८ ॥ गतिपूजयोरयम्। अञ्चति। अञ्चते। डुयाचृग् याच्ञायाम् ॥ ९ ॥ याचति। याचते। द्विरूपमित्येके। डुपचींष् पाके ॥ १० ॥ पचति।

## व्यञ्जनानामनिटि ॥४।३।४५॥

व्यञ्जनान्तस्य धातोः परस्मैपदविषयेऽनिटि सिचि परे समानस्य वृद्धिः स्यात्। अपाक्षीत्। बहुवचन आत्मार्थम्। व्यञ्जनसजातीयाकान्तैकानेकव्यञ्जनपरिग्रहार्थं यावत्। तेनानेकव्यञ्जनव्यवधानेऽपि स्यात्। अराङ्क्षीत्। पपाच।

पच्यात् । पक्ता । पक्ष्यति । अपक्ष्यत् । पचते । पचेत । पचताम् । अपचत । अपक्त । पेचे । पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । राजृ॒ टुभ्राजृ॒ दीप्तौ ॥ ११ ॥ राजति । राजते । भ्राजति । भ्राजते । जॄभ्रमेति वा एत्वे । रेजतुः । रराजतुः । रेजे । रराजे । भ्रेजतुः । बभ्राजतुः । भ्रेजे । बभ्राजे । भ्राजेरिह पाठो राजृसाहचर्यार्थः स्तेन यजसृजेत्यत्रास्यैव ग्रहणम् । पूर्वस्य तु गत्वे । विभ्राड् । विभ्राजौ इत्यादि । नन्वेवं पाठ विकल्प्यतामिति चेत् । पुनः पाठः आत्मनेपदानित्यत्वज्ञापनार्थः । तेन लभति लभते सेवति सेवते इत्यादि सिद्धम् । सामीवे विमथ्येऽप्यहो मरपति सेवन्ति किं मानिनः । भजी सेवायाम् ॥ १२ ॥ भजति । भजते । अभाक्षीत् । अभक्त । बभाज । भेजे । भज्यात् । भक्षीष्ट । भक्ता । भक्ष्यति । भक्ष्यते । अभक्ष्यत् । अभक्ष्यत । रञ्जीं रागे ॥ १३ ॥ रजति । रजते । अराङ्क्षीत् । अरङ्क्त । अरङ्क्षाताम् । रेटृ परिभाषणयाचनयोः ॥१४॥ रेटति । रेटते । वेणृ॒ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ १५ ॥ वादित्रग्रहणं वाद्यमानस्य वादनाय ग्रहणम् । विवेण । विवेणे । चतेॄ याचने ॥ १६ ॥ अचतीत् । अचतिष्ट । प्रोथृ॒ पर्याप्तौ ॥ १७ ॥ पर्याप्तिः पूर्णता । मिथृ॒ मेधाहिंसयोः ॥१८॥ मेथृ॒ सङ्गमे च ॥ १९ ॥ मिमेथ । मिमेथे । चदे॒ याचने ॥२०॥ अचदीत् । चेदे । ऊबुन्दृ॒ निशामने ॥ २१ ॥ बुन्दति । बुन्दते । ऋदित्त्वाद्वाङि । अबुदत् । अबुन्दीत् । अबुन्दिष्ट । चान्तोऽयमिति नन्दी । णिदृ॒ णेदृ॒ कुत्सासंनिकर्षयोः ॥२२॥ निनिदतुः । निनेदतुः । निनिदे । निनेदे । मिदृ॒ मेदृ॒ मेधाहिंसयोः ॥ २३ ॥ मिमिदतुः । मिमेदतुः । मेधृ॒ सङ्गमे च ॥ २४ ॥ चान्मेधाहिंसयोः । शृधु॒ मृधु॒ उन्दे ॥ २५ ॥ उन्दः क्लेदनम् । शर्धते । शर्धति । मर्धते । मर्धति । बुधृ॒ बोधने ॥ २६ ॥ अबुधत् । अबोधीत् । अबोधिष्ट । खनु॒ अवदारणे ॥ २७ ॥ गमहनखञ्जुकि । चख्नतुः । चख्ने । दानी अवखण्डने ॥ २८ ॥ आर्जवे । दीदांसति । दीदांसते । शानी तेजने ॥ २९ ॥ निशाने । शीशांसति । शीशांसते । अर्थान्तरे तु सनोऽभावे प्रत्ययान्तराण्यपि । शपीं आक्रोशे ॥ ३० ॥ शपति । शपते । अशाप्सीत् । अशप्त । शशाप । शेपे । चायृ॒ पूजानिशामनयोः ॥ ३१ ॥ व्ययी गतौ ॥ ३२ ॥ अव्ययीत् । अली भूषणपर्याप्तिवारणेषु ॥३३॥ धावु॒ गतिशुद्ध्योः ॥ ३४ ॥ चीवृ॒ भयीवत् ॥ ३५ ॥ चीवति । चीवते । अमृविदयमित्येके । दाशृ॒ दाने ॥ ३६ ॥ भपी आदानसंवरणयोः ॥ ३७ ॥ भेषृ॒ भये ॥ ३८ ॥ भ्रेषृ॒ चलने च ॥ ३९ ॥ पषी बाधनस्पर्शनयोः ॥ ४० ॥ षान्तोऽयमित्येके । लषी कान्तौ ॥ ४१ ॥ कान्तिरिच्छा । भ्राशम्लाशो ॥ ३।१।७१ ॥ इति वा श्यने । अभिलष्यति । अभिलषति । अभिलष्यते । चषी भक्षणे ॥ ४२ ॥ छषी हिंसायाम् ॥ ४३ ॥ चच्छाष । चच्छषे । त्विषीं दीप्तौ ॥ ४४ ॥ त्वेषति । त्वेषते । अत्विक्षत् । अत्विक्षत । अत्विक्षाताम् । अत्विक्षन्त । अषी असी गत्यादानयोश्च ॥ ४५ ॥ आस । आसे । दाशृ॒ दाने ॥ ४६ ॥ माहृ॒ माने ॥ ४७ ॥ माम पर्तनम् । माहति । माहते । गुहूँ संवरणे ॥ ४८ ॥

## गोहः स्वरे ॥४।२।४२॥

कृतगुणस्य गुह' स्वरे परे उपान्त्यस्य ऊत्स्यात्। गूहति। गूहते। अगूहीत्। इडभावे सक्। अघुक्षत्। अगूहिष्टाम्। अघुक्षाताम्। अगूहिष्ट। इडभावे। दुहदिहेति वा सको लुकि। अगूढ। अघुक्षत। जुगूह। गुह्यात्। गूहिता। गोढा। इत्यादि। म्लक्षी भक्षणे ॥ ४९ ॥ म्लक्षति। म्लक्षते। भक्षीत्यन्ये। यजीं देवपूजासंगतिकरणदानेषु ॥ ५० ॥ यजति। यजते। अयाक्षीत्। अयष्ट।

## यजादिवश्वचः सस्वरान्तस्था य्वृत् ॥४।१।७२॥

यजादेर्वशवचोश्च परोक्षायां द्विस्वे पूर्वस्य सस्वरान्तस्था य्वृत्। इकारोकारऋकाराः प्रत्यासत्ते' स्यु'। इयाज।

## यजादिवचेः किति ॥४।१।७९॥

यजादेर्वचेश्च तथा य्वृत् स्यात्किति। ईजतु'। ईजु'। इयजिथ। इयष्ठ। ईजिव। ईजिम। ईजे। इज्यात्। यक्षीष्ट। यष्टा। यक्ष्यति। यक्ष्यते। डुवपीं बीजसन्ताने ॥ ५१ ॥ क्षेत्रे विकिरण इत्यर्थ'। गर्भाधाने छेदने च। केशान्वपति। वपते। अवाप्सीत्। अवप्त। उवाप। ऊपतु'। ऊपे। उप्यात्। वप्सीष्ट। वप्ता। वप्स्यति। वप्स्यते। वेंग् तन्तुसन्ताने ॥ ५२ ॥ वयति। अवासीत्।

## वेर्वय् ॥४।४।१९॥

वेग' परोक्षायां वय् वा स्यात्। उवाय। यजादिवचे' कितीति य्वृति, द्विस्वे ऊयिति स्यात्।

## न वयो य् ॥४।१।७३॥

वेगादेशस्य वयो यकार' परोक्षायां य्वृत् स्यात्। ऊयतु'। ऊयु'। उवयिथ। ऊयथुः। ऊय। उवाय। उवय। ऊयिव। ऊयिम। वयादेशाभावे।

## वेरयः ॥४।१।७४॥

वेगोऽयकारान्तस्य पूर्वस्य परस्य च परोक्षायां य्वृत् स्यात्। भास्सन्ध्यक्षरस्येत्यात्वे। ववौ।

## अविति वा ॥४।१।७५॥

वेगोऽयकारान्तस्य अविति णवादौ परे य्वृत् स्याद्वा। ववतुः। ऊवतु'। ववु। ऊवु'। द्विस्वे कृते परस्याद्धातोरुवादेशो पश्चात्समानदीर्घ'। ववाथ। वविथ। स्वरान्तत्वादिड्विकल्प'। ऊयात्। वाता। वास्यति। अवास्यत्। वयते। अवास्त। ऊये। ऊवे। ऊयिषे। ऊविषे। ववे। वविषे। वासीष्ट। व्येंग् संवरणे ॥ ५३ ॥ व्ययति। अव्यासीत्।

## व्य स्थवृणवि ॥४।२।३॥

व्ययतेऽस्थि णवि च विषयश्लते आस न स्यात् । द्वित्वे ।

## ज्याव्येव्यधिव्यचिव्यथेरिः ॥४।१।७१॥

एषां परोक्षायां द्वित्वे पूर्वस्य इ स्यात् । नामिनोऽकलिहलेरितिवृद्धौ । विव्याय । विव्यतुः । विव्यु । स्कृस्व्येऽद ॥४।४।९॥ इति नित्यमिट् । विव्ययिथ । विव्याय । यजादिवचेरिति वीयात् । व्याता । व्यास्यति । व्ययते । अव्यास्त । विव्ये । विव्यियपे । व्यासीष्ट । ह्वेंग् स्पर्धाशब्दयो ॥ ५४ ॥ आह्वयति ।

## ह्वालिप्सिचः ॥३।४।६२॥

एभ्योऽद्यतन्यामङ् स्यात् । आह्वत् । आह्वताम् । आह्वन् ।

## द्वित्वे ह्वः ॥४।१।८७॥

ह्वेगो द्वित्वविषये सस्वरान्तस्था वृत् स्यात् । हु हु इति द्वित्वे । आजुहाव । धातोरिवर्णोवर्णस्युवादेशा । आजुहुवतु । आजुहविथ । आजुहोथ । आहूयात् । आह्वाता । आह्वास्यति । आह्वयते ।

## वाऽऽत्मने ॥३।४।६३॥

ह्वालिप्सिचिभ्योऽद्यतन्यामङ्वा स्यादात्मनेपदे परे । आह्वत । आह्वास्त । आह्वेताम् । आह्वासाताम् । आजुहुवे । आजुहुविषे । आह्वासीष्ट ।

## ह्व. स्पर्धे ॥३।३।५६॥

आङ्पूर्वाद् ह्वयतः स्पर्धेऽर्थे आत्मनेपदमेव स्यात् । मल्लो मल्लमाह्वयते । अ पत्र गामाह्वयति ।

## सनिवे. ॥३।३।५७॥

एभ्योऽप्यात्मनेपदमेव । वही प्रापणे ॥ ५५ ॥ वहति । अवाक्षीत् । सहिवहोरोच्चावर्णस्येत्योत्व । अवोढाम् । अवाक्षु । उवाह । ऊहतु । उवहिथ । इट्पक्षे उवोढ । उह्यात् । वोढा । वक्ष्यति । अवक्ष्यत् । वहते । उवोढ । अवक्षाताम् । अवक्षत । ऊहे । ऊहिषे । वक्षीष्ट । वोढा । वक्ष्यते । अवक्ष्यत । प्रवहः ॥३।३।१०३॥ इत्यनेन परस्मैपदमेव । प्रवहति । एते यजादयस्तुभयपदिन । टुओश्वि गतिवृद्ध्यो ॥ ५६ ॥ श्वयति । श्वयतेर्वा ॥४।४।८७॥ इति वैकल्पिके के द्वि धातुरिति द्वित्व मयोगाविर्तीयादयो । अशिश्वियत् । पक्षे अश्विद्वी ॥३।४।५८॥ स्यादिमाऽङि ।

## श्वयत्यसूवचपत. श्वास्थवोचपप्तम् ॥४।३।१०३॥

एषां चतुर्णामङि परे श्व अस्थ वोच पप्त इत्येते ममास्युः । अश्वत् ।

अश्वताम् । अश्वन् । पक्षे सिचि इडागमे, इति च, मश्वीतिवृद्धिनिषेधे, गुणे, ऽयादेशे, सिज्लोपे । अश्वयीत् । अश्वयिष्टाम् । अश्वयिषुः । अश्वयीः ।

# वा परोक्षायङि ॥४।१।९०॥

श्वेः सस्वरान्तस्था परोक्षायङे य्वृत् वा स्यात् । ततः शु शु इति द्विस्वे शुशाव । शुशुवतुः । शुशुवुः । शुशविथ । पक्षे । शिश्वाय । शिश्वियतुः । शिश्वियुः । शिश्वयिथ । यजादिवश्वेरिति य्वृति शूयात् । शूयास्ताम् । शूयासुः । श्वयिता । श्वयिष्यति । वद् व्यक्तायां वाचि ॥५७॥ वदति । वदव्रजलः ॥४।३।४८॥ इति वृद्धौ । अवादीत् । अवादिष्टाम् । अवादिषुः । मैवं वादीः । उवाद । ऊदतुः । ऊदुः । उवदिथ । उद्यात् । वदिता । वस निवासे ॥ ५८ ॥ वसति । सस्तः सि ॥४।३।९२॥ इतिते । अवात्सीत् । अवात्ताम् । अवात्सुः । उवास । घस्वस इति पक्षे ऊषतुः । ऊषुः । उवसिथ । उवस्थ । उवास । उवस । उष्यात् । वस्त्यति । एते त्रयः परस्मैपदिनः । वृत् यजादिः ।

अथ द्युतादिः । द्युति दीप्तौ ॥ १ ॥ द्योतते ।

# द्युद्भ्योऽद्यतन्याम् ॥३।३।४४॥

द्युतादेरद्यतन्यां कर्तर्यात्मनेपदं वा स्यात् । लृदिद्द्युतादी ॥३।४।६४॥ अङ् । अद्युतत् । अद्योतिष्ट ।

# द्युतेरिः ॥४।१।४१॥

द्युतेर्द्विस्वे पूर्वस्योकारस्य इः स्यात् । दिद्युते । दिद्युताते । दिद्युतिरे । ञिमिदाङ् स्नेहने ॥ २ ॥ मेदते । अमिदत् । अमेदिष्ट । ञिष्विदाङ् ञिक्ष्विदाङ् मोचने च ॥ ३ ॥ चात्स्नेहने । अश्विदत् । अश्वेदिष्ट । स्वेदते । अस्विदत् । अस्वेदिष्ट । रुचि अभिप्रीतौ च ॥ ३ ॥ चाद्दीप्तौ । रोचते । अरुचत् । अरोचिष्ट । घुटि परिवर्तने ॥ ४ ॥ घोटते । अघुटत् । अघोटिष्ट । रुटि लुटि लुठि प्रतिघाते ॥ ५ ॥ श्विताङ् वर्णे ॥ ६ ॥ अश्वितत् । अश्वेतिष्ट । शुभि दीप्तौ ॥ ७ ॥ अशुभत् । अशोभिष्ट । क्षुभि सञ्चलने ॥ ८ ॥ सञ्चलनं स्पान्दधात्तम् । क्षोभते । अक्षुभत् । अक्षोभिष्ट । णभि तुभि हिंसायाम् ॥ ९ ॥ अनभत् । अनभिष्ट । अतुभत् । अतोभिष्ट । स्म्भूङ् विश्वासे ॥ १० ॥ स्रम्भादिः । स्रम्भते । अस्रभत् । अस्रम्भिष्ट । ध्वंसूङ् स्रंसूङ् अवस्रंसने ॥ ११ ॥ भ्रंशते । अभ्रशत् । अभ्रंशिष्ट । अस्रसत् । अस्रंसिष्ट । ध्वंसूङ् गतौ च ॥ १२ ॥ चकारादवस्रंसने । ध्वंसते । अध्वसत् । अध्वंसिष्ट । वृतूङ् वर्तने ॥ १३ ॥ वर्तते । अवृतत् । अवर्तिष्ट । ववृते । वर्तिषीष्ट । वर्तिता ।

# वृद्भ्यः स्यसनोः ॥३।३।४५॥

वृतादिभ्यः पञ्चभ्यः स्ये सनि च प्रयोगे कर्तर्यात्मनेपदं वा स्यात् । वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत ।

## न वृद्भ्यः ॥४।४।५५॥

वृतूङ् वृधूङ् शृधूङ् स्यन्दौङ् कृपौङ् एभ्य' पञ्चभ्यो धातुभ्य' परस्य सार्व-धित आर्धधातुकस्य इण् न स्यात्। अवर्तिष्ट। स्यन्दिकृपोरौदित्त्वेन इड्विकल्प' परत्वादनेन बाध्यते। अवर्तिष्ट इत्येव। वर्तिता। स्यन्दौङ् स्रवणे ॥ १४ ॥ स्यन्देर्मलोपे। अस्यदत्। अस्यन्दिष्ट। अस्यन्त। अस्यन्त्साताम्। सस्यन्दे। सस्यन्दिषे। सस्यन्त्से। सस्यन्दिध्वे। स्यन्दिषीष्ट। स्यन्त्सीष्ट। स्यन्दिता। स्यन्ता। स्यन्त्स्यति। स्यन्दिष्यते। स्यन्त्स्यते। अस्यन्त्स्यत्। अस्यन्दिष्यत। अस्यन्त्स्यत।

## निरभ्यनुभ्यश्च स्यन्दस्याप्राणिनि ॥२।३।५०॥

निरभ्यनुभ्यश्चात्परिनिविभ्यश्च परस्याप्राणिकर्तृकस्य स्यन्देः सस्य षो वा स्यात्। अनुष्यन्दते। अनुस्यन्दते वा जलम्। शृधूङ् शब्दे ॥ १५ ॥ शर्धते। अशृधत्। अशर्धिष्ट। शशृधे। शर्त्स्यति। शर्धिष्यते। शृधूङ् शब्दकुत्सायाम् ॥ १६ ॥ शृधूवत्। कृपौङ् सामर्थ्ये ॥ १७ ॥

## कृपो रो लः कृपोऽकृपीटादिषु ॥२।३।९९॥

कृपेर्धातोर्ऋकारस्य लृकारो रेफस्य च ल' स्यात् कृपीटादीन् विहाय। कल्पते। अक्लृपत्। अकल्पिष्ट। चक्लृपे।

## सिजाशिषावात्मने ॥४।३।३५॥

एतावनिटौ नामिन्युपान्त्ये सति धातो' परावात्मनेपदविषये किद्वत्स्याताम्। तेन। अक्लृप्त। चक्लृपे। चक्लृपिषे। चक्लृप्से। इत्यादि स्यन्दिवत्।

## कृप श्वस्तन्याम् ॥३।३।४६॥

कर्तर्यात्मनेपदं वा स्यात्। कल्पिता। कल्प्ता। परस्मैपदपक्षे न-वृद्भ्य ॥४।४।५५॥ इतीण्निषेधात्। कल्प्ता। एवं कल्पितासे। कल्प्तासे। कल्प्तासि। कल्पिष्यते। कल्प्स्यते। कल्प्स्यति। सम्पूर्णो द्युतादिर्वृतादिश्च ॥

अथ ज्वलादय'। ज्वल दीप्तौ ॥ १ ॥ शेषादिति परस्मैपदम्। ज्वलति। कुष सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ॥ २ ॥ सम्पर्चनं मिश्रता। विलेखनं कषणम्। कोषति। पतॢ पथे च गतौ ॥ ३ ॥ पूर्णसुप्ती। पतति। पथति। अपथीत्। क्वथे निष्पाके ॥ ४ ॥ मथे विलोडने ॥ ५ ॥ अमथीत्। षद्लृ विशरणगत्यवसादनेषु ॥ ६ ॥ षीतीस्यादिना सीदादेशो। सीदति। असदत्। सेदिथ। ससत्थ। निषीदति। प्रतिषजनात्प्रतिसीदति। शद शातने ॥ ७ ॥ शातनं तनू-करणम्।

## शदे शिति ॥३।३।४१॥

शिद्विषयिनोऽस्मादात्मनेपदं स्यात्। शीयादेशो। शीयते। अशदत्। श

र्शात् । शाशा । शास्यति । बुध अवगमने ॥ ८ ॥ अवगमनं ज्ञापनम् । बोधति । अनुस्वारेदयमित्येके । अभौत्सीत् । टुवमु उद्गिरणे ॥ ९ ॥ अवमीत् ।

जॄभ्रमेति ॥४।१।२६॥ वा एत्वे । वेमतुः । ववमतुः । भ्रमु चलने ॥ १० ॥ भ्रासभ्लासेति ॥३।१।७०॥ इति वा श्यने । भ्राम्यति । भ्रमति । भ्रेमतुः । बभ्रमतुः । क्षर सञ्चलने ॥ ११ ॥ अक्षारीत् । चल कम्पने ॥ १२ ॥ चलति । अचालीत् । जल घात्ये ॥ १३ ॥ घात्यं जडत्वम् । टल ट्वल वैक्लव्ये ॥ १४ ॥ ष्ठल स्थाने ॥ १५ ॥ षोपदेशोऽयमित्यन्ये । हल विलेखने ॥ १६ ॥ णल गन्धे ॥ १७ ॥ गन्धोऽर्दनम् । नल्वे । नलति । प्रणलति । बल प्राणनधान्यावरोधनयोः ॥ १८ ॥ बबाल । बेलतुः । बेलुः । पुल महत्त्वे ॥ १९ ॥ कुल बन्धुसंस्थानयोः ॥ २० ॥ पल फल शल गतौ ॥ २१ ॥ फेलतुः । फेलुः । फलिशल्योः पुनः पाठो ज्वलादिकार्यार्थः । शलेः परस्मैपदार्थश्च । हुल हिंसासंवरणयोश्च ॥ २२ ॥ चाद्गतौ । कुश आह्वानरोदनयोः ॥ २३ ॥ इशिट् इति क्सः । अकुक्षत् । क्रोष्टा । कस गतौ ॥ २४ ॥ कसति । रुह जन्मनि ॥ २५ ॥ बीजजन्मनीत्यन्ये । बीजजन्माङ्कुरोत्पत्तिः । रोहति । अरुक्षत् । रोढा । रमि क्रीडायाम् ॥ २६ ॥ षहि मर्षणे ॥ २७ ॥ घटिष् चेष्टायाम् ॥ १ ॥ घटते । घटादेर्ह्रस्वो दीर्घस्तु वा चिण्णम्परे ॥४।२।२४॥ इति घटादिसंज्ञाफलं वक्ष्यते । अघटिष्ट । जघटे । घटिता । घटिष्यते । घटादीनामनेकार्थत्वेऽपि पठितार्थेष्वेव घटादिकार्यविधानम् । तेन उद्घाटयति कमलवनम् । अविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादिसिद्धम् । विघटयतीत्यादि तु अजन्तस्य णिच्बहुलं नाम कृगादिषु ॥३।४।४२॥ इति करोत्यर्थे णिचि रूपम् । क्षजि गतिदानयोः ॥ २ ॥ क्षजते । अक्षजिष्ट । अक्षाजि । क्षजम् क्षजम् । क्षाजम् क्षाजम् । व्यथिष् भयचलनयोः ॥ ३ ॥ व्यथते । अव्यथिष्ट । व्याथ्ये ॥४।१।७१॥ इत्यादिना विव्यथे । प्रथिष् प्रख्याने ॥ ४ ॥ प्रथते । अप्रथिष्ट । पप्रथे । म्रदिष् मर्दने ॥ ५ ॥ म्रदते । अम्रादि । अम्रदि । म्रदम् म्रदम् । म्रादम् म्रादम् । स्खदिष् स्खदने ॥ ६ ॥ स्खदनं विदारणम् । स्खदते । कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये ॥ ७ ॥ वैकल्य इति चन्द्रः । कन्दते । क्रन्दते । क्लन्दते । क्रपि कृपायाम् । क्रपते । ञित्वरिष् संभ्रमे ॥ ८ ॥ त्वरते । तूर्णः । त्वरयति । प्रसिष् विस्तारे ॥ ९ ॥ प्रसते । प्रसव इत्यन्ये । दक्षि हिंसागत्योः ॥ १० ॥ दक्षते । श्रां पाके ॥ ११ ॥ श्रै पाके ॥ १२ ॥ श्रांच पाके ॥ १३ ॥ इत्यस्य च घटादिकार्यार्थं पाठः । श्रपयति । अश्रापि । अश्रपि । श्रपम् श्रपम् । श्रापम् श्रापम् । अन्यत्र श्रापयति । स्मृ आध्याने ॥ १४ ॥ स्मरयति । आध्यानादन्यत्र स्मारयति । दॄ भये ॥ १५ ॥ दरति । दरयति । भयादन्यत्र काष्ठं दारयति । नॄ नये ॥१६॥ घटादिरयम् । प्रणन्तु प्रयुङ्क्ते । नरयति । नयादन्यत्र । नारयति । ष्टक स्तक प्रतिघाते ॥ १७ ॥ स्तकति । षोपदेशत्वात् षत्वे । तिष्टकयिषति । द्वितीयस्य तु । तिस्तकयिषति । चक तृप्तौ च ॥ १८ ॥ चकति । चकयति । अयमात्मनेपदेऽपि । चकते । अक कुटिलायां गतौ ॥ १९ ॥ अकति । णौ ह्रस्वत्वे । अकयति । कखे हसने ॥ २० ॥ कखति । अक-

सीत् । अग अकवत् ॥ २१ ॥ रगे शङ्कायाम् ॥ २२ ॥ लगे सङ्गे ॥ २३ ॥ ह्रगे ह्लगे षगे सगे ष्ठगे स्थगे संवरणे ॥ २४ ॥ संवरणमाच्छादनम् । वट भट परिभाषणे ॥ २५ ॥ वेष्टने । वाटयति । भृतौ । भाटयति । नट नृत्तौ ॥ २६ ॥ नटयति शास्त्राम् । अन्यत्र नाटयति । गड सेचने ॥ २७ ॥ गडति । कडिडामीना ॥४।३।१०४॥ मिति लत्वे । गलति । हेड वेष्टने ॥ २८ ॥ ह्रस्वत्वे । हिडयति । ह्रस्वविधानान्न गुणः । अजिहिडत् । अहीडि । हिड हिडम् । हीडं हीडम् । लड जिह्वोन्मथने ॥ २९ ॥ लडयति जिह्वां कुक्कुरः । अन्यत्र । लाडयति । लत्वे । ललयति । लालयति । लल विलासे इत्यस्यैवार्थविशेषे घटादिकार्यार्थमिह पाठः । फण कण रण गतौ ॥ ३० ॥ फणति । प्रुषसे ॥४।१।२६॥ ति वा एत्वे द्वित्वाभावे च फेणतुरित्यादि । गतेरन्यत्र फाणयति घटम् । निष्पादयतीत्यर्थः । काणयति । राणयति । शब्दयतीत्यर्थः । चण हिंसादानयोश्च ॥ ३१ ॥ चाक्षुतौ । चणति । चणयति । शब्दे तु चाणयति । शण श्रण दाने ॥३२॥ शणति । शणयति । अन्यत्र शाणयति । श्रणति । श्रणयति । दापयतीत्यर्थः । चौरादिकस्य तु विश्राणयति । श्रथ क्नथ क्रथ क्लथ हिंसार्थाः ॥ ३३ ॥ क्रथयति । चौरस्योत्क्राथयतीति तु चौरादिकस्य । घटन्ताद्वा णिच् । आसमाटक्रायेतिनिर्देशाद्वा ह्रस्वाभावः । छद ऊर्जने ॥ ३४ ॥ ऊर्जनं प्राणनं बलं च । छदण् ऊर्जने इति पठिष्यमाणोऽप्यूर्जने घटादिकार्यार्थमिह पठितः । छदयत्यपि । स्वार्थे णिच् । छादयन्त प्रपुष्के इति णिगधा । ऊर्जनादन्यत्र छादयति पट तृणैः । मदै हर्षग्लेपनयोः ॥ ३५ ॥ मदैच् हर्षे इत्यस्यार्थविशेषे ह्रस्वार्थं पाठः । मदयति । अन्यत्र मादयति । प्रमादयति । ध्वन स्वन ध्वम शब्दे ॥ ३६ ॥ स्वम अवतंसने ॥ ३७ ॥ स्वनयति । शब्दे तु स्वानयति । चम हिंसायाम् ॥ ३८ ॥ चमयति । शब्दे तु चानयति । ज्वर रोगे ॥३९॥ ज्वरति । ज्वरयति । चल कम्पने ॥ ४० ॥ चलयति । अन्यत्र चालयति । ह्वल ह्मल चलने ॥ ४१ ॥ ह्वलयति । ह्मलयति । ज्वल दीप्तौ च ॥ ४२ ॥ ज्वलयति । अन्यत्र ज्वालयति । इति घटादयः । ज्वादिराकृतिगणः । तेन चुलुम्पतीत्यादि सङ्ग्रहः । इति ज्वादयो धातवः ॥

हंसिहसेमाऽप्यमममस्करी
यथा तुर्ग कोऽप्यवृथाम भस्करी ।
चकास्ति साऽनन्तचतुष्टयी त्वयी
सितर्षिमानस्त जगत्प्रपीपते ॥ १ ॥

## ऋतेर्डीयः ॥३।४।३॥

ऋत् घृणागतिस्पर्धेषु इत्यतः स्वार्थे डीयः प्रत्ययः स्यात् । ऋतीयते । आर्ती

---

१ हे ईश्विता ! हे मित्र ! हे भगवन् ! हे जगत्प्रपीपते ! यथा भवान् चतुरश्वा पृथिव्येणापि ममस्करी भवान् । तथा यथा पूर्वोक्ता कोऽपि मस्करी (संन्यासी) तुर्य (तुरीयं) यावदगात् वा अनन्तचतुष्टयी अनन्तज्ञानदर्शनवीर्यसुखाख्या त्वयि चकास्ति । मस्तिष्के [illegible] पाठा च कालोऽभवतायाचोऽप्यावीत् । च
च. च. मि.

पीष्ट। ऋतीयाभावे। अशवि ते वेति ऋीयाभावे घोपात्परस्मै इति परस्मैपदम्। आर्तीत्। आनर्त। ऋतीयिषीष्ट। ऋत्यात्। ऋतीयिता। अर्तिता। ऋतीयिष्यते। अर्तिष्यति।

## धातोः कण्ड्वादेर्यक् ॥३।४।८॥

कण्डूयति। अकण्डूयीत्। कण्डूयामास। कण्डूय्यात्। कण्डूयिता। कण्डूयते। अकण्डूयिष्ट। इत्यादि। अद् प्सांक् भक्षणे ॥ २ ॥ कर्तर्यनद्भ्य इत्यवादिवर्जनाश शव्। अत्ति। अत्तः। अदन्ति। अद्यात्। अत्तु। अत्तात्। अत्ताम्। अदन्तु।

## हुधुटो हेर्धिः ॥४।२।८३॥

होर्धुडन्ताच परस्य हेर्धिः स्यात्। अद्धि। अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम।

## अदश्चाट् ॥४।४।९०॥

अस्तेरस्य चकाराद् दिस्योरादिरट् स्यात्। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म।

## घस्लृ सनद्यतनीघञचलि ॥४।४।१७॥

एषु चात्त्वेदेर्घस्लृ स्यात्। लृदित्द्युतादीत्यङि। अघसत्।

## परोक्षायां न वा ॥४।४।१८॥

अदेः परोक्षायां वा घस्लृ आदेशः। अघास। द्विले गमहनेत्यु ॥४।२।४४॥ पान्त्यलुकि, अघोषे प्रथम ॥१।३।५०॥ इति घस्य कत्वे, घसस ॥ २।३।३६॥ इति सस्य षत्वे। जक्षतुः। जक्षुः। स्क्रसृवृ ॥४।४।८०॥ इति नियमादिट्। जघसिथ। जघास। जघस। जक्षिव। जक्षिम। अस्याघे ॥४।१।९८॥ रिति। आद। आदतुः। आदुः। आदिथ। अद्यात्। अत्ता। अत्स्यति। प्साति। प्सायात्। प्सातु। अप्सात्। अप्साताम्।

## वा द्विषातोऽनः पुस् ॥४।२।९१॥

द्विष आदन्ताच परस्यानः पुस्वा स्यात्। अप्सुः। अप्सान्। अप्सासीत्। अप्सासिष्टाम्। अप्सासिषुः। पप्सौ। पप्सतुः। एवं भांक् दीप्तौ ॥३॥ भाति। अभासीत्। बभौ। बभिथ। बभाथ। ख्यांक् प्रकथने ॥ ४ ॥ आख्याति। आख्यत्। आचख्यौ। यांक् प्रापणे ॥ ५ ॥ गतौ इत्यर्थः। याति। यायात्। यातु। अयात्। अयाताम्। अयुः। अयान्। अयासीत्। ययौ। वांक् गतिगन्धनयोः ॥ ६ ॥ ष्णांक् शौचे ॥ ७ ॥ श्रांक् पाके ॥ ८ ॥ द्रांक् कुत्सितगतौ ॥ ९ ॥ पांक् रक्षणे ॥ १० ॥ पायात्। मांक् माने ॥ ११ ॥ अस्याशिषि गापास्थे ॥ ४।३।९६॥

ययसे । मेयात् । दांवक् लवने ॥ १२ ॥ इत्यस्य दायात् । दायास्ताम् । रांक् दाने ॥ १३ ॥ लांक् आदाने ॥ १४ ॥ द्वावपि दाने इति चन्द्रः । मांक् पूरणे ॥ १५ ॥ अमासीत् । इण्क् गतौ ॥ १६ ॥ एति । अपित् शितो ङित्वाद्गुणाभावे । इतः ।

## ह्विणोरप्विति व्यौ ॥४।३।१५॥

ह्नोरिणश्च नामिनः स्वरादौ अपिति अशिति च शिति परे क्रमात् य्वौ स्तः । यन्ति । एषि । इथः । इथ । एमि । इवः । इमः । इयात् । एतु । इतात् । इताम् । यन्तु । इहि । इतात् । इतम् । इत । अयानि । अयाव । अयाम ।

## एत्यस्तेर्वृद्धिः ॥४।४।३०॥

इणिकोरस्तेश्च ह्यस्तन्यां वृद्धिः स्यात् । सत्वाद्गुणापवादोऽयम् । ऐत् । ऐताम् । आयन् । ऐः । ऐतम् । ऐत । आयम् । ऐव । ऐम । पिबैतिदे ॥ ४।३।६६ ॥ इति सिज्लुपि ।

## इणिकोर्गा ॥४।४।२३॥

इणिकोरद्यतन्यां गाः स्यात् । अगात् । अगाताम् । अगुः । द्वित्वे द्वितीयस्य नामिनः ॥४।३।५१॥ इति वृद्धिः । पूर्वस्य इय् अग्रे आय् इत्यसवर्णस्वरत्वात् । इयाय ।

## इणः ॥२।१।५१॥

इणो धातोः स्वरादौ प्रत्यये परे इय् स्यात् । यत्वापवादः । ईयतुः । ईयुः । थेटि द्वितीयस्य गुणेऽयादेशो च इय् पूर्वस्य । इययिथ । इयेथ । ईयिव । ईयिम । दीर्घश्च्वीति दीर्घः । ईयात् । ईयास्ताम् । ईयासुः । एता । एष्यति । ऐष्यत् ।

## आशिषीणः ॥४।३।१०७॥

उपसर्गात्परस्य इण ईकारस्य ङिति यादावाशिषि ह्रस्वः स्यात् । उदियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । ईकारस्येत्येव । समेयात् । समीयादिति तु औणादिकस्य । इक् स्मरणे ॥ १७ ॥ अधिपूर्व एवायम् । अध्येति । अधीतः ।

## इको वा ॥४।३।१६॥

इकः स्वराद्यपिति शिति यत्वं वा स्यात् । अधीयन्ति । अधियन्ति । शेषमिण्वत् आशिषि ह्रस्वं विना । अधीयात् । अधीयाः । वींक् प्रजनकान्त्यसनखादनेषु च ॥ १८ ॥ वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अवैषीत् । अवैष्टाम् । विवाय । विव्यतुः । वीयात् । वेता । वेष्यति । अवेष्यत् । अत्र इक् इति धात्वन्तरप्रश्लेषः । एति । ईतः । इयन्ति । ईयात् । ऐषीत् । शुङ् अभिगमने ॥ १९ ॥

## उत औ विंति व्यञ्जनेऽद्वेः ॥४।३।५९॥

अद्विरुक्तोकारान्तस्य धातो र्व्यञ्जनादौ पिति परे औः स्यात्। यौति। युतः। युङ् प्रसवैश्वर्ययोः ॥२०॥ प्रसवोऽभ्यनुज्ञानम्। सौति। सुतः। सुवन्ति। सुयात्। सौतु। सुतात्। असौत्। असौषीत्। असौष्टाम्। सुषाव। सुषुवतुः। सूयात्। सोता। सोष्यति। तुङ् वृत्तिहिंसापूरणेषु ॥ २१ ॥ सौत्रोऽयमिति दीक्षितः।

## यङ् तुरुस्तो र्बहुलम् ॥४।३।६४॥

यङ्लुगन्तात्तुरुस्तुभ्यश्च परो व्यञ्जनादौ पिति ईत् बहुलं परादिः स्यात्। तौति। तवीति। तुतः। तुवन्ति। बहुलग्रहणात् णुङ् स्तुतौ ॥ २२ ॥ इत्यस्यापि। नौति। नवीति। नुतः। नुवन्ति। नुयात्। नौतु। नवीतु। नुताम्। नुवन्तु। अनौत्। अनवीत्। बाहुलकात्। नुवीत। नुयात्। नुवीयात्। इति सर्वत्र ईत् इत्याहुः। अनावीत्। नुनाव। नुनुवतुः। नूयात्। नविता। नविष्यति। एवम्। युङ् मिश्रणे ॥ २३ ॥ यौति। यवीति। क्ष्णुङ् तेजने ॥ २४ ॥ स्नुङ् प्रस्रवणे ॥२५॥ अस्नावीत्। टु क्षु रु कुङ् शब्दे ॥ २६ ॥ रौति। रवीति। अरावीत्। क्षौति। अक्षावीत्। अन्त्योऽनिट्। अकौषीत्। सौतिवत्। आद्यो यौतिवत्। रुदङ् अश्रु विमोचने ॥ २७ ॥

## रुत्पञ्चकाञ्छिदयः ॥४।४।८८॥

रुदादेः पञ्चकात् परस्य व्यञ्जनादेः शितोऽयादेरादिरिट् स्यात्। रोदिति। रुदितः। रुदन्ति। रुद्यात्। रोदितु। रुदितात्। रुदिताम्। रुदन्तु। रुदिहि। रुदितात्। रुदितम्। रुदित। रोदानि। रोदाव। रोदाम।

## दिस्योरीट् ॥४।४।८९॥

रुत्पञ्चकात् शितोर्दिस्योरादिरीट् स्यात्। अरोदीत्। अद्वाऽट् ॥ ४।४।९० ॥ इत्यडागमे। अरोदत्। अरुदिताम्। अरुदन्। अरोदीः। अरोदः। अरुदितम्। अरुदित। अरोदम्। अरुदिव। अरुदिम। सेट्त्वादद्यतन्याम्। अरोदीत्। पक्षे ऋदिच्छ्वीत्यादिनाऽङि। अरुदत्। अरोदिष्टाम्। अरुदताम्। अरोदिषुः। अरुदन्। रुरोद। रुरुदतुः। रुरुदुः। रुद्यात्। रोदिता। रोदिष्यति। ञिष्वपङ् शये ॥ २८ ॥ स्वपिति। स्वप्यात्। स्वपितु। अस्वपीत्। अस्वपत्। अस्वाप्सीत्। अस्वाप्ताम्। अस्वाप्सुः। द्वित्वे भूस्वपो ॥४।१।७०॥ रिति पूर्वस्योत्वे। सुष्वाप। किति।

## स्वपे र्यङ्के च ॥४।१।८०॥

स्वपे र्यङि के किति च प्रत्यये ष्वृत् स्यात् । इति ष्वृत् । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ । सुप्यात् । स्वप्ता । स्वप्स्यति । अस्वप्स्यत् ।

## अवः स्वपः ॥२।३।५७॥

निर्दुःसुविपूर्वस्य षकाररहितस्वपेः सस्य षः । सुषुषुपतुः । अन श्वसन प्राणने ॥ २९ ॥

## द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा ॥२।३।८१॥

अदुरुपसर्गान्तःशब्दस्थाद्रषृवर्णात् परस्यानितेर्नकारस्य द्वित्वे वाऽद्वित्वे वान्तेऽवानन्ते वर्तमानस्य णः स्यात्, परिपूर्वस्य तु वा । प्राणिति । प्राण्यात् । प्राणितु । प्राणीत् । प्राणत् । प्राणीत् । प्राणिष्टाम् । प्राणिषुः । प्राण । प्राणतुः । प्राण्यात् । प्राणिता । प्राणिष्यति । एवं श्वसितिरपि । अद्यतन्यां व्यञ्जनादेरिति वा वृद्धौ । अश्वासीत् । अश्वसीत् । शश्वास । शश्वसतुः । जक्ष भक्षहसनयोः ॥ ३० ॥ जक्षिति । जक्षितः ।

## अन्तो नो लुक् ॥४।२।९४॥

द्युक्जक्षपञ्चतः परस्यान्तो नकारस्य लुक् स्यात् । जक्षति । जक्ष्यात् । जक्षितु । अजक्षत् । अजक्षीत् । अजक्षिताम् ।

## द्युक्तजक्षपञ्चतः ॥४।२।९३॥

कृतद्वित्वाज्जक्षपञ्चतश्च परस्य ङितोऽनः पुस् स्यात् । अजक्षुः । अजक्षीत् । जजक्ष । जक्ष्यात् । जक्षिता । जक्षिष्यति । इति रुत्पञ्चकम् । दरिद्रा दुर्गतौ ॥ ३१ ॥ दरिद्राति ।

## इ र्दरिद्रः ॥४।२।९८॥

दरिद्रो व्यञ्जनादौ शित्यविति आत इः स्यात् । दरिद्रितः ।

## श्नश्चातः ॥४।२।९६॥

द्युक्जक्षपञ्चतः श्नश्च शित्यविति आकारस्य लुक् स्यात् । दरिद्रति । दरिद्रासि । दरिद्रियात् । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः ।

## दरिद्रोऽद्यतन्या वा ॥४।३।७६॥

अस्याद्यतन्यां विषये वा लुक् स्यात् । अदरिद्रीत् । अदरिद्रिष्टाम् । अदरिद्रिषुः । पक्षे । अदरिद्रासीत् । अदरिद्रासिष्टाम् । अदरिद्रासिषुः । धातोरनेके ॥३।४।४६॥ स्वामि । दरिद्राञ्चकार ।

## अशित्यस्सन्णकच्णकानटि ॥४।३।७७॥

सादिसन् णकच् णक अनट् एतान् विनाऽशिति प्रत्यये विषयभूते दरिद्रातेरन्त्यस्य लुक् स्यात् । आतो णव औ ॥४।२।१२०॥ रित्यत्र औ इत्येव सिद्धे औकारो दरिद्रातेरालोपे श्रवणार्थम् । ददरिद्रौ । ददरिद्रतुः । दरिद्र्यात् । दरिद्रिता । दरिद्रिष्यति । जागृङ् निद्राक्षये ॥ ३२॥ जागर्ति । जागृयात् । जागर्तु । नामिनो गुण ॥४।३।१॥ इति गुणे ।

## व्यञ्जनाद्दे. सश्च दः ॥४।३।७८॥

धातोर्व्यञ्जनान्तात्परेर्लुक् स्यात्, यथासम्भव धातुसकारस्य च द' । अजाग' । अजागृताम् । पुस्या ॥४।३।३॥ सिति गुण' । अजागरुः । सेः स्द्धाञ्च रुर्वा ॥४।३।७९॥ इति सूत्रेण रौ कृते अजाग' । अजागृतम् । अजागृत । अजागरम् । अजागृव । अजागृम । न श्वी ॥ ४।३।४९ ॥ ति वृद्धि नं । अजागरीत् । अजागरिष्टाम् । अजागरिषु' । जाग्रुषे ॥३।४।४९॥ स्यामि । जागराञ्चकार ।

## आद्योंऽश एकस्वरः ॥४।१।२॥

अनेकस्वरस्य धातो राद्य एकस्वरोऽवयव' परोक्षाया के च परे द्विः स्यात् जजागार ।

## जागुः किति ॥४।३।६॥

गुण' स्यात् । जजागरतु' । जजागरुः । जजागरिथ । जजागरथु' । जजागर ।

## जागु ञिणवि ॥४।३।५२॥

*अस्य ञ्णिति णौ णव्येव च वृद्धि' । अन्यत्र गुण'* । जजागार । जजागर । जजागरिव । जजागरिम । जागर्यात् । जागरिता । जागरिष्यति । चकासृङ् दीप्तौ ॥ ३३ ॥ चकास्ति । चकास्ति । चकास्त' । चकासति । चकास्यात् । चकास्तु हुधुटो हेर्धि ॥४।२।८३॥ (सिति धौ) सोधि वा लुक् ॥४।३।१२३॥ चकाधि । पक्षे तृतीयत्वे सस्य द' । चकाद्धि । चकासीत्येव भाव्यम् । अचकात् । अचकास्ताम् । अचकासु' । अचका' । अचकात् । अचकास्तम् । अचकास्त । अचकासीत् । अचकासिष्टाम् । अचकासिषु' । चकासाञ्चकार । चकास्यात् । चकासिता । चकासिष्यति । शासूङ् अनुशिष्टौ ॥ ३४ ॥ शास्ति ।

## इसासः शासोऽङ् व्यञ्जने ॥४।४।११८॥

शास्ते रवास्यासोऽङि क्ङिति व्यञ्जनादौ च इस् स्यात् । शिष्टः । शासति । शास्सि । शिष्ठः । शिष्ठ । शास्मि । शिष्व' । शिष्म' । शिष्यात् । शास्तु । शिष्टात् । शिष्टाम् । शासतु ।

## शाससूहनःशाध्येधिजहि ॥४।२।८४॥

एषां त्रयाणां अन्तानां यथासंख्यं शाध्येधिजहय स्युः । शाधि । शिष्टात् । शिष्टम् । शिष्ट । शासानि । शासाव । शासाम । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात । अशिष्टम् । अशिष्ट ।

## शास्त्यसूवक्तिख्यातेरङ् ॥३।४।६०॥

एभ्योऽद्यतन्यामङ् स्यात् । अशिषत् । शशास । शशासतुः । शशासुः । शिष्यात् । शासिता । शासिष्यति । वचक् भाषणे ॥ १५ ॥ वक्ति । वक्तः । वचन्ति । निषचन्ति प्रयोगस्य स्याद्वावमलर्णो दर्शनात् । वक्षि । वक्थ । वच्यात् । वक्तु । वक्ताम् । वचन्तु । वग्धि । वक्तात् । अवक् । शास्त्यसू ॥३।४।६०॥ इत्यङ् । श्वयत्यसू ॥४।१।१०३॥ इतिवोपादेशे । अवोचत् । द्वित्वे वृति । उवाच । यजादिवचे ॥४।१।७२॥ रिति वृति । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । उच्यात् । वक्ता । वक्ष्यति । मृजौक् शुद्धौ ॥ १६ ॥ लघोरुपान्त्यस्ये ॥४।३।४॥ ति गुणे ।

## मृजोऽस्य वृद्धिः ॥४।३।४२॥

मृजेर्गुणे सत्यकारस्य वृद्धिः स्यात् । यजसृजे ॥२।१।८१॥ ति षत्वे । मार्ष्टि । मृष्टः ।

## ऋतःस्वरे वा ॥४।३।४३॥

मृजेर्ऋत स्वरे परे वृद्धिर्वा स्यात् । मार्जन्ति । मृजन्ति । पदोः कः सी ॥२।१।६२॥ तिकत्वे । मार्क्षि । मृष्ठः । मृज्यात् । मार्ष्टु । मृष्टात् । मृष्टाम् । मृजन्तु । मार्जन्तु । हेस्तु धि । मृड्ढि । मृष्टात् । मृष्टम् । मृष्ट । मार्जानि । मार्जाव । मार्जाम । अमार्ट् । अमार्ड् । अमृष्टाम् । अमार्जन् । अमृजन् । अमार्ट् । अमार्ड् । अमृष्टम् । अमृष्ट । अमार्जम् । अमृज्व । अमृज्म । औदित्त्वादिड्विकल्पे । अमार्जीत् । अमार्क्षीत् । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जुः । ममृजुः । ममार्जिथ । मृज्यात् । मार्जिता । मार्ष्टा । मार्जिष्यति । मार्क्ष्यति । षस्तुङ् स्वप्ने ॥ १७ ॥ उदित्वात्, घुटो घुटि स्वे ॥१।३।४८॥ ति लोप्सुफि च । सस्ति । विदक् ज्ञाने ॥ १८ ॥ वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ।

## तिवां णव. परस्मै ॥४।२।११७॥

वेत्तेः परेषां तिवादीनां णवादीनि नव वा क्रमात्स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । विद्यात् । विद्याताम् । विद्युः ।

## पञ्चम्या कृग् ॥३।४।५२॥

वेत्तेः परस्याः पञ्चम्याः किदाम् वा स्यात् । तदन्ताच्च कृगोऽनुप्रयोगः ।

विदाङ्करोतु । विदाङ्कुरु । विदाङ्करवाणि । पक्षे । वेत्तु । वित्तात् । वित्ताम् । विदन्तु । विद्धि । वित्तात् । वित्तम् । वित्त । वेदानि । वेदाव । वेदाम । अवेत् । अवेद् । अवित्ताम् । सिज्विदोऽभुवः ॥४।२।९२॥ अविदुः । सेः स्द्धां च रुर्वा इति रौ । अवे । अवेत् । अवित्तम् । अवित्त । अवेदम् । अविद्व । अविद्म । अवेदीत् । अवेदिष्टाम् । अवेदिषुः ।

## वेत्तेः कित् ॥३।४।५१॥

वेत्तेः परस्याः परोक्षाया आम् वा स्यात् स च कित् । विदाञ्चकार । पक्षे । विवेद । विविदतुः । विविदुः । विवेदिथ । विद्यात् । विद्यास्ताम् । विद्यासुः । वेदिता । वेदिष्यति । अवेदिष्यत् । हनक् हिंसागत्योः ॥ ३९ ॥ हन्ति । नेर्ङ्मादेति ॥२।३।७९॥ णत्वे । प्रणिहन्ति ।

## यमिरमिगमिनमिहनिमनिवनतितनादेर्धुटि क्ङिति ॥४।२।५५॥

एषां धुडादौ क्ङिति क्ङिति च परेऽन्तस्य लुक्स्यात् । हतः । गमहनेत्युपान्त्यलुकि, हनो ह्नो घ्नः ॥२।१।११२॥ इति घ्नादेशे । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः ।

## वमि वा ॥२।३।८३॥

अदुरुपसर्गान्तःस्थाद्रादेः हन्तेः नो णो वा स्यान्म्वोः परयोः । प्रहन्मि । प्रहण्मि । प्रहन्वः । प्रहण्वः । प्रहण्मः । प्रहन्मः । विध्यादौ । हन्यात् ।

## हनः ॥२।३।८२॥

अदुरुपसर्गान्तःस्थाद्रादेः परस्य हन्तेर्नस्य णः स्यात् । प्रहण्यात् । हन्तु । हतात् । घ्नो । जहि । हनानि । अहन् । अहताम् । अघ्नन् ।

## अद्यतन्या वा त्वात्मने ॥४।४।२२॥

अद्यतन्यां विषये हनो वधः स्यात्, आत्मनेपदे तु वा । इट्ईति ॥४।३।७१॥ ति सिज्लोपे ।

## अतः ॥४।३।८२॥

अदन्ताद्धातोर्विहितेऽक्ङिति प्रत्यये धातोरतो लुक्स्यात् । इत्यकारलुकि । अवधीत् । अवधिष्टाम् । अवधिषुः ।

## ञ्णिति घत् ॥४।३।१०१॥

ञ्णौ णिति च परे हन्तेर्घत् स्यात् । धातोऽपवादः । ततो द्वित्वे । द्वितीयतुर्य

## शासस्हन:शाध्येधिजहि ॥४।२।८४॥

एषां त्रयाणां अन्तानां यथासंख्यं शाध्येधिजहयः स्युः । शाधि । शिष्टात् । शिष्टम् । शिष्ट । शासानि । शासाव । शासाम । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् । अशिष्टम् । अशिष्ट ।

## शास्त्यसूवक्तिख्यातेरङ् ॥३।४।८०॥

एभ्योऽद्यतन्यामङ् स्यात् । अशिषत् । शशास । शशासतुः । शशासुः । शिष्यात् । शासिता । शासिष्यति । वचक् भाषणे ॥ १५ ॥ वक्ति । वक्तः । वचन्ति । निवचन्ति प्रयोगस्य स्याद्वादमञ्जर्यां दर्शनात् । वक्षि । वक्थ । वच्यात् । वक्तु । वक्ताम् । वचन्तु । वग्धि । वक्तात् । अवक् । शास्त्यसू ॥३।४।६०॥ इत्यङ् । श्वयत्यसू ॥४।१।१०३॥ इतिवोचादेशे । अवोचत् । द्वित्वे य्वृति । उवाच । यजादिवचेः ॥४।१।७२॥ रिति य्वृति । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । उच्यात् । वक्ता । वक्ष्यति । मृजौक् शुद्धौ ॥ १६ ॥ लघोरुपान्त्यस्य ॥४।३।४॥ ति गुणे ।

## मृजोऽस्य वृद्धिः ॥४।३।४२॥

मृजेर्गुणे सत्यकारस्य वृद्धिः स्यात् । यजसृजे ॥२।१।८७॥ ति षत्वे । मार्ष्टि । मृष्टः ।

## ऋतःस्वरे वा ॥४।३।४३॥

मृजेर्ऋतः स्वरे परे वृद्धिर्वा स्यात् । मार्जन्ति । मृजन्ति । षढोः कः सि ॥२।१।६२॥ ति कत्वे । मार्क्षि । मृष्ठः । मृज्यात् । मार्ष्टु । मृष्टात् । मृष्टाम् । मृजन्तु । मार्जन्तु । हे स्तु धि । मृड्ढि । मृष्टात् । मृष्टम् । मृष्ट । मार्जानि । मार्जाव । मार्जाम । अमार्ट् । अमार्ड् । अमृष्टाम् । अमार्जन् । अमृजन् । अमार्ट् । अमार्ड् । अमृष्टम् । अमृष्ट । अमार्जम् । अमृज्व । अमृज्म । औदित्त्वादिड्विकल्पे । अमार्जीत् । अमार्क्षीत् । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जुः । ममृजुः । ममार्जिथ । मृज्यात् । मार्जिता । मार्ष्टा । मार्जिष्यति । मार्क्ष्यति । सस्तुक् स्वप्ने ॥ १७ ॥ उदित्त्वात्, धुटो धुटि स्वे वा ॥१।३।४८॥ ति तो लुकि च । सस्ति । विदक् ज्ञाने ॥१८॥ वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ।

## तिवां णवः परस्मै ॥४।२।११७॥

वेत्तेः परेषां तिवादीनां णवादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । विद्यात् । विद्याताम् । विद्युः ।

## पञ्चम्याः कृग् ॥३।४।५२॥

वेत्तेः परस्याः पञ्चम्याः किदाम् वा स्यात् । तदन्ताच्च कृगोऽनुप्रयोगः ।

## अस्ति ब्रुवो भूवचावशिति ॥४।४।१॥

अनयोरेतौ स्याताम् । अभूत् । बभूव । इत्यादि प्राग्वत् । षसक् स्वप्ने ॥४२॥ सस्ति । सस्तः । ससन्ति । असासीत् । अससीत् । यङ्लुबन्ता अपि धातवोऽद्यादिगणस्था एव साध्याः । इति परस्मैपदिनः ॥

इङ्क् अध्ययने ॥ १ ॥ अधिपूर्वोऽयं प्रयोगे । अधीते । धातोरिवर्णोवर्णस्येतीयादेशो । अधीयाते । अधीयते । अधीषे । अधीयीत । अधीताम् । अधीयाताम् । अधीयताम् । अध्यये । गुणायादेशयोः करणादनुपसर्गस्य यत्वम् । पूर्वं धातुरुपसर्गेण युज्यते ततः प्रत्ययकार्येण इति गुणात्पूर्वं समानानामिति दीर्घः प्राप्तः । इङ् अध्ययने इति निर्देशान्न भवति । अध्यैत । अध्यैयाताम् । अध्यैयत । धातोरिवर्णोवर्णस्ये ॥२।१।५०॥ ति इयादेशो, स्वरादेस्तासु ॥४।४।३१॥ इति वृद्धिः । अध्यैयि । अध्यैवहि । अध्यैमहि ।

## वाद्यतनीक्रियातिपत्त्योर्गीङ् ॥४।४।२८॥

अनयोर्विभक्त्योरिङो गी र्वा स्यात् । अध्यगीष्ट । अध्यैष्ट । अध्यगीषाताम् । अध्यैषाताम् । अध्यगीषत । अध्यैषत ।

## गाः परोक्षायाम् ॥४।४।२६॥

इङः परोक्षायां विषये गाः स्यात् । अधिजगे । अध्येषीष्ट । अध्येता । अध्येष्यते । अध्यगीष्यत । अध्यैष्यत । शीङ्क् स्वप्ने ॥ २ ॥

## शीङ एः शिति ॥४।३।१०४॥

शीङः शिति परे एकारोऽन्तादेशो भवति । शेते । शयाते ।

## शीङो रत् ॥४।२।११५॥

शीङः परस्यात्मनेपदस्यान्तो रत् स्यात् । शेरते । शयीत । शेताम् । शयाताम् । शेरताम् । शेष्व । अशेत । अशयिष्ट । शिश्ये । शयिषीष्ट । शयिता । शयिष्यते । अशयिष्यत । षूङौक् प्राणिगर्भविमोचने ॥३॥ सूते । सुवीत । सूताम् । पिच्छितोऽकित्त्वाद्गुणे प्राप्ते ।

## सूतेः पञ्चम्याम् ॥४।३।१३॥

गुणो न स्यात् । सुवै । असूत । औदित्त्वाद्विकल्पः । असविष्ट । असविषाताम् । असविषत । असोष्ट । असोषाताम् । असोषत । सुषुवे । सुषुविषे । सोषीष्ट । सविषीष्ट । सोता । सविता । सोष्यते । सविष्यते । असोष्यत । असविष्यत । णिजुङ्क् शुद्धौ ॥ ३ ॥ निङ्क्ते । निञ्जे । शिजुङ्कि अव्यक्ते शब्दे ॥ ४ ॥ शिङ्क्ते । एवं पृचैङ्क् पृजुङ्क् पिजुङ्कि सम्पर्चने ॥ ५ ॥ मिश्रणे इत्यर्थः । पृङ्क्ते । पृञ्जे । पिङ्क्ते । वृजैङ्कि वर्जने ॥६॥ वृक्ते । वृजे । ईडिक् स्तुतौ ॥७॥ ईट्टे । ईडाते । ईडते ।

घोरि ॥४।१।४२॥ ति घस्य गत्वे, गहोर्जः । जघान । हनो ङ्गिते, गमहन ॥४।२।४४॥ त्युपान्त्यलुकि ।

## अहे हिहनो हो घः पूर्वात् ॥४।१।३४॥

हिहनोर्द्वित्वे प्रत्यये ङ्गित्वे सति पूर्वात्परस्य हो घः स्यात् । जघ्नतुः । जघ्नुः । जघनिथ । जघन्थ । जघ्नथुः । जघ्न । जघान । जघन । जघ्निव । जघ्निम ।

## हनो वध आशिष्यञौ ॥४।४।२१॥

आशीर्विषये हन्तेर्धातोर्वधः स्यात् न तु ञौ । वध्यात् । वध्यास्ताम् । वध्यासुः । हन्ता । ऋद्धनः स्यस्य ॥४।४।४९॥ इतीटि हनिष्यति । वशच् कान्तौ ॥ ४० ॥ यजसृजे ॥२।१।८७॥ ति षत्वे, तवर्गस्य ॥१।३।६०॥ ति टत्वे । वष्टि ।

## वशेरयङि ॥४।१।८३॥

वशेः सस्वरान्तस्था अयङि क्ङिति य्वृत्स्यात् । उष्टः । उशन्ति । वक्षि । उष्ठः । उष्ठ । वश्मि । उश्वः । उश्मः । उश्यात् । वष्टु । उष्टात् । उष्टाम् । उशन्तु । उड्ढि । उष्टात् । उष्टम् । उष्ट । वशानि । वशाव । वशाम । अवट् । अवड् । य्वृति । स्वरादेस्तासु ॥४।४।३१॥ ति वृद्धौ । औष्टाम् । औशन् । अवट् । अवड् । औष्टम् । औष्ट । अवशम् । औश्व । औश्म । व्यञ्जनादेर्नाम्युपान्त्यस्य ॥४।३।४७॥ ति वृद्धौ । अवाशीत् । अवशीत् । अवाशिष्टाम् । अवशिष्टाम् । द्वित्वे, यजादिवश-वचः ॥४।१।७२॥ इति य्वृति । वृद्धौ । उवाश । यजादिवचेः किति ॥४।१।७९॥ ति य्वृति । द्वित्वे । ऊशतुः । ऊशुः । उवशिथ । उवाश । उवश । ऊशिव । ऊशिम । उश्यात् । वशिता । वशिष्यति । असक् भुवि ॥ ४१ ॥ अस्ति ।

## श्नास्त्योर्लुक् ॥४।२।९०॥

श्नाप्रत्ययस्यास्तेश्चातः शित्यविति लुक् स्यात् । स्तः । सन्ति ।

## अस्तेः सि हस्त्वेति ॥४।३।७३॥

अस्तेः सस्य लुक् स्यात्, सादौ प्रत्यये परे, एकारे तु प्रत्यये सकारस्य हः स्यात् । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । स्यात् । स्याताम् । स्युः ।

## प्रादुरुपसर्गाद्यस्वरेऽस्ते ॥२।३।५८॥

प्रादुःशब्दादुपसर्गस्थनिमित्ताच्च परस्यास्तेः सकारस्य यादौ स्वरादौ च परे षः स्यात् । प्रादुःष्यात् । निष्यात् । अस्तु । स्तात् । स्ताम् । सन्तु । शासस्हनः शाध्येधिजहि ॥४।२।८४॥ एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । सः सिजस्तेः ॥४।३।६५॥ इतीडागमे, पक्षस्तेरिति वृद्धौ च । आसीत् । आस्ताम् । आसन् । आसीः । आस्तम् । आस्त । आसम् । आस्व । आस्म ।

कजत् । अजगाश्रत् । चित्रण् चित्रक्रियाकदाचिद्दृष्ट्योः ॥ ४९ ॥ चित्रयति । आलेख्यं करोति । कदाचित्पद्यति वेत्यर्थः । केचिच्चकरणार्थोऽय म चित्रक्रियार्थ इत्यन्ये । छिद्रण् भेदे ॥ ५० ॥ मिश्रण् सम्पर्चने ॥ ५१ ॥ वरण् ईप्सायाम् ॥५२॥ वरयति । अववरत् । स्वरण् आक्षेपे ॥ ५३ ॥ स्वरयति । असस्वरत् । शारण् दौर्बल्ये ॥ ५४ ॥ तालव्यादिः । धारेति नन्दी । शारयति । अशशारत् । कुमारण् क्रीडायाम् ॥ ५५ ॥ कुमारयति । अचुकुमारत् । लान्तोऽपमित्येके । कुमालयति । कलण् संख्यानगत्योः ॥ ५६ ॥ कलयति । क्षेपे तु कालयति गाः । शीलण् उपधारणे ॥ ५७ ॥ उपधारणमभ्यासः परिचयो वा । शीलयति । अशिशीलत् । वेल कालण् उपदेशे ॥५८॥ अविवेलत् । अचकालत् । वेलण् कालोपदेश इत्येके । पल्यूलण् लवनपवनयोः ॥ ५९ ॥ पल्यूलयति क्षेत्रं धान्यं वा । अपपल्यूलत् । वल्यूलेत्यन्ये । अंशण् समाघाते ॥ ६० ॥ समाघातो विभजनम् । अंशयति रिक्थम् । च द्रो दन्त्यान्त्यमाह । व्यसयति । पपण् अनुपसर्गे ॥ ६१ ॥ पपयति । अनुपसर्ग इति किम् ? प्रपयति । गवेषण् मार्गणे ॥ ६२ ॥ गवेषयति । अजगवे षत् । सूषण् क्षान्तौ ॥ ६३ ॥ सूषयति । असुसूषत् । रसण् आस्वादनस्नेहनयोः ॥ ६४ ॥ वासण् उपसेवायाम् ॥ ६५ ॥ निवासण् आच्छादने ॥ ६६ ॥ निवास यति । अनिनिवासत् । चहण् कल्कने ॥ ६७ ॥ अचचहत् । महण् पूजायाम् ॥ ६८ ॥ अममहत् । रहण् त्यागे ॥ ६९ ॥ रहयति । अररहत् । रहुण् गतौ ॥७०॥ रहयति । स्पृहण् ईप्सायाम् ॥ ७१ ॥ पुष्पेभ्यः स्पृहयति । रूक्षण् पारुष्ये ॥ ७२ ॥ रूक्षयति । अररूक्षत् । इत्यदन्ताः परस्मैपदिनः ॥

मृगणि अन्वेषणे ॥ १ ॥ मृगयते । अर्थणि उपयाचने ॥ २ ॥ पूर्वाचार्यैनु रोपादन्तेष्वस्य पाठः । एवं सत्रिगर्भ्योरपि । केचिददन्तत्वबलात् अतोऽल्लुकं बाधित्वा वृद्धौ प्यागमे च अर्थापयते इत्यादि मन्यन्ते । आर्तथत । पदणि गतौ ॥ ३ ॥ पदयते । अपपदत । संग्रामणि युद्धे ॥ ४ ॥ संग्रामयते शूरः । अससंग्राम यत । अयं परस्मैपदीत्येके । संग्रामयति । शूर वीरणि विक्रान्तौ ॥ ५ ॥ सत्रणि सन्तानक्रियायाम् ॥ ६ ॥ सन्तानक्रियायामित्येके । सत्रयते शत्रून् । अससत्रत । स्थूलणि परिबृंहणे ॥ ७ ॥ स्थूलयते । गर्वणि माने ॥ ८ ॥ गर्वयते । अजगर्वत । गृहणि ग्रहणे ॥ ९ ॥ गृहयते । अजगृहत । कुहणि विस्मापने ॥ १० ॥ कुहयते । इत्यदन्ताः ॥

अथ विकल्पितणिचः ॥ युजण् सम्पर्चने ॥ १ ॥

## युजादेर्न वा ॥३।४।१८॥

एभ्यो णिज्वा स्यात् । योजयति । योजति । अयूयुजत् । अयोजीत् । लीण् द्रवीकरणे ॥ २ ॥ विलापयति । लयति । मीण् मतौ ॥ ३ ॥ गत्यर्थइत्यन्ये । माप यति । मयति । अमीमपत् । अमायीत् । प्रीगण् तर्पणे ॥ ४ ॥

# धूञ्प्रीञोर्नः ॥४।२।१८॥

अनयो र्णौ नोऽन्त' स्यात् । प्रीणयति । णिचस्य णिजभावे फलवत्कर्तर्या-त्मनेपदार्थत्वात् । प्रयते । प्रयति । ष्यादेरेनमिच्छन्त्यन्ये । तन्मते प्राययति । धूञ् कम्पने ॥ ५ ॥ धूनयति । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । तावावयति । पेमापयति । धुवति प्रियति निवृत्त्यर्थश्च । तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुकि ॥ १ ॥ न नेच्छन्त्येके । धावयति । पक्षे । धवत । धवति । अधावीत् । अधविष्ट । अधोष्ट । वृञ् आवरणे ॥ ६ ॥ वारयति । वरति । वरते । जॄण् वयोहानौ ॥ ७ ॥ जारयति । जरति । अजारीत् । चीक चीकण् आमर्षणे ॥ ८ ॥ अचीचिकत् । मार्गण अन्वेषणे ॥ ९ ॥ मार्गयति । मार्गति । अमार्गीत् । पृचण् सम्पर्चने ॥ १० ॥ समपीपृचत् । समपपर्चत् । अपर्चीत् । रिचण् वियोजने च ॥ ११ ॥ वचण् भाषणे ॥ १२ ॥ सन्देशन इत्येके । वाचयति । वचति । वच्यात् । यजादिविषये रिग्यश्च यौजादिकस्या ग्रहणाच्च ब्रूत् । अर्चिण् पूजायाम् ॥१३॥ अर्चयति । अर्चते । वृजैण् वर्जने ॥ १४ ॥ मृजौण् शौचालङ्कारयो' ॥ १५ ॥ मृजोऽस्येति वृद्धि' । मार्जयति । मार्जति । औदित्वाद्वट् । कठुण् शोके ॥ १६ ॥ कण्ठयति । उत्कण्ठति । श्रन्थ ग्रन्थण् सन्दर्भे ॥ १७ ॥ क्रथ श्वर्दिण् हिंसायाम् ॥ १८ ॥ घोरस्योत्क्राथयति । क्रथति । णिगि घटादित्वान्नस्त्ये घोरमुत्क्रथयति । अर्दयति । अर्दते । वदिण् भाषणे ॥ १९ ॥ सन्देशन इत्यन्ये । वादयति । संवदते । अवदे । अवदिपीष्ट । छदण् अपवारणे ॥ २० ॥ छादयति । छदति । ऊर्जने घटादित्वान्ह्रस्वे छदयति । आङः सदण् गतौ ॥ २१ ॥ आसादयति । आसीदति । आसदतीत्येके । आसादीत् । आसदीत् । अनुस्वारेत्वमेकेपिसम्ये । आसात्सीत् । छृदण् सन्दीपने ॥ २२ ॥ छर्दयति । छर्दति । कृतचृते च्छृद तृदू सार्वधातुकादेरेव ग्रहणेन इडिकल्पाभावः । छर्दिष्यति । ऐदित्वमित्येके । शुषिण् शुद्धौ ॥ २३ ॥ शुन्धयति । शुन्धत । अनिदित्वमित्येके । तमूण अवभाते ॥२४॥ अद्धोपकरणयोरित्यन्ये । तामयति । तनति । उपसर्गादैर्घ्ये । आतानयतीत्यादि । मानण् पूजायाम् ॥ २५ ॥ मानयति । मानति । मननित्येके । तपिण् दाहे ॥ २६ ॥ तापयति । तपते । तृपण् प्रीणने ॥ २७ ॥ सन्दीपन इत्येके । आप्लृण् लम्भने ॥ २८ ॥ लम्भनं प्राप्तिः । आपयति । आपिपत् । आपति । आपत् । तर्भैण् भये ॥ २९ ॥ तर्भयति । तर्भति । ईरण् क्षेपे ॥ ३० ॥ गतावित्येके । ईरयति । ईरति । मृषिण् तितिक्षायाम् ॥३१॥ मर्षयति । मर्षते । शिषण् असर्वोपयोगे ॥ ३२ ॥ असर्वोपयोगोऽनुपयुक्तत्वम् । शेषयति । शेषति । विपूर्वोऽतिशये । विशेषयति । विशेषति । व्यशेषीत् । जुषण् परितर्कणे ॥ ३३ ॥ परितर्पण इत्येके । जोषयति । जोषति । धृषण् प्रसहने ॥३४॥ प्रसहनमभिभवः । धर्षयति । अदीधृषत् । अदधर्षत् । अधर्षीत् । आदित्वमित्येके । हिंसुण् हिंसा

याम् ॥ ३० ॥ हिंसयति । हिंसति । हिंस्यात् । गर्हेण् विनिन्दने ॥ ३९ ॥ षहण् मर्षणे ॥ ६७ ॥ साहयति । सहति । असीषहत् । असहीत् । बहुलमेतन्निदर्शनम् । यदेतच्चुरादिधातुपरिगणनं तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम् । तेनात्रापठिता अपि क्लीबयत्युतयो लौकिकाः स्तम्भूप्रभृतयः सौधात्सलुम्पादयश्च बाहयकरणीया धातवः उदाहार्याः । तथा भ्वादिगणपठिता अपि स्वार्थणिजन्ता बहुलं भवन्ति । रामो राज्यमकारयत् । अकरोदित्यर्थः । इति चुरादयः ॥

अथ णिजन्तप्रकरणम् ।

## भूङः प्राप्तौ णिङ् ॥३।४।१९॥

भुवो धातोः प्राप्त्यर्थे वर्तमानात् णिङ् वा स्यात् । भावयते । भवते । प्राप्नोतीत्यर्थः । अन्यत्र भवतीत्येव । भूङ् इति ङकारनिर्देशो णिङभावेऽप्यात्मनेपदार्थः । प्राप्त्यर्थाभावेऽपि कश्चिदात्मनेपदमिच्छति । यथा, दातारश्च नः सन्तु दातारश्च भवामहे । आक्रोष्टारश्च नः सन्तु क्षन्तारश्च भवामहे ॥ १ ॥ प्राप्त्यर्थेऽपि परस्मैपदमिच्छन्ये । सर्वं भवति । प्राप्नोतीत्यर्थः ।

## णिज्बहुलं नाम्नः कृगादिषु ॥३।४।४२॥

कृगादीनां धातूनामर्थे नाम्नो णिच्प्रत्ययः स्यात् बहुलम् । बहुलग्रहणाच्च यस्मान्नाम्नो यद्विप्रत्ययान्तादयस्मिन् धात्वर्थे दृश्यते, तस्मात्तस्मात्तद्विप्रत्ययान्ताद्धात्वर्थे भवतीति नियमो लभ्यते । पटुमाचष्टे पटयति । परत्वाद्वृद्धौ सत्यां त्र्यन्त्यस्वरादेरित्यन्त्यस्वरादिलोपः । अपीपटत् । भाष्ये तृ इदेर्लोपो वलीयानिति अपपटत् । करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः । अश्वेनाक्रामति । अश्वयति । हस्तयति । असिना हन्ति असयति । चित्रं करोति चित्रयति ।

## अङ्गान्निरसने णिङ् ॥३।४।३८॥

अङ्गवाचिनः शब्दात्कर्मणो निरसनेऽर्थे णिङ् प्रत्ययो वा स्यात् । हस्तौ निरस्यति हस्तयते ।

## श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् ॥३।४।४५॥

एषां यथासंख्यं णौ परे अश्वतरेतकानामेषामवयवानां लुक् स्यात् । श्वेताश्वेनातिक्रामति वा श्वेतयति । अश्वतरेणातिक्राम्यति अश्वयति । गालोडितं वाग्विमर्शस्तत्करोति आचष्टे वा गालोडयति । आह्वरकं कुटिलतरमाचष्टे आह्वरयति ।

## पुच्छादुत्परिव्यसने ॥३।४।३९॥

पुच्छशब्दात्कर्मण उदसने पर्यसने व्यसनेऽसने चार्थे णिङ् प्रत्ययो वा भवति। उत्पुच्छयते। परिपुच्छयते। विपुच्छयते। पुच्छयते। इति चुरादयो धातवः ॥

अथ णिगन्तप्रकरणम्।

## प्रयोक्तृव्यापारे णिग् ॥३।४।२०॥

कुर्वन्तं प्रयुङ्क्ते तद्व्यापारे वाच्ये धातोर्णिग्वा स्यात्। गकारस्तूभयपदार्थः। भवन्तं प्रयुङ्क्ते। नामिनोऽकलिहलेरिति वृद्धौ भावयति। भवन्तं प्रायुङ्क्त इति वाक्ये भावि भू इति स्थिते जाते णिश्रिद्रुस्रुकम' कर्तरि ङ इति ङे। उपान्त्यस्यासमानलोपीति ह्रस्वे ततो णेर्लुकि असमानलोप इत्यादिना सन्वद्भावे ॥

## ओर्जान्तस्थापवर्गेऽवर्णे ॥४।१।६०॥

धातोर्द्वित्वे सति पूर्वस्योकारान्तस्य अवर्णान्ते जान्तस्थापवर्गे परत' सनि परे इकारोऽन्तादेशः स्यात्। लघोर्दीर्घोऽस्वरादेरिति दीर्घे। अबीभवत्।

## श्रुस्तुद्रुप्रुप्लुच्यो वा ॥४।१।६१॥

एषां सनि द्वित्वे सति पूर्वस्योकारस्यान्तस्थायामवर्णान्तायां परत इकारोऽन्तादेशो वा स्यात्। अशिश्रवत्। अशुश्रवत्। सन्यस्य॥ शुश्रावयिष्यति। शिश्रावयिष्यति।

## आमन्ताल्वाय्येत्नावय् ॥४।३।८५॥

आम् अन्त आलु आय्य इत्नु एषु परेषु णेरय स्यात्। भावयामास। भाव्यात्। भावयिता। भावयते। अबीभवत्। पाचयते। अपीपचत्। कारयति। अचीकरत्। कारयते। अचीकरत। रावयति। अरीरवत्। लावयति। अलीलवत्। पाचयति। अपीपचत्। दासयति। अददासत्। ढौकृङ् गतौ। ढौकयति। अडुढौकत्। अचचकासत्। मतान्तरे। अचीचकासत्। क्वचिद्वर्जनाद् ह्रस्वनिषेधः। राजयति। अरराजत्। स्मरन्त प्रयुङ्क्ते। घटादित्वाद्ध्रस्वत्वे। स्मरयति। स्मरस्मरति च। अससमरत्। भ्राजभासेति वा ह्रस्वत्वे पूर्वस्य सन्वद्भावेनेत्वम्। अबिभ्रजत्। अबभ्राजत्। अबिभ्रसत्। अबभ्रासत्। अदीदिपत्। अदिदीपत्। अपीपृतत्। ऋवर्णस्येति वात्वम्। पक्षे गुण'। अववर्तत्। स्वापयति। स्वपेर्यङ् ङे चेति॥ स्वपत्। ततो द्वित्वे। असूषुपत्।

## अर्तिरीव्लीह्रीक्नूयिक्ष्माय्याता पुः ॥४।२।२१॥

एषामाकारान्तानां च णौ परे पुरन्त' स्यात्। अर्तीति प्रापणार्थस्य गत्यर्थस्य च ग्रहणम्। तिवनिर्देशो यङ्लुपि निवृत्त्यर्थः। अर्पयति। स्वरादेर्द्वितीय

इति ह्रिस्खे। आर्पिपत्। रीति रीयतिरिणात्यो ग्रहणम्। रेपयति। व्लेपयति। ह्रेपयति। क्नोपयति। क्ष्मायैङ् विधूनने। क्ष्मापयति। अत्र।

## य्वोः प्वय्व्यञ्जने लुक्॥४।४।१२१॥

पौ यवर्जव्यञ्जनादौ च प्रत्यये परे य्वोर्लुक् स्यात्। पुग्रहणमप्रत्ययार्थम्।

## णौ क्रीजीङः ॥४।२।१०॥

एषां प्रयाणा णौ परे आत्स्यात्। क्रापयति। जापयति। अध्यापयति।

## णौ सन्ङे वा ॥४।४।२७॥

सन्परे ङपरे च णौ इङो गा वा स्यात्। अध्यजीगपत्। अध्यापिपत्।

## चिस्फुरो नंवा ॥४।२।१२॥

चिनोतेः स्फुरतेश्च णौ परे स्वरस्यात्वा स्यात्। चापयति। चाययति। स्फारयति। स्फोरयति।

## वियः प्रजने ॥४।२।१३॥

गर्भाधाने णावात्स्यात्। पुरोवातो गाः प्रवापयति। गर्भवतीः करोतीत्यर्थः।

## जिघ्रतेरिः ॥४।२।३८॥

अस्य ङपरे णौ वा इः स्यात्। अजिघ्रिपत्। अजिघ्रपत्।

## तिष्ठतेः ॥४।२।३९॥

तिष्ठतेरुपान्त्यस्य ङपरे णाविकारो भवति। अतिष्ठिपत्।

## सिध्यतेरज्ञाने ॥४।२।११॥

अज्ञानार्थस्य सिध्यतेः णौ स्वरस्यात्स्यात्। अन्नं साधयति। ज्ञाने तु सिध्यन्ति तस्य निश्चिन्वन्ति प्रयुङ्क्ते सेधयति तपः साधु।

## णावज्ञाने गमुः ॥४।४।२४॥

अज्ञानार्थयो रिणिको गमुः स्यात् णौ। गमयति। अधिगमयति। ज्ञाने तु प्रत्याययति।

## रुहः पः ॥४।२।१४॥

रुहे णौ पो वा स्यात्। रोपयति। रोहयति वा तरुम्।

## लियो नोऽन्तः स्नेहद्रवे ॥४।२।१५॥

ली इति लीङ्लीनोः सामान्येन ग्रहणम्। लियः स्नेहस्य द्रवेऽर्थे णौ नोऽन्तः

स्याद्वा। घृतं विलीनयति। विलापयति वा। लिय इतीकारस्य प्रश्लेषादीकारान्तस्यैवायं विधिः। कृतात्वस्य तु वक्ष्यमाणौ लकारपकारौ स्तः।

## लोलः ॥४।२।१६॥

लातेर्लीय इति कृतात्वस्य च स्नेहद्रवेऽर्थे णौ परे लोऽन्तो वा स्यात्। घृतं विलालयति। विलापयति वा। स्नेहद्रव इति किम्? लोहं विलापयति। लोऽन्ते ऽद्यतन्यां व्यलीलिलत् इत्यत्रोपान्त्यह्रस्वः।

## पातेः ॥४।२।१७॥

णौ लोऽन्तः स्यात्। पालयति।

## वो विधूनने जः ॥४।२।१९॥

वा इत्यस्य विधूननेऽर्थे जोऽन्तः स्यात्। पक्षिकेणोपवाजयति। अवीवजत्।

## पाशाच्छासावेव्याह्वो यः ॥४।२।२०॥

एषां ससानां णौ योऽन्तः स्यात्। पां पाने। पैं शोषणे वा। पाययति।

## ङे पिबः पीप्य् ॥४।१।३३॥

णयन्तस्य पिबते ङे परे पीप्य् स्यात् न च द्विः। अपीप्यत्। शोंच्, शाययति। छोंच्, छाययति। सों सैं वा, साययति। वेंग् वाययति। अनात्वनिर्देशाद्वा गतिगन्धनयोः, ओवैं शोषणे अनयोर्न। व्येंग्, व्याययति। ह्वेंग् ह्वाययति। अवीवयत्। अशीशयत् इत्यादि। कृतात्वानां ग्रहणादिह प्रकरणे लाक्षणिकस्यापि ग्रहणम्। तेन ज्ञापयतीत्यादि सिद्धम्।

## णौ ङसनि ॥४।१।८८॥

ह्वेंगः सस्वरान्तस्था ङपरे सन्परे च णौ विषये य्वृत्स्यात्। प्राक्समासे आदिमा वोपान्त्यह्रस्वे अजूहवत्। अजुहावत्।

## श्वेर्वा ॥४।१।८९॥

य्वृत्प्राग्वत् सन्परे ङपरे च णौ विषये। अशूशवत्। अशिश्वयत्।

## स्फाय् स्फाव् ॥४।२।२२॥

णौ। स्फावयति। अमेवनिर्देशोऽन्ताधिकारनिवृत्त्यर्थः।

## शदेरगतौ शात् ॥४।२।२३॥

शीयतेरगत्यर्थे शात्स्यात् णौ। पुष्पाणि शातयति। गतौ तु गां शादयति।

## ञ्णिति घात् ॥४।३।१००॥

हन्तेर्ञिति णिति च घात् स्यात् । घातयति ।

## ऊद् दुषो णौ ॥४।२।४०॥

दुषेरुपान्त्यस्य णावूत् स्यात् । दूषयति ।

## चित्ते वा ॥४।२।४१॥

चित्तकर्तृकस्य दुषेस्तथा स्यात् । चित्तं दोषयति दूषयति वा मैत्र । गोहः स्वरे इत्यूत्वे । गूहयति । अजूगुहत् ।

## णौ मृगरमणे ॥४।२।५१॥

रञ्जेर्नलुक् स्यात् । रजयति मृगान् ।

## ज्वलह्वलह्मलग्लास्नावनूवमनमोऽनुपसर्गस्य वा ॥४।२।३२॥

एषामष्टानामनुपसर्गाणां णौ ह्रस्वो वा स्यात् । ज्वलयति । ज्वालयति । अनुपसर्गस्येति किम्? प्रज्वलयति । प्रग्लापयति । प्रस्नापयति ।

## कगेवनूजनैजॄष्क्नसरञ्जः ॥४।२।२५॥

एषां षण्णां णौ ह्रस्वः स्यात्, ञिणम्परे तु णौ वा दीर्घः । जनयतीत्यादि ।

## पर्यपात् स्खदः ॥४।२।२७॥

पर्यपाभ्यामेव परस्य स्खदेर्णौ परे ह्रस्वो भवति, ञिणम्परे तु वा दीर्घः । परिस्खदयति । अपस्खदयति । अवादप्यन्ये । अवस्खदयति । घटादित्वात् सिद्धे नियमार्थं वचनम् । अन्योपसर्गपूर्वस्य मा भूदिति । प्रस्खादयति । अन्ये तु पर्यपपूर्वस्य स्खदेर्ह्रस्वनिषेधमिच्छन्ति ।

## शमोऽदर्शने ॥४।२।२८॥

अदर्शनेऽर्थे वर्तमानस्य शमेर्णौ परे ह्रस्वो भवति ञिणम्परे तु णौ वा दीर्घः । शमयति रोगम् । निशमयति श्लोकान् । दर्शने तु निशामयति रूपम् । केचिद्दर्शने एव ह्रस्वमिच्छन्ति ।

## यमोऽपरिवेषणे णिचि च ॥४।२।२९॥

अपरिवेषणे वर्तमानस्य यमेर्ञिन्यणिचि च णौ परे ह्रस्वो भवति, ञिणम्परे तु णौ वा दीर्घः । यमयति । परिवेषणे तु यामयत्यतिथीन् । यामयति चन्द्रमसम् । परिवेषणे ह्रस्व इत्यन्ये ।

## चहणः शाठ्ये ॥४।२।३१॥

चहेश्चौरादिकस्य शाठ्येऽर्थे वर्तमानस्य णिचि णौ परे ह्रस्वो भवति, जिण्परे तु वा दीर्घः। चहयति। णिस्करणाच्चौरादिकस्य न भवति। चाहयति। अदन्तत्वात्सिद्धे दीर्घार्थं वचनम्। चाहिष्यते। चहिष्यते। साहयतीत्यादि। न्यसीषहत्। अत्र असोङसिवूसहस्सटामिति सोषिपयस्य तथा कषिपयस्य च वर्जनात् उपसर्गस्थनिमित्ताभावे सस्य षत्वं न। एव पर्यसीषिवत्। आटिटत्, आशिशात् इत्यादौ। भिन्नमपि द्विर्वचनं धातोरुपान्त्यह्रस्वो द्वित्वात्प्रागेव। ओणे ऋदित्करणाद्द्विर्भावान्मा भवानिति विपर्ययादौ न वृद्धिः। मा भवान् प्रेषिषत्।

## न वदनं सयोगादिः ॥४।१।५॥

स्वरादेर्धातो द्वितीयस्यावयवस्यैकस्वरस्य नकारदकाररकारा संयोगादयो न द्विः स्युः। औन्दिदत्। अत्र नकारो न द्विः। आड्डिडत्। अत्र अड्डधातोर्डकारो न द्विः। आर्चिचत्। अत्र रेफो न द्विः। औब्जिजत्। अत्र बकारो न द्विः।

## रभोऽपरोक्षाशवि ॥४।४।१०२॥

रभेः स्वरात्परो नोऽन्तः स्यात् परोक्षाशव्वर्जे स्वरे परे। आररम्भत्।

## लभः ॥४।४।१०३॥

अस्यापि प्राग्वत्। अललम्भत्। अससरत्। अववरत्। अत्र न लघोर्दीर्घः परस्मात् स्वरवर्णस्येति। अचीकृतत्। अचचर्तत्। अमीमृजत्। अममार्जत्। ऋदित्वेऽप्यस्मेऽप्यमिते परेस्तु वा ॥२।३।८१॥ प्राणिणत्।

## यिः सन्वेर्ष्यः ॥४।१।११॥

ईर्ष्यतेर्द्वित्वभाजो यिः सन् वा द्विः स्यात्। ईर्ष्ययति। सनि। ईर्ष्यियिषति। ईर्ष्यिषिषति। अत्र सन्यप्रोतीत्यम्। णिजन्तात्क्वचित्प्रत्यये यकार एव द्विः। भूयते। ऐर्ष्यिय्यत्। इति ण्यन्तप्रक्रिया॥

अथ सन्नन्तप्रक्रिया।

## तुमर्हादिच्छायां सन्नतत्सनः ॥३।४।२१॥

यो धातुरिषेः कर्म इषिणैव च समानकर्तृकः स तुमर्हः, तस्मादिच्छायामर्थे सन् वा स्यात्। नत्विच्छासन्नन्तात्। पठितुमिच्छति इति वाक्ये प्रत्यये इडागमे च सति।

## सन्यङश्च ॥४।१।३॥

ससन्तस्य यङन्तस्य चाद्यस्वरांशो द्विः स्यात् । सन्यस्येत्यनेन पूर्वस्येकारे नाम्यन्तस्येति पत्वे । पिपठिषति । अपिपठिषीत् । पिपठिषाञ्चकार । पिपठिष्यात् । पिपठिषिता । पिपठिषिष्यति । स्वरादेर्द्वितीयः ॥ अटितुमिच्छति अटिटिषति । घस्त्सनवचसनीघस्तपश्चसि ॥ अत्तुमिच्छति जिघत्सति । अजिघत्सीत् । ईर्ष्यते र्यिसनो द्विस्वे ॥ ईर्ष्यियिषति । ईर्ष्यिषिषति ।

## ग्रहगुहश्च सनः ॥४।४।५९॥

आभ्यामुवर्णान्ताच विहितस्य सन आदिरिण् न स्यात्।

## रुदविदमुषग्रहस्वपप्रच्छः सन् च ॥४।३।३२॥

एभ्यः क्त्वा सन् च किद्वत्स्यात्। किस्वात् ग्रहव्रश्चेति य्वृति हो धुट् पदान्ते इति हस्य ढत्वे, गडदबादेरिति घत्वे जिघृक्षति । मुमूषति । रुरुदिषति । विविदिषति । मुमुषिषति । सुषुप्सति । स्वापयितुमिच्छति ।

## स्वपो णावुः ॥४।१।६२॥

स्वपे णौ सति द्विस्वे पूर्वस्य उः स्यात्। सुष्वापयिष्यति ।

## नामिनोऽनिट् ॥४।३।३३॥

नाम्यन्ताद्धातोरनिट् सन् किद्वत्स्यात्।

## स्वरहन्गमोः सनि धुटि ॥४।१।१०४॥

स्वरान्तस्य हन्गमोश्च धुडादौ सनि दीर्घः स्यात्। चिचीषति । चेकिर्वा ॥ चिकीषति । कृगः सनि दीर्घे ईर् । चिकीर्षति । हन्तुमिच्छति, सनि, दीर्घे, द्विस्वे, अङे हिहनोरिति घत्वे । जिघांसति ।

## सनीङश्च ॥४।४।२५॥

इणिको रिङश्चाज्ञानार्थे सनि परे गमु स्यात्। अज्ञान इति विशेषणमिण एव नान्ययोरसम्भवात्।

## प्राग्वत् ॥३।३।७४॥

सनः पूर्वो यो धातुस्तस्मादिव सनन्तात्कर्तर्यात्मनेपदं स्यात्। इङ् । अधिजिगांसते विद्याम् । इण् । जिगमिषति ग्रामम् । इक् मातुरधिजिगमिषति ।

ज्ञाने तु । प्रतीपिपयति । णौ सन्-ङे येति वा इङो गादेशो । अधिजिगापयिषति । अध्यापिपयिषति ।

## वौ व्यञ्जनादेः सन्चाय्वः ॥४।३।२५॥

वकार इकारे चोपान्त्ये सति व्यञ्जनादेर्धातोः परौ क्त्वा सन् च सेटौ किद्वा स्याताम् । न तु यकारान्ताद्वकारान्ताच्च । दिद्युतिषते । दिद्योतिषते । लिलिखिषति । लिलेखिषति । उपान्त्ये । चिमिस्सति । स्तोतुमिच्छति तुष्टूषति । स्मृसनो रित्यात्मनेपदविकल्पे, न वृद्भ्य इति परस्मैपदे इण्निषेधे च । विवृत्सति । विवर्तिषते । कृतचृतनृते सीड्विकल्पे । निनृत्सति । निनर्तिषति ।

## इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनितनिपतिवृ-दरिद्रः सनः ॥४।४।४७॥

इवन्तादृध्यादिभ्यश्च स्वरान्तेभ्यो दरिद्रातेश्च सन आदिरिड्वा स्यात् । अनुनासिके च छ्वः शूट् । दुद्यूषति । दिदेविषति ।

## ऋध ईर्त् ॥४।१।१७॥

ऋधः सादौ सनि ईर्त् स्यात् न च द्विः । ईर्त्सति । अर्दिधिषति ।

## भृज्जो भर्ज् ॥४।४।६॥

बिभर्क्षति । बिभ्रज्जिषति ।

## दम्भो धिप् धीप् ॥४।१।१८॥

दम्भेः सि सनि धिप् धीपौ स्यातां न च द्विः । धिप्सति । धीप्सति । दिदम्भिषति । शिश्रीषति । शिश्रयिषति । यु । युयूषति । ओर्जान्तस्थापवर्गे-ऽवर्णे इत्यनेन इकारः । यियविषति । प्रोर्णुनूषति । प्रोर्णुनविषति । प्रोर्णुनुविषति । भृग् स्वरहनेति दीर्घे ओष्ठ्यादुर् । बुभूर्षति । बिभरिषति ।

## ज्ञप्यापो ज्ञीपीप् न च द्विः सि सनि ॥४।१।१६॥

ज्ञपेरापेश्च सि सनि यथासङ्ख्यं ज्ञीपीपौ स्याताम् । ज्ञीप्सति । जिज्ञपयिषति । अघटादेर्जिज्ञापयिषति ।

## सनि ॥४।२।६१॥

सनादीनां घुटादौ सनि आः स्यात् । सिषासति । सिसनिषति ।

## तनो वा ॥४।१।१०५॥

तनेर्पुडादौ सनि दीर्घो वा स्यात्। तितांसति। तितसति। तितनिषति।

## रभलभशकपतपदामिः ॥४।१।२१॥

एषां स्वरस्य सि सनि इ' स्यान्न च द्विः। पिस्सति। पिपतिषति। प्रापुषु पंति। प्राधिवरिपति। पुपूर्पति। विवरिषति। विवरीषति। तितीर्षति। तितरिषति। विवरिप्रासति। विवरिप्रिषति।

## ऋस्मिपूङ्ञ्जशौकृगृदृधृप्रच्छः ॥४।४।४८॥

एभ्यो दृशाम्य' परस्य सन आदिरिट् स्यात्। अरिरिषति। स्मि। सिस्मयिषते। पिपविषते। अञ्जिजिषति। अशिशिषते। चिकरिषति। चिकरीषति। जिगरिषति। जिगरीषति। आदिदरिषते। आदिधरिषते। दधिधीर्षुरिति तु भौवादिकस्य। रुदविदे (४।३।३२) ति सनः कित्वे। पिपृच्छिषति। आप्तुमिच्छति ईप्सति। आरिप्सते। लिप्सते। स्यातुमिच्छति। तिष्ठासति।

## मिमीमादामित्स्वरस्य ॥४।१।२०॥

एषां त्रयाणां दासंज्ञकानां च सि सनि इत्स्यान्न च द्विः। मीग्। मीग (४।२।८) इत्यात्वे। मित्सति। मित्सते। दित्सति। दित्सते। धित्सति। धित्सते।

## अव्याप्यस्य मुचेर्मोग्वा ॥४।१।१९॥

न च द्विः। मोक्षति। सकर्मणस्तु। मुमुक्षति वत्सम्। लुनन्तं प्रयुङ्क्ते लाययति। लाययितुमिच्छति। ओर्जा न्तस्थापवर्गेऽवर्णे (४।१।६०) इतीति। लिलावयिषति। पिपावयिषति। श्रुस्रुद्रु (४।१।६१) इत्यादिना विकल्पेनेकारे शिश्राययिषति। शुश्रावयिषति। गुपिजोर्गर्हाक्षान्तौ ॥ ॥ जुगुप्सति। तितिक्षते। कित' सहापप्रतिकारे ॥ चिकित्सति। दान्मान् वधात्शिशानार्जवविचार वैरूप्ये दीर्घश्चेत' ॥ दीदांसति २। दीदांसति। मीमांसति। बीभत्सते। दीदृप्यू परितापे। दातुमिच्छति। दिदासते। दित्रीषते।

## दीङः सनि ॥४।२।६॥

परे आत्व वा स्यात्। तृहौत् हिंसायाम्। तितृक्षति हैमम्। अतितितर्हिषति। जि जये। जेर्गिः सन्परोक्षयो' ॥ ॥ जिगीषति। पिपूषू तन्तुसन्ताने। सिस्यूषति। सिसेविषति। दृढ़ पालने। दिदृक्षत। दृढ़। दिदृक्षति। दार्क्षीप् मपण। दिक्षते २।

## राधेर्वधे ॥४।१।२२॥

सकारादौ सनि परे स्वरस्येकारः स्यात् न द्विः । प्रतिरित्सति । अपरित्सति । अनक् प्राणने । प्राणिणिषति । अच्छे पञ्चाम्यां सहितस्येटो द्वित्वम् । अचिच्छिषति । मिमित्तापाये नैमित्तिकस्याप्यपाय इति स्वनित्यम् ।

## श्वेर्वा ॥४।१।८९॥

अपरे । अशूशवत् । अशिश्वयत् । शुशावयिषति । विशेषविज्ञानाद्वस्त्वन्तरमपि पृथक्त्वादि मूता भाव्यते । तस्मिन् कृते वृद्धिरावादेशः । उपान्त्यह्रस्वः । ततो णौ कृतस्य स्थानिवत्वात् चोर्द्वित्वम् । तत पूर्ववत् इति क्रम । द्वित्वे ह्रः ॥ शुह्नूषति । णौ । शुशावयिषति ।

## उपसर्गात्सुग्सुवसोस्तुस्तुमोऽट्यप्यद्वित्वे ॥२।३।३९॥

ण्यन्तानामुपसर्गसम्बन्धे सति न भवति । अभिसावयति । अभ्यषि । अभ्यषुणोत् । सुष्वापयिषति । सिषेवयिषति । इत्यत्र ।

## णिस्तोरेवाऽस्वदस्विदसहः षणि ॥२।३।३७॥

स्वदस्विदसहवर्जं ण्यन्तानां स्तौतेरेव च सम्बन्धिन सस्य षत्वं स्यात्, नान्यस्य नामिवर्णात्परस्य सति षणि षत्वमूते सनि परे नान्येषाम् । सिषेवयिषति । णिस्तोरेव षणि नान्यस्य । तेनेह न । सुसूषति । एवकार षण्येव णिस्तोरिति विपरीतनियमनिवृत्त्यर्थम् । तेन असीषिचत् तुष्टाव इह स्यात् । षणीति किम् ? सिषेच । पत्वं किम् ? तिष्ठासति । सुषुप्सति । षेधः ॥ ष्णो धातो प्रतीषिषति । अषिषिषति । अत्र षणि निमित्तभूते धातोः सस्य षत्वनियम उक्तः । इति सनो द्विरुक्तत्वात् सस्य धातो सम्बन्धित्वाभावान्नियमो न प्राप्नोति । स्वदस्विदसहां वर्जनात् । सिस्वादयिषति । सिस्वेदयिषति । सिसाहयिषति । उपसर्गादि (२।३।३९) स्वादिह्नृपेऽद्वित्व इत्युक्ते इह न षत्वम् । अभिसुषूषति । स्वार्थे समन्तात् सनि जुगुप्सिषते । इति सनन्ताः ॥

---

अथ यङन्तप्रक्रिया

## व्यञ्जनादेरेकस्वराद्भृशाभीक्ष्ण्ये यङ् वा ॥३।४।९॥

गौणक्रियाणामभिमयणादीनां क्रियान्तराव्यवधाने साकल्येन सम्पत्ति क्रियातिरेको वा भृशत्वम् । मुख्यक्रियायाः पाकादि क्रियान्तराव्यवधानेनावृत्तिराभीक्ष्ण्यम् । तद्विशिष्टार्थवृत्तेर्व्यञ्जनादेरेकस्वराद्धातोर्यङ् वा स्यात् । ङकार आत्मनेपदार्थ । सन्यङश्चे (४।१।३) ति द्वित्वे ।

## आगुणावन्यादेः ॥४।१।४८॥

यङन्तस्य द्वित्वे पूर्वस्य न्यागमवर्जस्य आगुणौ स्याताम्। भृशं पुनः पुनः पचतीति वा पापच्यते।

## योऽशिति ॥४।३।८०॥

धातोर्व्यञ्जनात्परस्य योऽशिति लुक् स्यात्। अपापचिष्ट। पापचाञ्चक्रे। पापचिषीष्ट। पापचिता। पापचिष्यते।

## अट्यर्तिसूत्रिमूत्रिसूच्यशूर्णोः ॥३।४।१०॥

एभ्यः सप्तभ्यो भृशाभीक्ष्ण्ये च यङ् वा स्यात्। स्वरादेर्द्वितीयः (४।१।४) इति ट्यस्य द्वित्वे। व्यञ्जनस्यानादेर्लुकि (४।१।४४) इति पूर्वरूपस्य यकारलोपे आत्वे च। अटाट्यते। ययपरावीर्येचे (४।३।१०)ति गुणे। असिर इति वर्जनात् ये परे रेफस्य द्वित्वं स्यादेव। अरार्यते। सोसूत्र्यते। मोमूत्र्यते। सोसूच्यते। अशाश्यते। दीर्घश्च्वि (४।३।१०८) इति दीर्घे। तोमूयते।

## गत्यर्थात्कुटिले ॥३।४।११॥

व्यञ्जनादेरेकस्वराद्गत्यर्थात्कुटिल एवार्थे धातोर्यङ् स्यात्।

## मुरतोऽनुनासिकस्य ॥४।१।५१॥

अकारात्परो योऽनुनासिकस्तदन्तस्य यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्। चंक्रम्यते २। तौ मुमो (१।३।१४) इत्यनुस्वारः।

## गृलुपसदचरजपजभदशदहो गर्ह्ये ॥३।४।१२॥

गर्ह्यर्थेभ्य एभ्योऽष्टाभ्यो यङ् स्यात्। कर्ता टिप्पणीड्।

## ग्रो यङि ॥२।३।१०१॥

रेफस्य लः स्यात्। जेगिल्यते। लोलुप्यते। सासद्यते।

## चरफलाम् ॥४।१।५३॥

एषां यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्।

## तिचोपान्त्यातोऽनोदः ॥४।१।५४॥

चरफलां यङि तादौ च प्रत्यये उपान्त्यस्यात उः स्यात्। अघातोर्न, गुणो न भवतीत्यर्थः। चञ्चूर्यते २। पम्फुल्यते २।

## जपजभदहदशभञ्जपशः ॥४।१।५२॥

एषां यण्णां यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्। जञ्जप्यते २। जंजभ्यते २। दंदह्यते २। दंदश्यते २।

## न गृणाशुभरुचः ॥३।४।१३॥

एभ्यस्त्रिभ्यो यङ् न स्यात्। भृशं गृणाति। भृशं शोभते। भृशं रोचते।

## ईर्व्यञ्जनेऽयपि ॥४।३।९८॥

गापास्थासादामाहाकां यङ्यें क्ङिति क्ङिति अयपीति व्यञ्जनादावी स्यात्। जेगीयते। पेपीयते।

## घ्राध्मोर्यङि ॥४।३।९५॥

ई स्यात्। जेघ्रीयते। देध्मीयते।

## हनो घ्नीर्वधे ॥४।३।९९॥

जेघ्नीयते। वध इति किम्? जङ्घन्यते।

## क्ङिति यि शय् ॥४।३।१०५॥

शीङः क्ङिति क्ङिति च यादौ शय् स्यात्। शाशय्यते।

## ऋतोरीः ॥४।३।१०९॥

च्वि यङ्यक्येषु परेषु ऋदन्तस्य ऋतोरीः स्यात्। चेक्रीयते।

## ऋमता री. ॥४।१।५५॥

ऋमतां यङन्तानां द्वित्वे पूर्वस्य रीरन्तः स्यात्।

## नृतेर्यङि ॥२।३।१५५॥

नकारस्य णत्वं न स्यात्। नरीनृत्यते। परीपृच्छ्यते। यपपराशीर्ये (१४।३।१०) इति गुणे ततो द्वित्वे। मास्मर्यते। या परोक्षायङि ॥ शोशूयते। शोश्वीयते। यङो लुपि शोशवीति। शोश्वयीति। प्यायः पी ॥ पेपीयते। लुपि। आपेपेति।

## वञ्चस्रंसध्वंसभ्रंशकशपदस्कन्दोऽन्तो नी. ॥४।१।५०॥

एषामष्टानां यङि द्वित्वे पूर्वस्य नीरन्तः स्यात्। मोऽन्यञ्जनस्ये (१४।१४।) ति न लुकि। वनीवच्यते। सनीस्रस्यते। इत्यादि। पोमूयते। अपोमूपिष्ट। पोमूयामके।

## बहुलं लुप् ॥३।४।१४॥

यङो लुप् बहुलं स्यात् । चर्करीतमित्युक्तिरित्यादि । यङ्लुबन्तं परस्मैपदमेवा-विषय । यङ्लुकस्तोरि (।४।१।६४।) ति वा ईडागमे । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभूयात् । बोभोतु । बोभवीतु । बोभूहि । अबोभवीत् । अबोभोत् । अबोभवुः । पिबतिदेति (।४।१।६६।) सिज्लुपि अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभूवन् । इति केचित् । बोभूवाञ्चकार । बोभूयात् । बोभूयास्ताम् । बोभविता । बोभविष्यति । अबोभविष्यत् । जगमीति । जंगन्ति । यमिरमिनमिगमि (।४।२।५७।) इति मस्य लुकि । जगतः । जग्मति । मोनो म्वोश्च ॥ जगन्मि । जंगन्वः । जंगन्मः । एकाक्षरग्रहणोक्तत्वात्सेण्निषेधः । अजगमीत् । जंगमिता । चक्नीति । चक्नन्ति ।

## आः खनिसनिजनः ॥४।२।६०॥

झलादौ क्ङिति । चंखाति चखाति ।

## न वृद्धिश्चाविति क्ङिल्लोपे ॥४।२।११॥

अविति प्रत्यये या क्ङितो क्ङितश्च लोपस्तस्मिन् सति गुणो वृद्धिश्च न स्यात् । मरीमृजन्ति ।

## रिरौ च लुपि ॥४।१।५६॥

ऋमतां यङो लुपि द्वित्वे पूर्वस्य रिररीश्चैते अपोऽन्ताः स्युः । चरिकरीति । चर्करीति । चरीकरीति । चरिकर्ति । चर्कर्ति । चरीकर्ति । चरिकृतः । चर्कृतः । चरीकृतः । चरिभ्रति । चर्भ्रति । चरीभ्रति । अचरिकारीत् १ । चरिकरामास १ । चरिक्रियात् १ । चरिकरिता १ । चरिकरिष्यति १ । वरिवृतीति १ । वरिवर्ति १ । अवरिवृतीत् १ । अवरिवर्त् १ । गणनिर्दिष्टत्वादङ् न स्यात् । अवर्वर्तीत् । एव नरीनृतीति १ । जरिगृधीति १ । जरिगर्द्धि । जरिगृद्धि १ । अजर्धत् १ । अजरिगृधाम् । हस्वे लुकि दीर्घो च । अजर्घाः । जरिगृहीति १ । जरिगर्ढि । जरिगृढः । जरिगृहति । जरिगृहीषि । जरिघर्क्षि । जरिगृहीता । परिपृच्छीति । अनुनासिके च (।४।१।१०८।) ति छस्य शत्वे । परिपर्ष्टि । परिपृष्टः । परिपृच्छति । परिपर्ष्मि । परिपृच्छ्वः । अत्र यङ्निमित्तो ण्त्वत् । लुप्यपि अप्यृच्छेनादि (।७।४।११९।) ति निषेधास्स्यानित्यत्वम् । पूर्वं न गुणाद्युभयरूप (।५।४।११।) इत्युक्तत्वात्तत्र कार्यं एव निषिद्धम् । पौनःपुन्ये च रोरूप्यते । शोशुभ्यते इति स्यादेव । शोशुम्भ्यते । अनेक-स्वरत्वाद्यपोपदेशो यस्य न । स्तस्टि सपेस्नीयते ।

## सिचो यङि ॥२।३।६०॥

सिचः सकारस्य न षत्वं यङि । सिसेसिच्यते न ।

## न कवतेर्यङः ॥४।१।४७॥

यङन्तस्य कवतेर्द्वित्वे पूर्वस्य कस्य चो न स्यात्। कोकूयते खरः। कौतिकुवत्योस्तु। चोकूयते। नुगतोऽनुनासिकान्तस्ये (४।१।८१) त्यत्र तपरत्वाद्भूतपूर्वदीर्घस्य न नोऽन्तः। भामण् क्रोधे। बाभाम्यते। ये नवे (४।३।५२) ति जाजायते। जंजम्यते। धमधञ्च छले। चञ्चीकूम्यते। चरीकूम्यते। अपेर्यङि च॥ सोपुम्यते।

## व्येसमोर्यङि ॥४।१।८५॥

माग्मत्। वेवीयते। वेवयीति। सेसिम्यते। सेसिमीति। सेसेन्ति। चरोरयङि। पापट्यते। पापः की ॥४।१।८६॥ पापूग इत्येतस्य कीः स्याद्यङि। पेकीयते। पास्पर्धीति। पास्पर्द्धि। प्रस्तन्याम्। अपास्पर्तेे। सिचिमस्य रूपे रोरेत्ववत्। अपास्पा। जागाद्धि। जाघास्ति। अजाघात्। सिपिरुत्वपक्षे। अजाघा। नाथृ। मानाथीत्ति। नानान्ति। नानान्तः। दधि धारणे। दादधीति। दादद्धि। दादद्धः। दाधस्ति। अदाधत्। अदादद्धाम्। अदादधुः। अदाधः। अद्यतन्याम्। अदादाधीत्। अदादधीत्। चोस्कून्वीति। चोस्कुन्ति। अचोस्कुन्। अचोस्कुन्ताम्। अचोस्कुन्वः। मोमुवीति। मोमोन्ति। अमोमुवीत्। अमोमोत्। अमोमुत्ताम्। अमोमुवः। अमोमोः। अमोमोत्। अद्यतन्याम्। अमोमोवीत्। मोमोविता। चोकूर्दीति। चोकूर्ति। प्रस्तन्याम्। अचोकूर्द्। सिचिपक्षे। अचोकूः। चनीचनीति। चनीचद्धि। चनीचक। चनीचपति। अचनीचचीत्। अचनीचत्। इत्येवं लुपि। जपमीति। जपन्ति। जपता। जंप्सति। जंपद्धि। अजंपमीत्। अजपन्। आशिषि तु चप्यात्। अचपीत्। अचपिष्ठाम्। चपादेशस्य द्वित्वं न स्यात्। स्वामित्वेन मार्स सकृत्प्रवृत्तं प्रवृत्तमेवेति एकविषये पुनर्निषेधात्। चंचुरीति। चचूर्ति। चंचूर्तः। अचंचुरीत्। अचंचूः। योयोति। योयवीति। अयोयोत्। अयोयवीत्। अद्यतन्याम्। अयोयावीत्।

## न हाको लुपि ॥४।१।४९॥

ओहाक् त्यागे इत्यस्य द्वित्वे सति पूर्वस्य यङो लुप्याकारो न भवति। जहाति। जहेति। जाहेति। जाहातीत्यत्र जागुणाद्यन्यादेरि (४।१।४८) त्यात्वं तु पाणिनीये। एषामीत्व्यञ्जनेऽदः॥ जाहीतः। अत्र हाकः आपहौ पिलुक् णापात्ये (४।३।९१) त्येते विषयो न संभवन्ति। भक्षयन्यनिर्देशात्। जहति। जहासि। जहिष। जहीहि। अजहेत्। अजहात्। अजहीताम्। अजहुः। आशिषि। जहापात्। अजहासीत्। अजहासिष्ठाम्। अजहिष्यत्। सोपुपीति। सोपोसि। लुहालुसे प्रत्ययालक्षणात् अपेर्यङेन (४।१।८०) ति न प्राप्त्। इत्यनेकस्वरत्वादिविपिनपेषो न। तन्मते। सासपीति। सासप्ति। सासप्तः। सासपति। असासपीत्। असासप्। अद्यतन्याम् असासपीत्। प्लुत (४।४।७४) इति नृपरत्वादिह न। कृ।

भाकरीति । तॄ । तातरीति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि । अर्तेर्यङ्लुपि द्वित्वे ऋतोऽत् । अरर्ति । रियोगे । पूर्वस्यास्वे स्वरे य्वोरियुव् । अरियर्ति । अररीति । अरियरीति । अर्ऋतः । अरियृतः । इवर्णादेरि (१।२।२१) ति रत्वे अन्तो नो लुकि रेफान्त्यस्य रोरेलुगिति । आररति । अरियृति । अर्ऋयात् अरियृयात् । अरर्तु । अरियर्तु । अररीतु । अरियरीतु । अर्ऋताम् । अरियृताम् । आरर्तु । अरियृतु । आरः । आरियः । आररीत् । आरियरीत् । आर्ऋताम् । आरियृताम् । आररुः । आरियरुः । आरः । आरियः । आररीः । आरियरी । आरारीत् । आरियारीत् । अरराञ्चकार । अरियराञ्चकार । आशिषि गुणविधौ तिवा निर्देशान्न गुणः । रिः शक्याशीर्ये ॥ रलुक दीर्घः । आरियात् । अरियृयात् । अररिता । अरियरिता । आररिष्यत् । आरियरिष्यत् । ग्रहीङ् ग्रहणे । जर्गृहीति १ । जर्गर्ढि १ । जर्गृढः १ । जर्गृहति १ । अजर्घट् १ । यकार वकारान्तानामूद्भाविना यङ्लुपोऽभाव इष्टः । ऊद्भाविनो भिविमव्योस्तु यङ्लुप स्येवेति न्याय्यम् । शोभिवीति । शोभोति । मामोति । मामवीति । मामूतः । मामवति । मामोषि । मामवीषि । मामोमि । मामाव । मामूम । मामोतु । मामूताम् । मामूहि । मामवानि । अमामवीत् । अमामोत् । अमामवम् । अमामाव । अमामूम । ज्वरि । जाजूर्ति । जाजूर्तः । त्वरि । तातूर्ति । तातूर्तः ।

## मव्यविश्रिविज्वरित्वरेरुपान्त्येन ॥४।१।१०९॥

मव्यादीनामनुनासिकादौ क्वौ धुडादौ च प्रत्यये वकारस्योपान्त्येन सह ऊद् स्यात् । ज्वरत्वरोरुपान्त्यो वकारात्परः स्वरः । भिव्यविमव्यां तु पूर्वः । मव्यप बन्धने । अप पान्त ऊद् भावी । तेवृ देवने इत्यादयो वान्ताः ।

## राल्लुक् ॥४।१।११०॥

रेफात्परयोश्छकारवकारयोरनुनासिकादौ क्वौ धुडादौ च प्रत्यये लुक्स्यात् । मुर्छा । मोमोर्ति । मोमूर्तः । मोमूर्छति । हुर्छा । जोहोर्ति । हय गतौ । जाहयीति । जाहति । जाहत । जाहयति । जाहयीषि । जाहसि । य्वोः प्वय्व्यञ्जने लुक् । मव्यस्याः ॥ जाहमि । जाहायः । जाहामः । हर्ये गतिकान्त्योः । जाहर्यीति । जाहर्ति । जाहर्तः । जाहर्यति । जाहर्हि । अजाहः । अजाहर्ताम् । अजाहर्युः । तुर्वै हिंसायाम् । तोतूर्वीति । तोतोर्ति । भ्वादेर्नामिन (२।१।६३) इति दीर्घे । तोतूर्वति । तोपोर्ति । दोपोर्ति । अजेर्वी । वेवीयते । अस्य यङ् लुप नास्ति । इत्यादि ।

इति यङन्तयङ्लुपन्ताः ॥

---

## अथ नामधातुप्रक्रिया

## द्वितीयायाः काम्यः ॥३।४।२२॥

द्वितीयान्तादिच्छायां काम्यो वा भवति । इदं काम्यति । ऐदकाम्यीत् । इद काम्याञ्चकार । इदं काम्यात् । इद काम्यिता । इद काम्यिष्यति । ऐदं काम्यिष्यत् ।

## अमाव्ययात्क्यश्च ॥३।४।२३॥

मन्ताव्ययवर्जाद्द्वितीयान्तादिच्छायामर्थे क्यन् काम्यो वा स्यात् ।

## क्यनि ॥४।३।११२॥

अवर्णान्तस्य क्यनि ई स्यात् । पुत्रमिच्छति पुत्रीयति । अपुत्रीयीत् । पुत्रीयामास । पुत्रीयिता । पुत्रकाम्यति । राजानमिच्छति राजीयति । गव्यति ।

## आधाराच्चोपमानादाचारे ॥३।४।२४॥

मन्ताव्ययवर्जादुपमानाद्द्वितीयान्तादाधाराच्च नाम्न आचारे क्यन्वा स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । प्रासाद इवाचरति प्रासादीयति कुट्याम् ।

## कर्तुः क्विप्गल्भक्लीवहोडात्तु ङित् ॥३।४।२५॥

कर्तुरुपमानादाचारेऽर्थे क्विप् वा स्यात् । गल्भादिभ्यस्तु स एव ङित् । अश्व इवाचरति अश्वति । गल्भते । क्लीबते । होडते ।

## क्यङ् ॥३।४।२६॥

कर्तुरुपमानादाचारे क्यङ् स्यात् । दीर्घश्च्वि (४।३।१०८) इति दीर्घे । हंस इवाचरति हंसायते । अहंसायिष्ट । हंसायाञ्चक्रे । हंसायिषीष्ट ।

## सोवालुक् च ॥३।४।२७॥

क्यङि । पयायते । पयस्यते ।

## ओजोप्सरसः ॥३।४।२८॥

नित्यं सोलुक् । ओजस्वीवाचरति ओजायते । अप्सरायते । ओजःशब्दो वृत्ति विषये तद्वति । क्यतोरीः ॥ मालीयते । क्यङ् मानिपित्तद्धिते (३।२।५०) इति पुंम्भावे । श्येनीवाचरति श्येतायते । नमय (१।१।२२) इति पदत्वे । राजायते । पपये (१।४।९५) इत्यवादेशो । गव्यते ।

## डाजलोहितादिभ्यः पित् ॥३।४।३०॥

एभ्यः कर्तृभ्यश्च्व्यर्थे पित्क्यङ् स्यात् ।

## क्यङ्पो न वा ॥३।३।४३॥

क्यषन्तादात्मनेपदं वा स्यात्। पटपटायति। पटपटायते। डाच्यादामि (७।२।१४९) तितलोपः। लोहितायति। लोहितायते।

## तपसः क्यन् ॥३।४।३६॥

अस्मात्कर्मणः कृताद्यर्थे क्यन्वा स्यात्। तपः करोति तपस्यति।

## नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये ॥३।४।३७॥

यथासंख्यमर्चादिष्वर्थेषु करोत्यर्थे क्यच् वा स्यात्। नमस्यति। वरिवस्यति। चित्रीयते। अर्चादिष्विति किम्? नमः करोति। नमःशब्दमुच्चारयतीत्यर्थः।

## क्षुत्तृड्गर्धेऽशनायोदन्यधनायम् ॥४।३।११३॥

एष्वर्थेषु यथासंख्यमशनायादयः क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति।

## वृषाश्वान्मैथुनेस्सोऽन्तः ॥४।३।११४॥

आभ्यां मैथुनार्थाभ्यां क्यचि सोऽन्तः। वृषस्यति गौः। अश्वस्यति वडवा।

## अस् च लौल्ये ॥४।३।११५॥

भोगेच्छातिरेको लौल्यम्। तस्मिन् गम्ये क्यचि परे नाम्नः सोऽस् चान्तः स्यात्। द्विसकारपाठात् दधिस्यति। दध्यस्यति। मधुस्यति। मध्वस्यति।

## नस्सः ॥२।३।५९॥

कृत द्विर्भावसकारस्य षत्विनः सस्य षो न स्यात्। सुपिस्स्यते।

## सत्यार्थवेदस्याः ॥३।४।४४॥

एषां णिच् सन्नियोगे आः स्यात्। सत्यापयति। अर्थापयति। वेदापयति। स्रियम्बिर (७।४।३८) इत्यादिना प्राप्तावेषो। प्रियमाचष्टे प्रापयति।

## णिज्बहुल नाम्नः कृगादिषु ॥३।४।४२॥

स्थूलमाचष्टे स्थापयति। त्वामिच्छति त्वयति। मामिच्छति मयति। युष्मानिच्छति युष्मयति। अस्मयति। गीर्यते। पूर्यते। स्त्रियमिच्छति स्त्रियति। अमुमिच्छति अदस्यति। गार्गीयति। वाच्यति। कवीयति। समिध्यति। क्षीरमिच्छति क्षीरस्यति बालः। लवणमिच्छति लवणस्यत्युष्ट्रः। त्वमिवाचरति त्वयते। मयते। यूयमिवाचरति युष्मयते। अस्मयते। हरिणीवाचरति हरितायते। सपत्नीव सपत्नायते। सपत्नीयते। सपत्नीयते। युवतिरिवाचरति युवायते। पद्वीमृद्वीवाचरति पद्वीमृद्वायते। सर्वनामस्य क्रियाचारे। अ इवाचरति। अति। अतः। अन्ति।

गतिकन्यस्तत्पुरुष इति समासः । द्वितीयः असंग्रामयत शूरः इत्यादौ धात्ववयवः समिति । विच्छ धातोर्वि इत्यवयवः । ततः प्रागेवाट् । उदग्रामैच्छत् औत्सीयत् । औद्गूरीयत् औडीयत् । लोहितादित्वात् श्यामायति । धूमादीनां सतप्रावृतीनां प्रकृतिविकारभावाप्रतीतेरभूततद्भावार्थो नास्तीति तद्वृत्तिभ्यः प्रत्ययः । अधूमवान् धूमवान् भवति धूमायति । धूमायते इत्यादि । लोहिनीशब्दादपि क्यङ्ष् लिङ्गविशिष्टपरिभाषया । लोहिनीयति । लोहिनीयते ।

## कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे ॥३।४।३१॥

कष्टादिभ्यो निर्देशादेव चतुर्थ्यन्तेभ्यः पापे वर्तमानेभ्यः क्रमणेऽर्थे क्यङ् प्रत्ययो वा स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहते । कष्टादीनां वृत्तिविषये पापार्थानां द्वितीयान्तानां चिकीर्षायामपि क्यङ्गाच्य इत्यन्ये । पापं चिकीर्षतीत्यस्य पदविग्रहे कष्टायते । सत्रायते । कक्षायते ।

## रोमन्थाद् व्याप्यादुच्चर्वणे ॥३।४।३२॥

अभ्यवहृतं द्रव्यं रोमन्थः । उद्गीर्य चर्वणमुच्चर्वणम् । रोमन्थात्कर्मण उच्चर्वणेऽर्थे क्यङ् प्रत्ययो वा भवति । रोमन्थमुच्चर्वयति रोमन्थायते गौः । उद्गीर्य चर्वयतीत्यर्थः । उच्चर्वण इति किम् ? कीटो रोमन्थं वर्तयति । उद्गीर्णं परित्यक्तम् अपानप्रदेशान्निःसृतं वा द्रव्यं रोमन्थस्तद्गुटिकां करोतीत्यर्थः ।

## फेनोष्मबाष्पधूमादुद्वमने ॥३।४।३३॥

फेनादिभ्यः कर्मभ्यः क्यङ् प्रत्ययो वा स्यात् । फेनमुद्वमति फेनायते । बाष्पमुद्वमति बाष्पायते ।

## शब्दादेः कृतौ वा ॥३।४।३५॥

शब्दादिभ्यः करोत्यर्थे क्यङ् स्यात् । णिजपवादः । शब्दं करोति शब्दायते । वाशब्दो व्यवस्थितविभाषायाम् । तेन णिजपि । शब्दयति ।

## सुखादेरनुभवे ॥३।४।३४॥

साक्षात्कारोऽनुभवस्तस्मिन्नर्थे सुखादिभ्यः कर्मभ्यः क्यङ्प्रत्ययो वा स्यात् । चीवरं परिधत्ते परिचीवरयते । संचीवरयते । चीवराण्यर्जयति । समार्जयति वा । णिस्तुदुत्तमित्यनेन सुणयतीत्यादयः ।

## व्रताद्भुजि तन्निवृत्त्योः ॥३।४।४३॥

व्रतं शास्त्रविहितो नियमः । व्रताद्भोजने तन्निवृत्तौ च वर्तमानात्कृगाद्यर्थेषु णिच् स्यात् । पय एव मया भोक्तव्यमिति व्रतं करोति गृह्णाति वा पयोव्रतयति । सावद्यान्नं मया न भोक्तव्यमिति व्रतं करोति गृह्णाति वा सावद्यान्नं व्रत

यति । वस्त्रं समाच्छादयति संवस्त्रयति । हलिं कलिं वा गृह्णाति हलयति । कलयति । सन्वल्लघुनि चङ्परे अजहलत् । अचकलत् । सन्वद्भावो दीर्घश्च न । नामिनोऽकलिहल्ले (४।३।५१) रिति सूत्रेऽभावे समानलोपित्वात् । कृतं गृह्णाति कृतयति । तूस्तं केशा जलतूर्लं विहरति विहन्ति वितूस्तयति । सेनयाऽभियाति अभिषेणयति । स्थासे नीसादीनां षः । अभ्यषेणयत् । अभिषिषेणयिषति । अभ्यषिषेणयिषत् । स्वच संवरणे । स्वचं गृह्णाति स्वचयति । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । ङपरे अपप्रथत् । मृदुं म्रदयति । अमम्रदत् । भृशं कृशं दृढं भ्रशयति । कृशयति । द्रढयति अबभ्रशत् । अचकृशत् । अददृढत् । पृथुमृदुभृश (७।४।९५) त्यादिना अतोऽत्वम् । ऊढिमाख्यत् औजिढत् । हस्वादीनामसत्वात् ढतिशब्दस्य द्वित्वम् । ढि इत्यस्य द्वित्वमित्यन्ये । औडिढत् । ऊढमाख्यत् औजढत् । ढतशब्दस्य द्वित्वम् । ढस्य द्वित्वे औढढत् । त्वां मां वाचष्टे त्वापयति । मापयति । मपर्यन्तस्य त्वमौ । लुगस्यादेत्यपदे (६।१।९६) इत्यत प्रागेवान्त्यस्वरादिलोपे ञ्णिति वृद्धौ पुगन्त इत्यन्ये । त्वदयति । मदयति इत्यत्र णिलत्वादन्त्यस्वरादिलोपात्प्राक् समादेशौ । युवामावामाचष्टे युष्मयति । अस्मयति । विद्वांसमाचष्टे विद्वयति । णिचर्जनालोपः । उदञ्चमाचष्टे उदयति । अन्त्यस्वरादिलोपः । उदीचु म । णिचर्जनात् । उदापत् । प्रत्यञ्चमाचष्टे प्रतापयति । अप्रतापिपत् । अभ्यस्य (४।१।८) ति पिशब्दस्य द्वित्वम् । सम्यञ्चमाचष्टे समापयति । अससमापत् । तिर्यञ्चमाचष्टे तिरापयति । अत्रान्त्यस्वरादिलोपेनापहारेऽपि पहिरङ्गत्वे नासिद्धत्वात्तिरसस्तिरि' पारङ्गमप्रत्यय स्वरादि लोपे पूर्वं अच् इत्यस्य लोपोऽसिद्धः द्वितीयोऽपि णिचिनिमित्तलोपो न अगपूत्तपरिभाषाया वा केप्रत्यये समानलोपित्वाद्रूपान्यहस्वो न । अतितिरापत् । सध्यञ्चमाचष्टे सध्रापयति । अससध्रापत् । विष्वद्र्यञ्चमाचष्टे विष्वद्र्यापयति । अविविष्वद्र्यापत् । देवद्र्यञ्च करोति देवद्र्यापयति । अदिदेवद्र्यापत् । अदद्र्यञ्चम् आददद्र्यापत् । अदमुयञ्चमाचष्टे अदमुआपयति । आददमुआपत् । अमुमुयञ्चम् अमुमुआपयति । आमुमुमुआपत् । सुपम् । भापयति । अबीभपत् । भुवम् । अबूभुवत् । भिपम् । अविभिपत् । गाम् । अजूगवत् । रायम् । अरीरपत् । नावम् । अनूनवत् । स्वम् । स्वयति । असस्वपत् । यहून् । भूपयति । अबूभुपत् । भापयतीति कश्चित् । भापयतीत्यप्ये । स्रग्विणम् । स्रजयति । विन्मतोर्लुगिति णेयसी लुप ॥ श्रीमती श्रीमन्तं वा श्रापयति । अशिश्रपत् । पयस्विनीमाचष्टे पयसयति । इष्टान्त्यस्वरादिलोपो न । तद्द्यपादस्य विन्मो लुप' प्रभूतसत्वात् । स्थूलम् । स्थवयति । दूरम् । दवयति । दूरयतीति तु दूरमतति अयते वा दूरात् । दूरात् कुर्वति सतीत्यर्थ' । कश्चित्तु स्थूलदूरयूनां करोत्यर्थे णौ नेच्छति । युवानमाचष्टे यवयति । कनयति । अन्तिकमाचष्टे नेदयति । बाढम् । साधयति । प्रशस्यम् । श्रयति । अशिश्रत् प्रशामगतीत्यर्थं । नद् अजयी । उपसर्गस्य पृथक्कृते । वृद्धम् । ज्यपति । वर्षयति । प्रियम् । प्रापयति । स्थिरम् । स्थापयति । स्फिरम् । स्फापयति ।

गरयति । तृपम् । त्रपयति । उरुम् । वरयति । बहुलम् । बंहयति । गुरुम् । दीर्घम् । द्राघयति । वृन्दारकम् । वृन्दयति । इति नामधातुप्रक्रिया ॥

अथ सौत्राः ।

## धातोः कण्ड्वादेर्यक् ॥३।४।८॥

द्विविधाः कण्ड्वादयो धातवो नामानि च । तत्र कण्ड्वादिभ्यो धातुभ्यः स्वार्थे यक् स्यात् । कण्डूयति । कण्डूयते । महीयते । मन्तूयते । धातोरिति किम् ? कण्डूः । कण्ड्वौ । कण्ड्वः । कण्डूग् गात्रविघर्षणे ॥ १ ॥ महीङ् पूजायाम् ॥ २ ॥ मन्तु अपराधे ॥ ३ ॥ वल्गु पूजामाधुर्ययोः ॥ ४ ॥ वल्गूयति । असु उपतापे ॥ ५ ॥ अस्यति । असूमपीच्छन्त्येके । असूयति । असूयते । लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने दीप्तौ च ॥ ६ ॥ लेट्यति । लोट्यति । लेटिता । लोटिता । लेला दीप्तौ ॥ ७ ॥ इरस् इरज् इरञ् ईर्ष्यायाम् ॥ ८ ॥ इरस्यति । इरज्यति । भ्वादेर्नामिनः ( २।१।६३ ) इति दीर्घे । ईर्यति । ईर्यते । उषस् प्रभातीभावे ॥ ९ ॥ उषस्यति । वेट् धौर्त्ये स्वप्ने च ॥ १० ॥ मेधा आशुग्रहणे ॥ ११ ॥ मेधायति । कुषुभ् क्षेपे ॥ १२ ॥ कुषुभ्यति । मगध परिवेष्टने ॥ १३ ॥ नीचदास्ये इत्यन्ये । तन्तस् पम्पस् दुःखे ॥ १४ ॥ सुख दुःख तत्क्रियायाम् ॥ १५ ॥ सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । सपर पूजायाम् ॥ १६ ॥ अरर आराकर्मणि ॥ १७ ॥ भिषज् चिकित्सायाम् ॥ १८ ॥ भिष्णज् उपसेवायाम् ॥ १९ ॥ इषुध शरधारणे ॥ २० ॥ चरण वरण गतौ ॥ २१ ॥ चुरण् चौर्ये ॥ २२ ॥ तुरण् त्वरायाम् ॥ २३ ॥ भुरण् धारणपोषणयोः ॥ २४ ॥ गद्गद वाक्स्खलने ॥ २५ ॥ एला केला वेला खेला विलासे ॥ २६ ॥ खिल इत्यन्ये । लेखा स्खलने च ॥ २७ ॥ अवन्तोऽयमित्यपरे । लिट् अल्पकुत्सनयोः ॥ २८ ॥ लिट्यति । लाट् जीवने ॥ २९ ॥ हृणीङ् रोषणे लज्जायां च ॥ ३० ॥ रेखा श्लाघासादनयोः ॥ ३१ ॥ द्रवस् परितापपरिचरणयोः ॥ ३२ ॥ तिरस् अन्तर्धौ ॥ ३३ ॥ अगद नीरोगत्वे ॥ ३३ ॥ उरस् बलार्थे ॥ ३४ ॥ उरस्यति । बलवान् भवतीत्यर्थः । तरण गतौ ॥ ३५ ॥ पयस् प्रसृतौ ॥ ३६ ॥ सम्भूयस् प्रभूतीभावे ॥ ३७ ॥ अम्बर सम्बर संवरणे ॥ ३८ ॥ आकृतिगणोऽयम् । इति कण्ड्वादयः ॥

कण्डूयतेः सनि सन्यङश्च ( ४।१।३ ) इति द्वित्वे प्राप्ते ।

## कण्ड्वादेस्तृतीयः ॥४।१।९॥

कण्ड्वादेर्धातोर्द्वित्वे प्राप्ते एकस्वरस्तृतीयोऽवयवो द्विः स्यात् । कण्डूयियिषति ।

## नाम्नो द्वितीयाद्यथेष्टम् ॥४।१।७॥

स्वरादेर्नाम्नो धातोर्द्वित्वप्राप्तौ द्वितीयादारभ्यैकस्वरोऽवयवो यथेष्टं द्विः स्यात् । अशिश्वीयिषति । अश्वीयिषिषति ।

## अन्यस्य ॥४।१।८॥

स्वरादेरन्यस्य ण्यसनादेर्नाम्नो धातोर्द्वित्वभाज एकस्वरोऽवयवो यथेष्ट प्रथमो द्वितीयस्तृतीयो वाऽन्यतमो द्विः स्यात्। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुत्रीयन्तं प्रायुङ्क्त अपुपुत्रीयत्। अपुतित्रीयत्। अपुत्रीयियत्। इन्द्रीयते सनि द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम्। इन्दिद्रीयिषति। इन्द्रीयियिषति। चिचन्द्रीयिषति। चन्दिद्रीयिषति। चन्द्रीयियिषति। प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति पिप्रापयिषति। प्रापिपयिषति। प्रापयियिषति। उरुम्। विवरयिषति। वररयिषति। वरयियिषति। बाढम्। सिसाधयिषति इत्यादि रूपत्रयम्। यस्य तु नास्ति। यङ् सन् ण्यन्तात्सन्। बोभूयिषयिषति। यङ् णिच् सन्नन्ताण्णिच्। बोभूयिषयतीत्यादि। द्वित्वे पुनर्द्वित्वं न।

## पुनरेकेषाम् ॥४।१।१०॥

एकेषामाचार्याणां मते द्वित्वे कृते पुनर्द्वित्वं भवति। बुबोभूयिषति। सन्नन्ताण्णिचि बुभूषयति। यङन्ताण्णिगि बोभूययति। यङ्लुबन्ताण्णिगि बोभावयति। णिगन्ताण्णिग् भावयति। ण्यन्तात्सनि बिभावयिषति। सन् यङ् यङ्लुबन्तेभ्यो न यङ्। अनेकस्वरत्वात्। इति प्रत्ययमाला ॥

अथ आत्मनेपदप्रक्रिया।

## क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसोह्वहश्चानन्योन्यार्थे ॥३।३।२३॥

इतरप्रतिचिकीर्षितायाः क्रियाया इतरेण करणं क्रियाव्यतीहारः। तस्मिन्नर्थे वर्तमानाद्गतिहिंसाशब्दार्थहसवर्जिताद्धातोर्हवहिभ्यां च कर्तर्यात्मनेपदं स्यात्। न चेदन्योन्यार्था अन्योन्येतरेतरपरस्परशब्दाः प्रयुज्यन्ते। व्यतिलुनते। श्नाश्चातः (४।२।९६) इत्या लुक्। अन्यस्ययोग्यं लवनं कुर्वन्तीत्यर्थः। व्यतिपुनते। व्यतिहरन्ते भारम्। सम्प्रहरन्ते राजानः। संविवहन्ते वर्णाः। हवहोर्गतिहिंसार्थत्वेन निषेधे प्राप्ते प्रतिप्रसवार्थं ग्रहणम्। असक् भुवि। व्यतिस्ते। व्यतिषाते। व्यतिषते। श्नास्त्योर्लुक् (४।२।९०)। व्यतिसे। अस्तेः सिहस्त्वेति। सो धि वा। व्यतिध्वे। व्यतिहे। व्यतिषीत। पञ्चम्या ऐपि व्यत्यसै। व्यत्यास्त। व्यतिराते १। व्यतिभाते १। व्यतिघ्नते।

## निविशः ॥३।३।२४॥

आत्मनेपदं स्यात्। निविशते।

## परिव्यवात्क्रियः ॥३।३।२७॥

ईगितोऽत्र फलवतोऽन्यत्र विधिः । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

## पराव्येर्जेः ॥३।३।२८॥

पराजयते । विजयते ।

## दाणोऽस्वास्यप्रसारविकासे ॥३।३।५३॥

आङ्पूर्वाद्दातेः कर्तर्यात्मनेपदं स्यात् । न चेत्स्वमुखप्रसारो विकासश्चार्थः स्यात् । धनमादत्ते । अस्वास्येत्यादि किम् ? कूपो मुखं व्याददाति । प्रसारयति । विकास इति किम् ? विपादिकां व्याददाति । विकिरतीत्यर्थः । स इति किम् ? व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।

## क्रीडोऽकूजने ॥३।३।३३॥

क्रीडः सम्पूर्वादात्मनेपदम् । सङ्क्रीडते । कूजने तु सङ्क्रीडति चक्रम् ।

## अन्वाङ्परेः ॥३।३।३४॥

अन्वादिभ्यः परात् क्रीडतेः कर्तर्यात्मनेपदं स्यात् । अनुक्रीडते । आक्रीडते । परिक्रीडते । उपसर्गाद्विशेष । माणवकमनुक्रीडति । तेन सह क्रीडतीत्यर्थः ।

## गमेः क्षान्तौ ॥३।३।५५॥

आङ्पूर्वाण्णयन्ताद्गमयतेः क्षान्त्यर्थे प्राग्वत् । आगमयते गुरुम् । कञ्चित्कालं प्रतीक्षते इत्यर्थः ।

## शको जिज्ञासायाम् ॥३।३।७३॥

ज्ञानानुसहितार्थात् शकः सन्नन्तात् प्राग्वत् । विद्यासु शिक्षते । अहं ज्ञातुं शक्नुयामितीच्छतीत्यर्थः ।

## आशिषि नाथः ॥३।३।३६॥

सर्पिषो नाथते । सर्पिर्मे भूयादित्याशास्ते ।

## हृगो गतताच्छील्ये ॥३।३।३८॥

गतं प्रकारः सादृश्यम् ताच्छील्यम् । तस्य स्वभावस्तत्त्वम् । ताच्छील्यार्थः हृतेर्हरते प्राग्वत् । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पैतृकं मातृकं वा सादृश्यं गुणान् क्रियातो वा शीलयन्ति ।

## अपस्किरः ॥३।३।३०॥

अपपूर्वात्किरतेः ससुट्कात् प्राग्वत् । अपस्किरते वृषो हृष्टः । कुक्कुटो भक्ष्यार्थी । श्वाश्रयार्थी च ।

## अपाच्चतुष्पात्पक्षिशुनिहृष्टान्नाश्रयार्थे ॥४।४।९५॥

अपात्परस्य किरतेः ससुट्कं स्यात् । इति ससुट् ।

## नुप्रच्छः ॥३।३।५४॥

आङ्पूर्वाभ्यामाभ्यां धातुभ्यामात्मनेपदं स्यात् । आनुते । आपृच्छते ।

## शप उपलम्भने ॥३।३।३५॥

उपलम्भनं प्रकाशनं शापनम् । तदर्थवृत्तेः शपः प्राग्वत् । मैत्राय शपते । मैत्रं कश्चिदर्थं बोधयतीत्यर्थः ।

## सविप्रावात् ॥३।३।६३॥

एभ्यः परात्तिष्ठतेः प्राग्वत् । सन्तिष्ठते । वितिष्ठते ।

## प्रतिज्ञायाम् ॥३।३।६५॥

अभ्युपगमार्थवृत्तेस्तिष्ठतेः प्राग्वत् । नित्यं शब्दमातिष्ठते । अयमाङ्पूर्व एव प्रतिज्ञार्थे । नित्यमेव शब्दं प्रतिजानीत इत्यर्थः ।

## ज्ञीप्सास्थेये ॥३।३।६४॥

परतोपायरूपाभिप्रकाशनं ज्ञीप्सा । स्थेयो विवादे प्रमाणं पुरुषः । तदर्थवृत्तेस्तिष्ठतेः प्राग्वत् । गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ।

## उदोनूर्ध्वेहे ॥३।३।६२॥

ऊर्ध्वं विना य ईहश्चेष्टा तद्वृत्तेरुदः परात्तिष्ठतेः प्राग्वत् । मुक्तावुत्तिष्ठते । अनूर्ध्वे इति किम् ? पीठादुत्तिष्ठति ।

## देवार्चामैत्रीसङ्गमपथिकर्तृकमन्त्र-करणे स्थ ॥३।३।६०॥

उपपूर्वात्तिष्ठतेरात्मनेपदं स्यात् । जिनमुपतिष्ठते । रथिकानुपतिष्ठते । मैत्र्या हनुनाऽऽराधयति । यमुना गङ्गामुपतिष्ठते । अयं पन्था दिल्लीमुपतिष्ठते । मन्त्र करणं यस्यार्थस्य । सावित्र्या सूर्यमुपतिष्ठते । आराधयतीत्यर्थः । अन्यत्र यौवनेन पतिमुपतिष्ठति । उपगच्छति ।

## वा लिप्सायाम् ॥३।३।६१॥

भिक्षुर्धनिनमुपतिष्ठति उपतिष्ठते वा।

## उपात् स्थः ॥३।३।८३॥

उपपूर्वात्तिष्ठतेरसति कर्मणि तथैव । भोजनस्य समये उपतिष्ठते । सन्निहितो भवतीत्यर्थः ।

## व्युदस्तपः ॥३।३।८७॥

कर्मण्यसति स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदं स्यात् । उत्तपते । वितपते रविः । दीप्यते इत्यर्थः । उत्तपते वितपते पाणिम् । हस्तं तापयतीत्यर्थः । व्युद इति किम्? निष्टपति ।

## निसस्तपेऽनासेवायाम् ॥२।३।३५॥

सस्य षत्वं स्यात् । इति षत्वम् ।

## आङो यमहनः स्वेऽङ्गे च ॥३।३।८६॥

असति कर्मणि स्वेऽङ्गे च कर्मणि प्राग्वत् । आयच्छते । आहते । आयच्छते पादम् । आहते शिरः । अपतन्यां वात्मात्मने (।४।४।२२।) इति वा वधादेशः । आवधिष्ट । आवधिषाताम् ।

## हनः सिच् ॥४।३।८६॥

हनः परः आत्मनेपदे सिच् कित् । नकारलुक् । आहत । आहसाताम् । आहसत ।

## यमः सूचने ॥४।३।३९॥

परदोषाविष्करणार्थवृत्तेर्यमः परः सिच् आत्मनेपदे कित्स्यात् । यमिरमिनमिगमीत्य ।४।४।८७। मेन नकारलुक् । आयत । आयसाताम् ।

## यम. स्वीकारे ॥३।३।५९॥

उपपूर्वादात्मनेपदं स्यात् । कन्यामुपयच्छते । वेश्यामुपयच्छते । उद्वाह एवेच्छन्त्यन्ये ।

## वा स्वीकृतौ ॥४।३।४०॥

सिच् कित् । उपायत । उपायस्त महास्त्राणि । उपायस्त कन्याम् ।

## समोगमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः ॥३।३।८४॥

समः परेभ्यो गम्यादिभ्यः कर्मण्यसति कर्तर्यात्मनेपदं स्यात् ।

## गमो वा ॥४।३।३७॥

गम' परावात्मनेपदे सिजाशिषौ किद्वा स्त' । समगसीष्ट । संगसीष्ट । समगत । समगस्त । समगसाताम् । समुच्छते । समृच्छिष्यते । सपृच्छते । समृणुते । ज्ञामार्थे विद' ॥ – ॥ सविन्ते । सविदाते । सविदते । अर्तीति भ्वादे रदादेश्च ग्रहणम् । समियृते । सम्पश्यते । संस्वरते । मासमृत । मासमृषाताम् । मासमृषत । समार्त । समार्षाताम् । समार्षत इति च भ्वादेः । इयर्तेस्तु मास मरत । मा समरेताम् । मा समरन्त । समारत । समारताम् । समारन्तेति । अत्र हनिगम्यादीनां कथमकर्मकतेति चेत् । "धातोरर्थान्तरे वृत्ते र्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षात' कर्मणोऽकर्मिका क्रिया ॥ १ ॥" वहति भारम् । नदी वहति । स्यन्दते इत्यर्थः । जीवति वत्सति वा चैत्र' । अत्र जीव प्राणधारणे वृतेच् गात्रविक्षेपे अनयोर्धारणविक्षेपरूपे धात्वर्थेऽपि समाहावकर्मकत्वम् । प्रसिद्धेर्यथा मेघो वर्षति । वह्निर्ज्वलति । कर्मणोऽविवक्षातो यथा–हिताच य' सम्भृणुते स किं प्रभुः ।

## उपसर्गादस्योहो वा ॥३।३।२५॥

कर्तर्यात्मनेपदं वा स्यात् । विपर्यस्यति । विपर्यस्यते वा । समूहति । समूहते वा । उपसर्गादूहो ह्रस्व' ।४।१।१०९। धातौ क्ङिति । समूह्यात् ।

## ह्वः स्पर्धे ॥३।३।५६॥

मल्लो मल्लमाह्वयते । संनिवेः ॥३।३।५७॥ संह्वयते । उपात् ॥३।३।५८॥ तथा । उपह्वयते ।

## गन्धनावक्षेपसेवासाहसप्रतियत्न-प्रकथनोपयोगे ॥३।३।७६॥

गन्धनादिवृत्तेः कृञः कर्तर्यात्मनेपदं स्यात् । गन्धनं परद्रोहाभिप्रायेण परदोषोद्घाटनम् । प्रोत्साहनादिकमित्यन्ये । उत्कुरुते मां जिघांसुः । उपकर्तृं कथयतीत्यर्थः । अवक्षेपो भर्त्सनम् । दुष्टामवकुरुते । धिक्करोति । महामात्यानुपकुरुते । सेवते । साहसमविमृश्य प्रवृत्तिः । परदारान् प्रकुरुते । तेषु सहसा प्रवर्तते । प्रतियत्नः सतो गुणान्तराधानम् । एधो दकस्योपस्कुरुते । प्रकथनं कथनमारम्भ' । जनापवादान् प्रकुरुते । वक्तुमारभते इत्यर्थः । उपयोगो धर्मादौ विनियोगः । शतमुपकुरुते । धर्मादौ विनियुङ्क्ते ।

## अधे. प्रसहने ॥३।३।७७॥

प्रसहनं पराभिभव' । क्षमोपि । त ह्यधिचक्रे । भवादृशाश्चेदधिकुर्वते रतिम् परान् । क्षमन्ते इत्यर्थः ।

## वेः कृगः शब्दे चानाशे ॥३।३।८५॥

विपूर्वादनाशार्थवृत्तेः कृग आत्मनेपदमसति कर्मणि शब्दे च कर्मणि। विकुर्वते सैन्धवाः। शोभनं वल्गन्तीत्यर्थः। शब्दे कर्मणि क्रोष्टा विकुरुते स्वरान्। नानोत्पादयतीत्यर्थः।

## पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः ॥३।३।३९॥

पूजाचार्यकभृतिषु यथासंख्यं कर्मकर्तृधात्वर्थविशेषणेषु गम्यमानेषु उत्क्षेपादिषु च धात्वर्थेषु वर्तमानान्नयतेः कर्तर्यात्मनेपदं स्यात्। पूजा सन्मानः। नयते विद्वान् स्याद्वादे जीवादीन् पदार्थान्। युक्तिभिः स्थिरीकृत्य शिष्यबुद्धिं प्रापयतीत्यर्थः। ते हि युक्तिभिः स्थिरीकृताः पूजिताः स्युः। आचार्यस्य भावः कर्म वा आचार्यकम्। तस्मिन्माणवकमुपनयते। स्वयमाचार्यो भवन् माणवकमध्ययनायात्मसमीपं प्रापयतीत्यर्थः। भृतिर्वेतनम्। तत्र कर्मकरानुपनयते। वेतनेनात्मसमीपं प्रापयतीत्यर्थः। शिशुमुदानयते। उत्क्षिपतीत्यर्थः। ज्ञानं प्रमेयनिश्चयः। नयते तत्त्वार्थे। तत्र प्रमेयं निश्चिनोतीत्यर्थः। विगणनमृणादेः शोधनम्। मद्राः करं विनयन्ते। राजग्राह्यं भागं दानेन शोधयन्तीत्यर्थः। व्ययो धर्मादिषु व्यापारणम्। शतं विनयते। धर्मार्थं तीर्थेषु विनियुङ्क्ते।

## कर्तृस्थामूर्ताप्यात् ॥३।३।४०॥

कर्तृस्थममूर्तं कर्म यस्य तस्मान्नयतेः कर्तर्यात्मनेपदं स्यात्। श्रमं विनयते।

## वृत्तिसर्गतायने ॥३।३।८६॥

वृत्त्याद्यर्थवृत्तेः क्रमः कर्तर्यात्मनेपदं स्यात्। वृत्तिरप्रतिबन्धः, आत्मयापनं वा। शास्त्रे क्रमते बुद्धिः। तत्र न प्रतिहन्यते। आत्मानं यापयति वेत्यर्थः। सर्ग उत्साहः। तात्पर्यमनुज्ञा वा। सूत्राय क्रमते। तदर्थमुत्सहते। तायनं स्फीतता संतानः पालनं वा। क्रमतेऽस्मिन् योगाः। स्फीता भवन्तीत्यर्थः।

## परोपात् ॥३।३।४१॥

वृत्त्याद्यर्थेषु क्रमः प्राग्वत्। पराक्रमते। उपक्रमते। नियमार्थमिदम्। नेह। अनुक्रामति। अन्ये तु वृत्त्याद्यभावेऽपीच्छन्ति।

## वेः स्वार्थे ॥३।३।५०॥

स्वार्थः पादविक्षेपः। तदर्थेऽपि क्रमस्तथा। साधु विक्रमते गजः।

## प्रोपादारम्भे ॥३।३।५१॥

तथा। प्रक्रमते भोक्तुम्। उपक्रमते पठितुम्।

## आङो ज्योतिरुद्गमे ॥१।३।५२॥

तथैव । आक्रमते सूर्यः । उदयते इत्यर्थः ।

## क्रमोऽनुपसर्गात् ॥१।३।४७॥

विकल्पेनात्मनेपदम् । क्रमते क्रामति वा ।

## निह्नवे ज्ञः ॥१।३।८६॥

शतमपजानीते । अपलपतीत्यर्थः ।

## ज्ञः ॥१।३।८२॥

जानातेरात्मनेपदं स्यादसति कर्मणि । सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तते इत्यर्थः ।

## सम्प्रतेरस्मृतौ ॥१।३।६९॥

शतेन शतं वा सञ्जानीते । अवेक्षत इत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । अस्मृताविति किम्? मातुर्मातरं वा संजानाति । स्मरतीत्यर्थः । कर्मणः शेषत्वविवक्षायां षष्ठी ।

## दीप्तिज्ञानयत्नविमत्युपसम्भाषोपमन्त्रणे वदः ॥१।३।७८॥

दीप्त्याद्यर्थे गम्यमाने वदतेरात्मनेपदं स्यात् । वदते विद्वान् स्याद्वादे । वस्तुतत्त्वोपलम्भनाद्दीप्यमानो वक्तीत्यर्थः । ज्ञानमवबोधः । शास्त्रे वदते । वदु शास्त्रं जानाति । यत्न उत्साहः । तपसि वदते । तत्रोत्सहते । विमतिर्नानामतप्रतिपत्तिः । धर्मे विवदन्ते । विविधं जल्पन्तीत्यर्थः । उपसम्भाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयति मधुरालापेन । उपमन्त्रणं रहस्युपच्छन्दनम् । उपवदते कुलभार्याम् । उपलोभयति ।

## व्यक्तवाचां सहोक्तौ ॥१।३।७९॥

प्राग्वत् । सम्प्रवदन्ते ग्राम्याः । सम्भूय शब्दं कुर्वन्तीत्यर्थः ।

## विवादे वा ॥१।३।८०॥

विरुद्धार्थो वादो विवादः । व्यक्तवाचां सहोक्तौ प्राग्वत् । संप्रवदन्ति संप्रवदन्ते वा मौहूर्ताः । परस्परप्रतिषेधेन युगपद्विरुद्धं वदन्तीत्यर्थः ।

## अनोः कर्मण्यसति ॥१।३।८१॥

अनुवदतेः कर्मण्यसति आत्मनेपदं स्यात् । अनुः सादृश्ये पश्चादर्थे वा ।

अनुवदते चैत्रो मैत्रस्य। अनुवदते आचार्यस्य शिष्यः। व्यक्तवाचामित्येव। अनुवदति वीणा।

## समो गिरः ॥३।३।६६॥

प्रतिज्ञायां प्राग्वत्। सङ्गिरते। अन्यत्र संगिरति ग्रासम्। गिर इति निर्देशाद्गृणातेर्न स्यात्।

## अवात् ॥३।३।६७॥

गिरते प्राग्वत्। अवगिरते। मेद्। अवगृणाति। अवपूर्वस्य गृणाते प्रयोगो नास्तीत्यन्ये।

## उदश्चरः साप्यात् ॥३।३।३१॥

गुरुवचनमुच्चरते। व्युत्क्राम्यतीत्यर्थः। साप्यादिति किम्? धूम उच्चरति। उर्द्धं गच्छतीत्यर्थः।

## समस्तृतीयया ॥३।३।३२॥

प्राग्वत्। रथेन संचरते।

## दामः सम्प्रदानेऽधर्म्ये आत्मने च ॥२।२।५२॥

दास्या सम्प्रयच्छते।

## अननोः सनः ॥३।३।७०॥

समन्ताज्ज्ञानाते कर्तर्यात्मनेपदं स्यात्। अनुपूर्वात्तु न। धर्मं जिज्ञासते। कथमौपधस्यानुजिज्ञासते। अकर्मकात्प्राग्वदिति भविष्यति।

## श्रुवोऽनाङ्प्रतेः ॥३।३।७१॥

समन्तात् शृणोते प्राग्वत्। नाङ्प्रतिपूर्वात्। शुश्रूषते गुरून्। संशुश्रूषते शब्दान्। चैत्रं प्रति शुश्रूषते। अत्र प्रतेर्धातुना न सम्बन्धः।

## स्मृदृशः ॥३।३।७२॥

आभ्यां समन्ताभ्यां कर्तर्यात्मनेपदं स्यात्। सुस्मूर्षते जिनम्। दिदृक्षते देवम्।

## शदेः शिति ॥३।३।४१॥

शीयते। शितीति किम्? शत्स्यति।

## म्रियतेरद्यतन्याशिषि च ॥३।३।४२॥

अमृत। मृषीष्ट। म्रियते।

## स्मिङः प्रयोक्तुः स्वार्थे ॥१।३।९१॥

प्रयोक्तुः सकाशाद्य' स्वार्थं भयस्तत्र वर्तमानाण्णिगन्तात्स्मयते' कर्तर्या त्मनेपद् स्यात् । अस्य चान्तस्याकारोऽकर्तर्यपि स्यात् । जटिलो विस्मापयते ।

## विभेतेर्भीष् च ॥१।३।९२॥

ण्यन्ताद्विभेतेः कर्तर्यात्मनेपद स्यात् प्रयोक्तुः स्वार्थे अस्य च भीषादेश' । पक्षे तस्याकारश्चाकर्तर्यपि । मुण्डो भीषयते । मुण्डो भापयते । प्रयोक्तु' स्वार्थ इत्येव । कुञ्चिकया भाययति ।

## प्रलम्भे गृधिवञ्च्योः ॥१।३।८९॥

आभ्यां णिगन्ताभ्यां वञ्चनेऽर्थे कर्तर्यात्मनेपद स्यात् । बटु गर्धयते । वञ्चयते ।

## लीङ्लिनोऽर्चाभिभवे चाच्चाकर्तर्यपि ॥१।३।९०॥

लियतिलिनातिभ्यां णिगन्ताभ्यामर्चाभिभवयोः प्रलम्भे चार्थे कर्तर्यात्मने पद स्यात् । अनयोश्चान्तस्याकर्तर्यप्याकार' स्यात् । जटाभिरालापयते । पूजा स्मान पूजयतीत्यर्थः । श्येनो वर्तिकामपलापयते । अभिभवतीत्यर्थ' । कस्त्वामुल्ला पयते । वञ्चयते इत्यर्थः ।

## मिथ्योपपदात्कृञोऽभ्यासे ॥१।३।९३॥

मिथ्याशब्दयोगे कृञो णिगन्तादभ्यासार्थे कर्तर्यात्मनेपद स्यात् । पदं मिथ्याकारयते । स्वरादिदोषदुष्टमसकृदुच्चारयति ।

## वदोऽपात् ॥१।३।९७॥

फलवति कर्तरि वदतेरात्मनेपद स्यात् । न्यायमपवदते । फलवतीत्येव । अपवदति पर स्वमावत' ।

## समुदाङ्भ्यो यमेरग्रन्थे ॥१।३।९८॥

एभ्य' परात्यमोऽग्रन्थविषये प्रयोग फलवति कर्तरि आत्मनेपद स्यात् । व्रीहीन् संयच्छते । भारमुद्यच्छते । आयच्छते पक्षम् । फलवतीत्येव । संय च्छति परस्य पक्षम् । अग्रन्थ इति किम् ? वेदमुद्यच्छति । अधिगन्तुमुद्यमं करोतीत्यर्थ' ।

## ज्ञोऽनुपसर्गात् ॥१।३।९६॥

फलवति कर्तरि आत्मनेपद स्यात् । गा जानीत ।

## प्राग्वत् सनः ॥३।३।७४॥

शिशयिषते । पविविषते । निविविक्षते । शिशासति । मुमूर्षति । अत्र हि न शादि म्रियति एव निमित्तं किन्तु शादे' शित् । म्रियतेरद्यतन्याशिषि चे (३।३।४२) ति नात्मनेपदम् ।

## आमः कृगः ॥३।३।७५॥

ईहाञ्चक्रे । एधाञ्चक्रे । कृग इति किम् ? एधाम्बभूव । बिभराञ्चक्रे । बिभराञ्चकारेति द्वयमपि । पापचाञ्चक्रे । पापचाञ्चकार ।

## उत्स्वराद्युजेरयज्ञतत्पात्रे ॥३।३।२६॥

उद' स्वरान्ताच्चोपसर्गात्पराद्युजः कर्तर्यात्मनेपदं स्यात् । यज्ञतत्पात्रवर्जम् । उद्युङ्क्ते । उपयुङ्क्ते । नियुङ्क्ते । अयज्ञतत्पात्र इति किम् ? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ।

## समः क्ष्णोः ॥३।३।२९॥

सम्पूर्वात्क्ष्णौतेः कर्तर्यात्मनेपदं स्यात् । संक्ष्णुते शस्त्रम् । उत्तेजयतीत्यर्थ' ।

## भुनजोऽत्राणे ॥३।३।२७॥

प्राग्वत् । ओदनं भुङ्क्ते । अत्राण इति किम् ? भुनक्ति नृप' । इह पालनं भुजेरर्थः ।

## अणिक्कर्मणिक्कर्तृकाण्णिगोऽस्मृतौ ॥३।३।८८॥

प्रयोक्तृव्यापारे णिगुक्तः, अणिगवस्थायां कर्म णिगवस्थायां कर्ता यस्य सोऽणिक्कर्मणिक्कर्तृकः । तस्माण्णिगन्ताद्धातोरस्मृतौ वर्तमानात्कर्तर्यात्मनेपदं स्यात् । आरोहन्ति हस्तिनं हस्तिपका' । आरोहयते हस्ती हस्तिपकान् । आरुह्यत इत्यर्थः । अणिगिति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयति हस्तिपकान् महामात्रः । आरोहयन्ति महामात्रं हस्तिपका' । अत्र द्वितीयणिगन्तस्य कर्तर्यपि माभूत् आत्मनेपदम् । प्रथमणिक्कर्मत्वात् । कर्मेति किम् ? करणादेः कर्तृत्वे माभूत् । पश्यन्ति भृत्या' प्रदीपेन । दर्शयति प्रदीपो भृत्यान् । णिगिति किम् ? यस्य णिक तस्यैव कर्म कर्ता स्यात् । ततो णिगन्तान्मा भूत् । लुनाति केदारं चैत्रः । लूयते केदारः स्वयमेव । तं प्रयुङ्क्ते । लावयति केदारं चैत्रः । कर्तृग्रहणं किम् ? आरोहन्ति हस्तिनं हस्तिपकाः । तानेनमारोहयति महामात्र' । णिग इति किम् ? आरोहन्ति हस्तिनं हस्तिपका' । तान् आरोहयते हस्तीत्यणिगवस्थायां मा भूत् । अस्मृताविति किम् ? स्मरति वनगुल्मं कोकिल' । स्मरयत्येनं वनगुल्म' ।

परस्मैपदं स्यात्। चलयति। कम्पयति शाखाम्। गमयति ग्रामं गां चैत्रः। आहारार्थेभ्यः। निगारयति भोजयति आशयति चैत्रमन्नम्। सूत्रमध्यापयति शिष्यम्। बोधयति पद्मं रविः। योधयति काष्ठानि। प्रावयति राज्यम्। प्रापयतीत्यर्थः। द्रावयति लोहम्। विलापयतीत्यर्थः। स्रावयति तैलम्। स्यन्दयतीत्यर्थः। नाशयति पापम्। जनयति पुण्यम्। बुधयुधूणामचलनार्थं बोधानां सकर्मकार्थमप्राणिकर्त्रर्थं च वचनम्।

## अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥३।३।१०७॥

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्माण्णिगन्तात्परस्मैपदं स्यात्। आस्ते चैत्रः। आसयति चैत्रम्। शेते चैत्रः। शाययति चैत्रम्।

## परिमुहायमायसपाट्धेवदवसदमादरुचनृतः फलवति ॥३।३।९४॥

फलवतीति भूम्नि अतिशये वा मतुः। यत्क्रियायाः फलमोदनादि यदर्थमियमारभ्यते तद्वति कर्तरि विवक्षिते परिपूर्वान्मुहेराङ्पूर्वाभ्यां यमियसिभ्यां पिबति धेट्वदवसदमादरुचनृतिभ्यश्च णिगन्तेभ्यः कर्तर्यात्मनेपदं स्यात्। परिमोहयते चैत्रम्। आयामयते सर्पम्। आयासयते चैत्रम्। पाययते बटुम्। धापयते शिशुम्। वादयते बालम्। वासयते पान्थम्। स्थापयतीत्यर्थः। दमयतेऽश्वम्। आदयते चैत्रेण। गतिबोधादिसूत्रे आदिवर्जनात् अफलवति आदयत्यन्नं बटुना चैत्रः। आदेर्नेच्छन्त्यन्ये। आदयति चैत्रेण। रोचयते चैत्रम्। नर्तयते नटम्।

## क्यङ्षो न वा ॥३।३।४३॥

तथैवोदाहृतम्। निद्रायति। निद्रायते वा।

## द्युद्भ्योऽद्यतन्याम् ॥३।३।४४॥

अद्युतत्। अद्योतिष्ट। अरुचत्। अरोचिष्ट।

## वृद्भ्यः स्यसनोः ॥३।३।४५॥

वर्त्स्यति। वर्तिष्यते। विवृत्सति। विवर्तिषते।

## कृपः श्वस्तन्याम् ॥३।३।४६॥

कल्प्तासि। कल्पितासे। चिक्लृप्सति। चिकल्पिषते। चिक्लृप्सते। इति धीरूप्यम्॥ इति पदव्यवस्था॥

## पदान्तरगम्ये वा ॥३।३।९९॥

अनन्तरसूत्रपञ्चकेन यदात्मनेपदमुक्तं तत्पदान्तराद्गम्ये फलवति कर्तरि वा स्यात्। स्वं शत्रु परिमोहयति परिमोहयते वा। स्वं यज्ञं यजति यजते वा। स्वं कटं करोति कुरुते वा। स्वमश्वं गमयति गमयते वा। स्वं शिरः कण्डूयति कण्डूयते वा। स्वां गां जानाति जानीते वा। स्वं यावुअपवदति अपवदते वा। स्वान् व्रीहीन् संयच्छति संयच्छते वा। इत्यात्मनेपदविषयः॥

---

अथ परस्मैपदविषयः।

## शेषात्परस्मै ॥३।३।१००॥

कर्तरि। भवति।

## परानोः कृगः ॥३।३।१०१॥

कर्तरि परस्मैपदं स्यात्। पराकरोति। अनुकरोति।

## प्रत्यभ्यतेः क्षिपः ॥३।३।१०२॥

प्रतिक्षिपति। अभिक्षिपति। अतिक्षिपति। ईदित्वात्कर्तरि फलवति प्राप्तस्यापवादोऽयम्। एवमुत्तरसूत्रद्वयेऽपि।

## प्राद्वहः ॥३।३।१०३॥

प्रवहति।

## परेर्मृषश्च ॥३।३।१०४॥

परिपूर्वान्मृषेर्वहेश्च कर्तरि परस्मैपदं स्यात्। परिमृष्यति। परिवहति। णौ आदिकस्य परिमर्षति।

## व्याङ्परे रमः ॥३।३।१०५॥

परस्मैपदं कर्तरि। विरमति। आरमति। परिरमति। ङित्वादात्मनेपदापवादः।

## वोपात् ॥३।३।१०६॥

वा परस्मैपदं स्यात्। भार्यामुपरमति उपरमते वा। अन्तर्भूतणिगर्थोऽरमिरकर्मकः। उपरमति। उपरमते वा सन्तापः। उपरमति उपरमते वा पापात्।

## चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजन ॥३।३।१०८॥

चलेरर्थः कम्पनम्। तदर्थेभ्य आह[illegible] णिगन्तेभ्यो कर्तरि

परस्मैपदं स्यात्। चलयति। कम्पयति शाखाम्। गमयति ग्रामं माणवकम्। आहारा र्थेभ्य। निगारयति भोजयति आशयति चैत्रमन्नम्। सुप्तमध्यापयति शिष्यम्। बोधयति पद्मं रविः। योधयति काष्ठानि। नाशयति राज्यम्। प्रापयतीत्यर्थः। द्रावयति लोहम्। विलापयतीत्यर्थः। स्रावयति तैलम्। स्यन्दयतीत्यर्थः। नाशयति पापम्। जनयति पुण्यम्। मुषुक्षुणामचलनार्थं शेषाणां सकर्मकार्थमप्राणिकर्त्रर्थं च वचनम्।

# अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥३।३।१०७॥

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्माण्णिगन्तात्परस्मैपदं स्यात्। आस्ते मैत्रः। आसयति मैत्रम्। शेते मैत्रः। शाययति मैत्रम्।

# परिमुहायमायसपाद्घेवदवसदमादरुचनृतः फलवति ॥३।३।९४॥

फलवतीति भूम्नि अतिशये वा मतुः। यत्क्रियायाः फलमोदनादि यदर्थं क्रियमारभ्यते तद्वति कर्तरि विवक्षिते परिपूर्वान्मुहेराङ्पूर्वाभ्यां यमियसिभ्यां पिबति धेट्वदवसदमादरुचनृतिभ्यश्च णिगन्तेभ्यः कर्तर्यात्मनेपदं स्यात्। परिमोहयते चैत्रम्। आयामयते सर्पम्। आयासयते मैत्रम्। पाययते बटुम्। धापयते शिशुम्। वादयते बालम्। वासयते पान्थम्। स्वापयतीत्यर्थः। दमयतेऽश्वम्। आदयते चैत्रेण। गतिबोधादिसूत्रे आदिवर्जनात् अफलवति आदयत्यन्नं बटुना चैत्रः। आदेर्नेच्छन्त्यन्ये। आदयति चैत्रेण। रोचयते मैत्रम्। नर्तयते नटम्।

# क्यङ्षो न वा ॥३।३।४३॥

तथैवोदाहृतम्। निद्रायति। निद्रायते वा।

# द्युद्भ्योऽद्यतन्याम् ॥३।३।४४॥

अद्युतत्। अद्योतिष्ट। अरुचत्। अरोचिष्ट।

# वृद्भ्यः स्यसनोः ॥३।३।४५॥

वर्त्स्यति। वर्तिष्यते। विवृत्सति। विवर्तिषते।

# कृपः श्वस्तन्याम् ॥३।३।४६॥

कल्प्तासि। कल्पितासे। चिक्लृप्सति। चिकल्पिषते। चिकल्प्सते। इति मैरुप्यम्॥ इति पदव्यवस्था॥

## पदान्तरगम्ये वा ॥३।३।९९॥

अनन्तरसूत्रप्रपञ्चकेन यदात्मनेपदमुक्तं तत्पदान्तराद्गम्ये फलवति कर्तरि वा स्यात्। स्वं शत्रुं परिमोहयति परिमोहयते वा। स्वं यज्ञं यजति यजते वा। स्वं कटं करोति कुरुते वा। स्वमर्थं गमयति गमयते वा। स्वं शिरः कण्डूयति कण्डूयते वा। स्वां गां जानाति जानीते वा। स्वं मातुरपवदति अपवदते वा। स्वान् व्रीहीन् संयच्छति संयच्छते वा। इत्यात्मनेपदविषयः॥

---

अथ परस्मैपदविषयः।

## शेषात्परस्मै ॥३।३।१००॥

कर्तरि। भवति।

## परानोः कृगः ॥३।३।१०१॥

कर्तरि परस्मैपदं स्यात्। पराकरोति। अनुकरोति।

## प्रत्यभ्यतेः क्षिपः ॥३।३।१०२॥

प्रतिक्षिपति। अभिक्षिपति। अतिक्षिपति। ईदित्त्वात्कर्तरि फलवति प्राप्तस्यापवादोऽयम्। एवमुत्तरसूत्रद्वयेऽपि।

## प्राद्वहः ॥३।३।१०३॥

प्रवहति।

## परेर्मृषश्च ॥३।३।१०४॥

परिपूर्वान्मृषेर्वहेश्च कर्तरि परस्मैपदं स्यात्। परिमृष्यति। परिवहति। चौरादिकस्य परिमर्षयति।

## व्याङ्परे रमः ॥३।३।१०५॥

परस्मैपदं कर्तरि। विरमति। आरमति। परिरमति। ङित्त्वादात्मनेपदापवादः।

## वोपात् ॥३।३।१०६॥

वा परस्मैपदं स्यात्। भार्यामुपरमति उपरमते वा। अन्तर्भूतणिगर्थो रमिरत्र सकर्मकः। उपरमति। उपरमते वा सन्तापः। उपरमति उपरमते वा पापात्।

## चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजनः ॥३।३।१०८॥

चलेरर्थः कम्पनम्। तदर्थेभ्य आहारार्थेभ्य इङादिभ्यश्च णिगन्तेभ्यः कर्तरि

परस्मैपदं स्यात्। चलयति । कम्पयति शाखाम् । गमयति ग्रामं गाङ्गेयः । आहारयति पायस मैत्रः । निगारयति भोजयति आशयति चैत्रमन्नम् । सूत्रमध्यापयति शिष्यम् । पोषयति पद्म रविः । योधयति काष्ठानि । प्रावयति राज्यम् । प्लावयतीत्यर्थः । द्रावयति लोहम् । विलापयतीत्यर्थः । स्रावयति तैलम् । स्यन्दयतीत्यर्थः । नाशयति पापम् । जनयति पुण्यम् । बुद्ध्यर्थानामचलनार्थं बोधार्थं सकर्मकार्थमप्राणिकर्तृकार्थं च वचनम् ।

# अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥३।३।१०७॥

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्माण्णिगन्तात्परस्मैपदं स्यात् । आस्ते मैत्रः । आसयति मैत्रम् । शेते मैत्रः । शाययति मैत्रम् ।

# परिमुहायमायसपाट्धेवदवसदमादरुचनृतः फलवति ॥३।३।९४॥

फलवतीति भूम्नि अतिशये वा मतुः । यत्क्रियायाः फलमोऽन्यादि [illegible] मियमारभ्यते तद्वति कर्तरि विवक्षिते परिपूर्वान्मुहरायम्यामा [illegible] पिबति धेट्वदवसदमाद्रुच्नृतिभ्यश्च णिगन्तेभ्यः कर्तर्यात्मनेपदं [illegible] । [illegible] मोहयते चैत्रम् । आयामयते सर्पम् । आयासयते मैत्रम् । [illegible] पाययते शिशुम् । धापयते बालम् । वादयते पान्थम् । [illegible] यतेऽश्वम् । वासयते चैत्रेण । गतिबोधार्थेभ्यो [illegible] यते यमुना चैत्रः । आदर्शनं [illegible] । आरुचयति [illegible] नर्तयते नटम् ।

# क्यङ्षो न वा ॥३।३।९८॥

तत्रैवोदाहृतम् । निद्रायति । निद्रायते वा ।

# द्युद्भ्योऽद्यतन्याम् ॥३।३।४४॥

अथ भावोक्तिकर्मोक्तिरूपद्विविधवक्तोक्तिसाधनम्। यथा तत्र तत्साप्याविना आत्मनेपदमेव।

## क्यः शिति ॥३।४।७०॥

सर्वस्माद्धातोर्भावकर्मविहिते शिति क्यः स्यात्। अत्र कर्मणः प्रत्ययेनोक्तत्वात् क्रियाया कर्मापेक्षार्थवचमामि। पच्यते मन्था। पच्येते श्लोकौ। पच्यन्ते शास्त्राणि। भावो भावना। उत्पादना क्रिया। सा च धात्वर्थेन सर्वधातुवाच्या। भावार्थप्रत्ययेन सैवानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथम एव। विभक्तिवाच्याया भावनाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीते नं द्विवचनादि किन्तु एकवचनमेव। तस्यौत्सर्गिकत्वेन सख्यानपेक्षत्वात्। अनुक्तत्वात्कर्तरि तृतीया। त्वया मया अन्यैश्च भूयते। अद्यतन्याम्॥

## भावकर्मणोः ॥३।४।६८॥

सर्वस्माद्धातोर्भावकर्मविहिते अद्यतन्यास्ते परे ञिच्प्रत्ययः स्यात्तलुक् च।

## स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा ॥३।४।६९॥

स्वरान्ताद्ग्रहादेश्च विहितेषु भावे कर्मणि चार्थे स्यसिजाशीःश्वस्तनीषु ञिट्प्रत्ययो वा स्यात्। अनिटां धातूनामिड्विधानार्थं सेटां धातूनामिटो ञिट्कल्पनात्पाक्षिकवृद्धिविधानार्थमिदं सूत्रम्। अभावि। भाविषीष्ट। भविषीष्ट। भाविता। भविता। भाविष्यते। भविष्यते। अभाविष्यत। अभविष्यत। परोक्षायां बभूवे। पच्यते। अपाठि। अपठिषाताम्। अपठिषत। पेठे। पठिषीष्ट। पठिता। पठिष्यते। अपठिष्यत।

## रि शक्याशीर्ये ॥४।३।११०॥

क्रियते। अकारि। अकारिषाताम्। अकृषाताम्। अकारिषत। अकृषत। चक्रे। कारिषीष्ट। कृषीष्ट। कर्ता। कारिता। करिष्यते। कारिष्यते। अकारिष्यत। अकरिष्यत।

## ईर्व्यञ्जनेऽयपि ॥४।३।९७॥

गीयते। पीयते। स्थीयते। सीयते। दीयते।

## आत ऐः कृञ्ञौ ॥४।३।५३॥

आदन्तस्य धातोर्ञ्णिति कृति ञौ च ऐः स्यात्। अदायि। अदायिषाताम्। पक्षे।

## इश्च स्तादः ॥४।३।४१॥

अविपाताम् । अविपत । दवे । दायिपीष्ट । दासीष्ट । दायिता । दाता । दायिष्यते । दास्यते । अनुपूर्वत्वे सकर्मकस्य भूधातोः । अनुभूयते स्रुग्च स्वामिना । अनुभूयसे त्व मया शास्त्री । अनुभूयेऽहं अमैशोमी । अन्वभावि भवो भवता । ण्यन्तस्ये । भाव्यते । णेर्लुकि । अभावि । अभाविपाताम् । अभावयिपाताम् । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामहे । परोक्षायामेकारे न इकार इति पाणिनि । भाविपीष्ट । भावयिपीष्ट । भाविता । भावयिता । भाविष्यते । भावयिष्यते । सन्नन्तस्ये तु । बुभूष्यते । अबुभूषिष्ट । बुभूषाञ्चक्रे । बुभूषिपीष्ट । बुभूषिता । बुभूषिष्यते । यङन्ते । बोभूय्यते । अबोभूयिष्ट । बोभूयाञ्चक्रे । बोभूयिपीष्ट । बोभूयिष्यते । यङ्लुपि । अबोभूविष्ट । बोभूयाञ्चक्रे । बोभाविपीष्ट । बोभविता । बोभाविता । स्तूयतेऽर्हन् । अस्तावि । अस्ताविपाताम् । अस्तोपाताम् । तुष्टुवे । स्ताविपीष्ट । स्तोपीष्ट । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते ।

## क्ययङाशीर्ये ॥४।३।१०॥

सयोगादृदन्ताद्धातोरर्तेश्च क्ये यकि आशिषि ये गुण स्यात् । अर्यते । स्मर्यते । आरिता । अर्ता । परत्वादित्यस्वाय णिट् । संस्क्रियते । औपदेशिक संयोगग्रहणात्क्ययङाशीर्ये (४।३।१०) इति न गुणः । नो व्यञ्जने (४।२।४८)ति न लुक् । स्रस्यते । उदित्त्वात् । न ध्यते । नाघ्न नस्य लुक् । यजादेर्वृति । इज्यते ।

## क्ङिति यि शय् ॥४।३।१०५॥

शीङ् । शय्यते ।

## तनः क्ये ॥४।२।६३॥

अस्य आकारोऽन्तादेशो वा स्यात् । तायते । तन्यते ।

## ये न वा ॥४।२।६२॥

जायते । जन्यते । सायते । सन्यते । खायते । खन्यते ।

## तपः कर्त्रनुतापे च ॥३।४।९१॥

तपधातो कर्मकर्तर्यनुतापे चार्थे ञिच् न स्यात् । अनुतापग्रहणाद्भावे कर्मणि च । अन्यथातस विसर्ग स्वयमेव । कर्मरि । अतप्त तपांसि साधु । अनुतापेच । अन्वतप्त चैत्रेण । अन्वतप्त पापः पापकार्येण । पापकार्य कर्तृ । तेनाभ्याहत इत्यर्थ । कमण्यघनी । पीयते । अपायि । अपायिपाताम् । अपिपाताम् । अग्लापिपाताम् । अग्लासाताम् । दृश्यते ।

अथ भावोक्तिकर्मोक्तिरूपद्विविधवाच्योक्तिसाधनम्। यथा तत्र तत्साध्या-विना आत्मनेपदमेव।

## क्यः शिति ॥३।४।७०॥

सर्वस्माद्धातोर्भावकर्मविहिते शिति क्यः स्यात्। अत्र कर्मणः प्रत्ययेनोक्तत्वात् क्रियायाः कर्मापेक्षार्थवचनानि। पच्यते ग्रन्थः। पच्येते श्लोकौ। पच्यन्ते शास्त्राणि। भावो भावना। उत्पादना क्रिया। सा च धात्वर्थेन सर्वधातुवाच्या। भावार्थप्रत्ययेन सैवानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावादन्यपुरुष एव। विभक्तिवाच्याया भावनाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किन्तु एकवचनमेव। तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात्। अनुक्तत्वात्कर्तरि तृतीया। त्वया मया अन्यैश्च भूयते। अद्यतन्याम्॥

## भावकर्मणोः ॥३।४।६८॥

सर्वस्माद्धातोर्भावकर्मविहिते अद्यतन्यास्ते परे ञिच्प्रत्ययः स्यात्तलुक् च।

## स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा ॥३।४।६९॥

स्वरान्ताद्ग्रहादेश्च विहितेषु भावे कर्मणि चार्थे स्यसिजाशीःश्वस्तनीषु ञिट्प्रत्ययो वा स्यात्। अनिटां धातूनामिड्विधानार्थं सेटां धातूनामिटो ञिट्क धनात्पाक्षिकवृद्धिविधानार्थमिदं सूत्रम्। अभावि। भाविषीष्ट। भविषीष्ट। भाविता। भविता। भाविष्यते। भविष्यते। अभाविष्यत। अभविष्यत। परोक्षायां बभूवे। पठ्यते। अपाठि। अपठिषाताम्। अपठिषत। पेठे। पठिषीष्ट। पठिता। पठिष्यते। अपठिष्यत।

## रिः शक्याशीर्ये ॥४।३।११०॥

क्रियते। अकारि। अकारिषाताम्। अकृषाताम्। अकारिषत। अकृषत। चक्रे। कारिषीष्ट। कृषीष्ट। कर्ता। कारिता। करिष्यते। कारिष्यते। अकारिष्यत। अकरिष्यत।

## ईर्व्यञ्जनेऽयपि ॥४।३।९७॥

गीयते। पीयते। स्थीयते। सीयते। दीयते।

## आत ऐः कृञ्ञौ ॥४।३।५३॥

आदन्तस्य धातोर्ञ्णिति कृति ञौ च ऐः स्यात्। अदायि। अदायिषाताम्। पक्षे।

## इश्च स्वादः ॥४।३।४१॥

अविपाताम् । अदिषत । घदे । दायिषीष्ट । दासीष्ट । दायिता । दाता । दायिष्यते । दास्यते । अनुपूर्वस्य सकर्मकस्य भूधातोः । अनुभूयते सुख स्वामिना । अनुभूयसे त्वं मया शास्त्री । अनुभूयेऽहं जनैर्ज्ञानी । अन्वभावि भवो भवता । ण्यन्तस्ये । भाव्यते । णेर्लुकि । अभावि । अभाविषाताम् । अभावयिषाताम् । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामहे । परोक्षायामेकारे म इकार इति पाणिनिः । भाविषीष्ट । भावयिषीष्ट । भाविता । भावयिता । भाविष्यते । भावयिष्यते । सन्नन्तस्ये तु । बुभूष्यते । अबुभूषिष्ट । बुभूषाञ्चक्रे । बुभूषिषीष्ट । बुभूषिता । बुभूषिष्यते । यङन्ते । बोभूय्यते । अबोभूयिष्ट । बोभूयाञ्चक्रे । बोभूयिषीष्ट । बोभूयिष्यते । यङ्लुपि । अबोभूविष्ट । बोभूयाञ्चक्रे । बोभाविषीष्ट । बोभविता । बोभाविता । स्तूयतेऽर्हन् । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् । तुष्टुवे । स्ताविषीष्ट । स्तोषीष्ट । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते ।

## क्ययङाशीर्ये ॥४।३।१०॥

संयोगादृदन्ताद्धातोरर्तेश्च क्ये यकि आशिषि ये गुणः स्यात् । अर्यते । स्मर्यते । आरिता । अर्ता । परस्वाशिष्यस्वाच्च सिद्धं । संस्क्रियते । औपदेशिक संयोगग्रहणात्क्ययङाशीर्ये (४।३।१०) इति न गुणः । नो व्यञ्जने(४।२।४८)ति न लुक् । स्रस्यते । उदित्वात् । मन्थ्यते । नात्र नस्य लुक् । यजादेर्वृति । इज्यते ।

## क्लृति यि शय् ॥४।३।१०५॥

शीङ् । शय्यते ।

## तनः क्ये ॥४।२।६३॥

अस्य आकारोऽन्तादेशो वा स्यात् । तायते । तन्यते ।

## ये न वा ॥४।२।६२॥

आयते । जन्यते । सायते । सन्यते । खायते । खन्यते ।

## तपः कर्त्रनुतापे च ॥३।४।९१॥

तपेर्धातोः कर्मकर्तर्यनुतापे चार्थे ञिच् न स्यात् । अनुतापग्रणाद्भावे कर्मणि च । अन्यथातस्तप्यते स्वयमेव । कर्मरि । अतस्त तपांसि साधुः । अनुतापेच । अन्यतस पैत्रेण । अन्वतपत पापः पापकार्येण । पापकार्यं कर्तृ । तेनान्या दत्त इत्यर्थः । कमण्यपतनी । पीयते । अपायि । अपायिपाताम् । अपिपाताम् । अग्लायिपाताम् । अग्लासाताम् । दृश्यते ।

## ञिणवि घन् ॥४।३।१०१॥

हन्तेर्घातो । अघानि । अघानिषाताम् । अहसाताम् । पक्षे वधादेशो । अवधि । अवधिषाताम् । अघानिष्यत । अहनिष्यत । ग्राह्यते । अग्राहि । अग्राहिषाताम् । अग्रहीषाताम् । अग्राहिढ्वम् । अग्राहिध्वम् । अग्रहीध्वम् । अग्रहीढ्वम् । जगृहे । ग्राहिषीष्ट । ग्राहिषीढ्वम् । ग्रहीषीढ्वम् २ । ग्राहिता । ग्रहिता । ग्राहिष्यते । दृश्यते । अदर्शि । अदर्शिषाताम् । सिच् किस्वाद्वान्त । अदृक्षाताम् । ददृशे । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । दर्शिष्यते । द्रक्ष्यते । गिरतेश्यत पां ध्वमि चतुरमिकत्यातम् । तथाहि । जिटी न दीर्घ । अगारिध्वम् । पक्षे त्विटि वृतो नवे ( ४।४।३८ ) ति वा दीर्घः । अगरिध्वम् । अगरीध्वम् । एवां प्रमाणां लर्वं हस्वं द्विस्वयं चेति पञ्चविकल्पिकानि इति षण्णवतिः । इट्सिजा शिषोरात्मने (४।४।३६) इति विकल्पादिडभावे ऋवर्णात् (४।३।३६) ति किस्वम् । ऋतां क्ङितीर् ( ४।४।११६ ) म्वादेर्नामिन ( २।१।६३ ) इति दीर्घः । नाम्यन्तात्परो क्षायतन्याशिषो धो ढ ( २।१।८० ) इति नित्यं ढत्वम् । अगीर्ढ्वम् । एवमानां त्रिस्वविकल्पेऽष्टौ । एकषण्णवत्या सह सङ्कलने उक्ता सङ्ख्या सिद्धा । चेटि दीर्घे भावदीर्घे लत्वे द्विस्वत्रये तथा । विकल्पनेष्टरूपाणां शतं चेदाधिकं मतम् ॥ १ ॥ प्रमोकुष्प्यापारे णिग् कर्मणि क्य णिलुक् च । शम्यते मोहो देवदत्तेन । घटादेश्चो दीर्घस्तु वा ञिणम्परे (४।२।२४) इति शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते यङन्ताण्णिचि । शंशम्यते । अशंशामि । अशंशमि । शंशामिता । शंशमिता । शंशमयिता । यङ्लुबन्ताण्णिचि अप्येवम् । माव्यमते मिटिदीर्घो नेति विशेषः । ण्यन्तस्याभावे शम्यते मुनिना । अशामि । अशमि । अमोऽकम्यमिचम ( ४।२।२६ ) आचामि । अकामि । अयामि । वम हिंसायां व्यञ्जनान्त । न जनवध ( ४।३।५४ ) इति न वृद्धिः अवधि । जागुर्ञिणवि ( ४।३।५२ ) इति वृद्धौ अजागारि ।

## भञ्जेर्ञौ वा ॥४।२।४८॥

भञ्जेरुपान्त्यस्य ञौ परे वा लुक् स्यात् । अभाजि । अभञ्जि ।

## ञिख्णमोर्वा ॥४।४।१०६॥

लभतेर्ञौ खणमि च परे स्वरात्परो मोऽन्तो वा स्यात् । अलम्भि । अलाभि ।

## उपसर्गात्खल्घञोश्च ॥४।४।१०७॥

उपसर्गात्परस्य लभते खल्घञोश्च तथा ञिख्णमो परयोः स्वरात्परोऽमो ऽन्तो भवति । प्रालम्भि । द्विकर्मकाणां तु—"गौणे कर्म दुहादीनां प्रत्ययो वक्ति कर्मजः । न्यादीनां कमणो मुख्यस्योक्तस्य प्रत्यया यथा ॥ १ ॥ गत्यर्थाकर्मकाणां णिगन्तानां मुख्यकर्मणि । बोधाहारार्थशब्दकर्मकाणां तु ण्यन्तानामुभयत्र ॥ २ ॥

## अथ कर्मकर्तृप्रक्रिया।

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्वं करणादित्वेऽपि सम्प्रति कर्तृत्वात् कर्तरि विभक्तिः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः स्युः। तेभ्यो भावे कर्तरि च विभक्तिः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु।

## एकधातौ कर्मक्रिययैकाकर्मक्रिये ॥३।४।८६॥

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वं दृष्टया एकाऽभिन्ना सम्प्रत्यकर्मिका क्रिया यस्य तस्मिन् कर्तरि कर्मकर्तृरूपे धातोर्यक्चिण्यात्मनेपदानि स्युः। उक्तं च,

"यत्र कर्मैव कर्तृत्वं याति कर्ता तु नोच्यते।
यक्चिण्यात्मनेपदं धातोरुक्तिः सा कर्मकर्तरि ॥ १ ॥"

कर्तुरुक्तत्वात्प्रथमोच्यते। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। अकारि कटः स्वयमेव। करिष्यते कटः स्वयमेव। ननु भावे विभक्तौ कर्तुर्द्वितीया स्यात् कर्तर्येव कर्मविवक्षणात्। इति चेन्न। विभक्तिवाच्य एव कर्ता कर्मक्रियामनुप्राप्नोति। तत एव भावे प्रत्ययादीनामुपस्थितिः। अतएव कृत्यक्तखलर्थाः कर्मकर्तरि न स्युः किन्तु भाव एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्थां कर्मक्रिययेति किम्? करणाधिकरणाभ्यामभिन्नक्रिये पूर्वोक्ते साध्वसिश्छिनत्तीत्यादौ मा भूत्। एकक्रिय इति किम्? स्रवत्युदकम् कुण्डिका। स्रवत्युदकम् कुण्डिकायाः। अत्र विसृजति निष्क्रामतीति क्रियाभेदान्नैकक्रियत्वम्। अकर्मकक्रिय इति किम्? भिद्यमानः कुसूलः पात्राणि भिनत्ति। किञ्च कर्तृस्थक्रियेभ्योऽपि माभूत् कर्मक्रिययेत्यत्र कर्मपदोपादानात्। गच्छति ग्रामः। आरोहति हस्तीति। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया भिन्ना तुल्या चेतरत्र। नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलक्ष्यते। करोतिरुत्पादनार्थः उत्पत्तिश्च कर्मस्था। अनेन कारिष्यते घट इत्यादिषु णेर्धातोर्न कर्मकर्तृता उक्तिः। अकर्मक्रिय इति कर्तृविशेषणात्।

## पचिदुहेः ॥३।४।८७॥

पचिदुहिभ्यामेकधातौ कर्मस्थक्रियया पूर्वदृष्टया अकर्मिकया सकर्मिकया वा एकक्रिये कर्तरि कर्मकर्तृरूपे यक्चिण्यात्मनेपदानि स्युः। अपवादविषयमुपस्था। अपा

१ क्रिया विकृतिर्विकारकत्वं च। [illegible]

२ [illegible]

## ञिणवि घन् ॥४।३।१०१॥

हन्तेर्घातोः । अघानि । अघानिषाताम् । अहसाताम् । पक्षे वधादेशो । अवधि । अवधिषाताम् । अघानिष्यत । अहनिष्यत । ग्राह्यते । अग्राहि । अग्राहिषाताम् । अग्रहीषाताम् । अग्राहिढ्वम् । अग्राहिध्वम् । अग्रहीध्वम् । अग्रहीढ्वम् । जगृहे । ग्राहिषीष्ट । ग्राहिषीढ्वम् । ग्रहीषीढ्वम् २ । ग्राहिता । ग्रहीता । ग्राहिष्यते । दृश्यते । अदर्शि । अदर्शिषाताम् । सिच' कित्वादात्मने' । अदृक्षाताम् । ददृशे । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । दर्शिष्यते । द्रक्ष्यते । गिरतेरद्यतन्यां ध्वमि चतुरधिकशतम् । तथाहि । ञिटी न दीर्घ' । अगारिध्वम् । पक्षे स्विटि वृतो नवे (४।४।३५) ति वा दीर्घः । अगरिढ्वम् । अगरीढ्वम् । एषां जपानां सर्वं ह्रस्वं द्वित्वत्रयं चेति पञ्चपेङ्क्तिस्थिकानि इति षण्णवतिः । इट्सिजा-शिषोरात्मने (४।४।३६) इति विकल्पादिडभावे ऋवर्णादि (४।३।३६) ति कित्वम् । ऋतां क्ङितीर् (४।४।११६) भ्वादेर्नामिन (२।१।६३) इति दीर्घ' । नाम्यन्तात्परो-क्षाद्यतन्याशिषो धो ढ (२।१।८०) इति नित्यं ढत्वम् । अगीर्ढ्वम् । ढत्वमानां द्वित्वविकल्पेऽष्टौ । चतुष्पण्णवत्या सह सङ्कलने उक्ता संख्या सिद्धा । चेटि दीर्घे भावदीर्घे ह्रस्वे द्वित्वत्रये तथा । विकल्पनेष्टरूपाणां शतं वेद्याधिकं मतम् ॥ १ ॥ प्रयोक्तृव्यापारे णिग् कर्मणि क्य' णिलुक् च । शाम्यते मोहो देवदत्तेन । घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे (४।२।२४) इति शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते यङन्ताण्णिचि । शंशम्यते । अशंशामि । अशंशमि । शंशामिता । शंशमिता । शंशमयिता । यङ्लुबन्ताण्णिचि अप्येवम् । भाष्यमते ञिटि दीर्घो नेति विशेष' । णपमत्वाभावे शम्यते मुनिना । अशामि । अशमि । ञमोऽकम्यमिचमः (४।३।५५) आचामि । अकामि । अवामि । वध हिंसायां व्यञ्जनान्त' । न जनवधः (४।३।५४) इति न वृद्धि' अवधि । जागुर्ञिणवि (४।३।५२) इति वृद्धौ अजागारि ।

## भञ्जेर्ञौ वा ॥४।२।४८॥

भञ्जेरुपान्त्यस्य ञौ परे वा लुक् स्यात् । अभाजि । अभञ्जि ।

## ञिख्णमोर्वा ॥४।४।१०६॥

लभतेर्ञौ ख्णमि च परे स्वरात्परो मोऽन्तो वा स्यात् । अलम्भि । अलाभि ।

## उपसर्गात्खल्घञोश्च ॥४।४।१०७॥

उपसर्गात्परस्य लभते' खल्घञोश्च तथा ञिख्णमो' परयोः स्वरात्परोऽमो न्तो भवति । प्रालम्भि । द्विकर्मकाणां तु—'गौणे कर्मे दुह्यादीनां प्रत्ययो वक्ति कर्मजः । ण्यादीनां कर्मणो मुख्यस्योक्तत्वे प्रत्यया यथा ॥ १ ॥ गत्यर्थाकर्मकाणां णिगन्तानां मुख्यकर्मणि । बोधाहारार्थशब्दकर्मकाणां तु उभयत्राप्युभयत्र ॥ २ ॥

## अथ कर्मकर्तृप्रक्रिया ।

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते । स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्वं करणादित्वेऽपि सम्प्रति कर्तृत्वात् कर्तरि विभक्तिः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः स्युः । तेभ्यो भावे कर्तरि च विभक्तिः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्तरि तु ।

## एकधातौ कर्मक्रिययैकाकर्मक्रिये ॥३।४।८६॥

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वं दृष्टा एकाऽभिन्ना सम्प्रत्यकर्मिका क्रिया यस्य तस्मिन् कर्तरि कर्मकर्तृरूपे धातोर्लिङ्क्यात्मनेपदानि स्युः । उक्तं च,

" यत्र कर्मैव कर्तृत्वं याति कर्ता तु नोच्यते ।
लिङ्क्यात्मनेपदं धातोरुक्तिः सा कर्मकर्तरि ॥ १ ॥"

कर्तुरुक्तत्वात्प्रथमोच्यते । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । अकारि कटः स्वयमेव । करिष्यते कटः स्वयमेव । ननु भावे विभक्तौ कर्तुर्द्वितीया स्यात् कर्तर्येव कर्मविवक्षणात् । इति चेन्न । विभक्तिवाच्य एव कर्ता कर्मक्रियामनुपतति । तत एव भावे प्रत्ययादीनामुपस्थितिः । अतएव कृत्यक्तखलर्थाः कर्मकर्तरि न स्युः किन्तु भाव एव । भेत्तव्यं कुसूलेन । ननु पचिभिदी कर्मस्थौ कर्मक्रिययेति किम् ? करणाधिकरणाभ्यामभिन्नक्रिये पूर्वोक्ते साध्वसिश्छिनत्तीत्यादौ मा भूत् । एकक्रिय इति किम् ? अवस्रुतम् उदकम् कुण्डिका । अवस्रुतम् उदकम् कुण्डिकायाः । अत्र विस्रुजति निष्क्रामतीति क्रियाभेदान्नैकक्रियत्वम् । अकर्मकक्रिय इति किम् ? भिद्यमानः कुसूलः पात्राणि भिनत्ति । किञ्च कर्तृस्थक्रियेभ्योऽपि माभूत् कर्मक्रिययेत्यत्र कर्मपदोपादानात् । गच्छति ग्रामः । आरोहति हस्तीति । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया भिन्ना तुल्या नेतरत्र । नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलक्ष्यते । करोतिरुत्पादनार्थे उत्पत्तिश्च कर्मस्था । अनेन कारिष्यते घट इत्यादिर्यत्रार्थधातोर्न कर्मकर्तृता यक्ति । अकर्मक्रिय इति कर्तृविशेषणात् ।

## पचिदुहेः ॥३।४।८७॥

पचिदुहिभ्यामेकधातौ कर्मस्थक्रियया पूर्वदृष्टा अकर्मिकया सकर्मिकया वा एकक्रिये कर्तरि कर्मकर्तृरूपे लिङ्यात्मनेपदानि स्युः । अपवादविषयस्तुक्तता । अपा

---

१ क्रिया विच्छित्तिर्विकारमर्थं च । सैव दृश्यते कर्तृत्वं यातु ...कर्मत्वकर्तृत्वान्यतरत्वाभावादुपपन्ने ... भिन्नक्रियस्य ... कर्तृवाक्यविवक्षा ।

२ एवेन ... करोतिरिति ... इति वैयाकरणेभ्यः ...

चि ओदनः स्वयमेव । पच्यते ओदनः स्वयमेव । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । अघुक्षत । औदुम्बरं फलं पचति वायुः । उदुम्बरं फलं पच्यते । अकर्मकस्य पूर्वेण सिद्धे सकर्मकार्थं वचनम् ।

## तपेस्तपःकर्मकात् ॥३।४।८५॥

तपःकर्मकात् तपेरर्थान्तरे वृत्तेः कर्तरि ञिक्यात्मनेपदानि स्युः । अन्यतः तपः साधुः । तेपे तपांसि साधुः । तपिरत्र करोत्यर्थः ।

## न कर्मणा ञिच् ॥३।४।८८॥

पचिदुहोः कर्मणा योगेऽनन्तरोक्ते कर्तरि ञिच् न स्यात् । अपक्वोदुम्बरः फलं स्वयमेव । अदुग्ध गौः पयः स्वयमेव ।

## रुधः ॥३।४।८९॥

रुधो धातोरनन्तरोक्ते कर्तरि ञिच् न स्यात् । अरुद्ध गौः स्वयमेव ।

## स्वरदुहो वा ॥३।४।९०॥

स्वरान्ताद्धातोर्दुहेश्चानन्तरोक्ते कर्तरि ञिच् वा स्यात् । अकृत अकारि कटः स्वयमेव । अलविष्ट अलावि केदारः स्वयमेव । अदुग्ध अदोहि गौः स्वयमेव ।

## णिस्नुश्र्यात्मनेपदाकर्मकात् ॥३।४।९२॥

ण्यन्ताद्धातोः स्नुश्रिभ्यां च तथाऽऽत्मनेपदविषये विधौ अकर्मकेभ्यश्च कर्मकर्तरि ञिच् न स्यात् । पचत्योदनं मैत्रः । तं प्रायुङ्क्त अपीपचत् ओदनं चैत्रेण मैत्रः । पुनरोदनस्य सुकरत्वेन कर्तृत्वे अपीपचतौदनः स्वयमेव । प्रास्नावीद्गां देवदत्तः । प्रास्नोष्ट गौः स्वयमेव ।

## स्नोः ॥४।४।५२॥

स्नोः परस्य स्तादशित आदिरिट् स्यात् नत्वात्मनेपदे । उदशिश्रियत् दण्डं दण्डी । उदशिश्रियद् दण्डः स्वयमेव । आत्मनेपदाकर्मकाः । व्यकार्षीत् सैन्धवं मैत्रः वस्त्रायति सोऽर्थः । व्यकृत सैन्धवः स्वयमेव । विकरोति धातुर्वस्त्रमेऽन्तर्भूतणिगर्थः कर्मस्थक्रिया ।

## सृजः श्राद्धे ञिक्यात्मने तथा ॥३।४।८४॥

सृजो धातोः श्रद्धावति कर्तरि ञिक्यात्मनेपदानि स्युः । तथा यथापूर्वं विहितानि । असर्जि मालां धार्मिकः । सृज्यते मालां धार्मिकः । स्रक्ष्यते मालां धार्मिकः ।

## भूषार्थसन्किरादिभ्यश्च चिण्यकौ ॥३।४।९३॥

भूषार्थेभ्यः सन्नन्तेभ्यः किरादिभ्यश्चकारात् णिश्रुभ्यामात्मनेपदाकर्मकेभ्यो धातुभ्यः कर्मकर्तरि चिण्यकौ न स्तः । अलमकार्षीत्कन्यां चैत्रः । अलमकृत कन्या स्वयमेव । एवमलङ्करिष्यते कन्या स्वयमेव । अचिकीर्षत्कटं चैत्रः । अचिकीर्षिष्ट चिकीर्षिष्यते । चिकीर्षते कटः स्वयमेव । प्रस्नुते गौः स्वयमेव । उच्छ्रयते दण्डः स्वयमेव । आत्मनेपदाकर्मकः । विकुर्वते सैन्धवाः स्वयमेव । व्यकृत । व्यकृषाताम् । व्यकृषत ।

## कुषिरञ्जेर्व्याप्ये वा परस्मै च ॥३।४।७४॥

कुषिरञ्जिभ्यां व्याप्ये कर्तरि चिड्विषये परस्मैपदं वा स्यात् । तत्सन्नियोगे श्यश्च नत्वात्मनेपदे । कुष्णाति चैत्रः पादम् । कुष्यति कुष्यते वा पादः स्वयमेव । रज्यति रज्यते वा वस्त्रं स्वयमेव । कोषिषीष्ट । रङ्क्षीष्ट ॥ इति कर्मकर्तरि प्रक्रिया ॥

---

### अथ विभक्त्यर्थाः ।

## वा काङ्क्षायाम् ॥५।२।१०॥

स्मृत्यर्थे धातावुपपदे सति यच्छब्दे वा प्रयुज्यमाने प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनेऽर्थे धातोर्भविष्यन्ती वा स्यात् । स्मरसि मित्र यत्कश्मीरेषु वत्स्यामः, यत्तत्रौदनं भोक्ष्यामहे ?

## हशश्वद्युगान्तःप्रच्छ्ये ह्यस्तनी च ॥५।२।१३॥

ह शश्वति च प्रयुज्यमाने युगान्तः प्रच्छ्ये च भूतानद्यतने परोक्षेऽर्थे वर्त्तमानाद्धातोर्ह्यस्तनी परोक्षा च विभक्ती स्तः । इति हाकरोत् । इति ह चकार । शश्वदकरोत् । शश्वच्चकार । प्रच्छ्ये किम् ? अगच्छस्त्वं मथुरां जगन्थ वा ? वेत्येव सिद्धे ह्यस्तनीग्रहणात् स्मृत्यर्थयोगेऽपि ह्यस्तनी एव । स्मरसि मित्र कश्मीरेष्विति ह्यध्यैमहि ।

## ननौ पृष्टोक्तौ सद्वत् ॥५।२।१७॥

ननु शब्दे उपपदे पृष्टोक्तौ भूतार्थेऽपि वर्तमाना स्यात् । चाद्यानद्यतनेऽपि । किमकार्षीः कटं चैत्र ? ननु करोमि भोः ।

---

१ [illegible]

चि ओदनः स्वयमेव । पच्यते ओदनः स्वयमेव । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । अधुक्षत । औदुम्बरं फलं पचति वायुः । उदुम्बरः फलं पच्यते । अकर्मकस्य पूर्वेण सिद्धे सकर्मकार्थं वचनम् ।

## तपेस्तपःकर्मकात् ॥३।४।८५॥

तपःकर्मकात् तपेरर्थान्तरे वृत्ते कर्तरि ञिक्यात्मनेपदानि स्युः । अन्वतप्त तपः साधुः । तेपे तपांसि साधुः । तपिरत्र करोत्यर्थः ।

## न कर्मणा ञिच् ॥३।४।८८॥

पचिदुहोः कर्मणा योगेऽनन्तरोक्ते कर्तरि ञिच् न स्यात् । अपक्तौदुम्बरं फलं स्वयमेव । अदुग्ध गौः पयः स्वयमेव ।

## रुधः ॥३।४।८९॥

रुधो धातोरनन्तरोक्ते कर्तरि ञिच् न स्यात् । अरुद्ध गौः स्वयमेव ।

## स्वरदुहो वा ॥३।४।९०॥

स्वरान्ताद्धातोर्दुहेश्चानन्तरोक्ते कर्तरि ञिच् वा स्यात् । अकृत अकारि कटः स्वयमेव । अलविष्ट अलावि केदारः स्वयमेव । अदुग्ध अदोहि गौः स्वयमेव ।

## णिस्नुश्र्यात्मनेपदाकर्मकात् ॥३।४।९२॥

णयन्ताद्धातोः स्नुश्रिभ्यां च तथाऽऽत्मनेपदविषये विधौ अकर्मकेभ्यश्च कर्मकर्तरि ञिच् न स्यात् । पचत्योदनं चैत्रः । तं प्रायुङ्क्त अपीपचत् ओदनं चैत्रेण मैत्रः । पुनरोदनस्य सुकरत्वेन कर्तृत्वे अपीपचतौदनः स्वयमेव । प्रास्नावीद्गां देवदत्तः । प्रास्नोष्ट गौः स्वयमेव ।

## स्नोः ॥४।४।५२॥

स्नोः परस्य स्तादशित आदिरिट् स्यात् असत्यात्मनेपदे । उदशिश्रियत् दण्डं दण्डी । उदशिश्रियत् दण्डः स्वयमेव । आत्मनेपदाकर्मकाः । व्यकार्षीत् सैन्धवं चैत्रः वल्गयति चेत्यर्थः । व्यकृत सैन्धवः स्वयमेव । विकरोति धातुर्वल्गनेऽन्तर्भूतणिगर्थः कर्मस्थक्रियः ।

## सृजः श्राद्धे ञिक्यात्मने तथा ॥३।४।८४॥

सृजो धातोः श्रद्धावति कर्तरि ञिक्यात्मनेपदानि स्युः । तथा यथापूर्वं विहितानि । असर्जि मालां धार्मिकः । सृज्यते मालां धार्मिकः । स्रक्ष्यते मालां धार्मिकः ।

## भूषार्थसन्किरादिभ्यश्च ञिक्यौ ॥३।४।९३॥

भूषार्थेभ्यः सन्नन्तेभ्यः किरादिभ्यश्चकारात् णिश्रन्थ्यात्मनेपदाकर्मकेभ्यो धातुभ्यः कर्मकर्तरि चिण्यकौ न स्तः। अलमकार्षीत्कन्यां चैत्रः। अलमकृत कन्या स्वयमेव। एवमलङ्करिष्यते कन्या स्वयमेव। अचिकीर्षत्कटं चैत्रः। अचिकीर्षिष्ट चिकीर्षिष्यते। चिकीर्ष्यते कटः स्वयमेव। प्रस्नुते गौः स्वयमेव। उच्छ्रयते दण्डः स्वयमेव। आत्मनेपदाकर्मकः। विकुर्वते सैन्धवाः स्वयमेव। व्यकृत। व्यकृषाताम्। व्यकृषत।

## कुषिरञ्जोर्व्याप्ये वा परस्मै च ॥३।४।७४॥

कुषिरञ्जिभ्यां व्याप्ये कर्तरि शिद्विषये परस्मैपदं वा स्यात्। तत्सन्नियोगे श्यश्च यस्त्वात्मनेपदे। कुष्णाति चैत्रः पादम्। कुष्यति कुष्यते वा पादः स्वयमेव। रज्यति रज्यते वा वस्त्रं स्वयमेव। कोषिषीष्ट। रङ्क्षीष्ट॥ इति कर्मकर्तरि प्रक्रिया॥

---

अथ विभक्त्यर्थाः।

## वा काङ्क्षायाम् ॥५।२।१०॥

स्मृत्यर्थे धातावुपपदे सति यच्छब्दे वा प्रयुज्यमाने प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनेऽर्थे धातोर्भविष्यन्ती वा स्यात्। स्मरसि मित्र यत्कश्मीरेषु वत्स्यामः, यत्तत्रौदनं भोक्ष्यामहे?

## हशश्वद्युगान्तःप्रच्छ्ये ह्यस्तनी च ॥५।२।१३॥

ह शश्वति च प्रयुज्यमाने युगान्तःप्रच्छ्ये च भूतानद्यतने परोक्षेऽर्थे वर्तमानाद्धातोर्ह्यस्तनी परोक्षा च विभक्ती स्तः। इति हाकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच्चकार। प्रच्छ्ये किम्? अगच्छस्त्वं मथुरां जगन्थ वा? वेत्येव सिद्धे ह्यस्तनीग्रहणात् स्मृत्यर्थयोगेऽपि ह्यस्तनी एव। स्मरसि मित्र कश्मीरेष्विति हाऽप्येमहि।

## ननौ पृष्टोक्तौ सद्वत् ॥५।२।१७॥

ननुशब्दे उपपदे पृष्टोक्तौ भूतार्थेऽपि वर्तमाना स्यात्। शत्रानशावपि। किमकार्षीः कटं चैत्र? ननु करोमि भोः।

---

१ आकाङ्क्षा च [illegible]

## नन्वोर्वा ॥५।२।१८॥

ननु इत्येतयोः शब्दयोरुपपदयोः पृष्टोक्तौ भूते वर्तमाना वा स्यात्। किमकार्षीः कटं चैत्र? न करोमि भोः। नाकार्षम्। कस्तमवोचत्। अहं नु ब्रवीमि। अहं न्ववोचम्।

## शत्रानशावेष्यति तु सस्यौ ॥५।२।२०॥

वर्तमानार्थे वर्तमानाद्धातोः शत्रानशौ स्तः, एष्यति काले तु स्यप्रत्ययसहितौ शत्रानशौ स्तः। यान्। यान्तौ। यान्तः। शयानः। शयानौ। शयानाः। निरस्यन्। निरस्यमानः। समानविषयत्वाद्वर्तमानाऽपि। याति। यातः। यान्ति।

## तौ माङ्याक्रोशेषु ॥५।२।२१॥

माङि उपपदे आक्रोशे गम्यमाने सति शत्रानशौ स्तः। मा पचन् वृषलो ज्ञास्यति। मा पचमानोऽसौ मर्तुकामः।

## वा वेत्तेः क्वसुः ॥५।२।२२॥

वर्तमानार्थे वेत्तेः क्वसुर्वा स्यात्। तत्त्वं विद्वान्। पक्षे विदन्। संविदानः।

## स्मे च वर्तमाना ॥५।२।१६॥

भूतानद्यतने परोक्षेऽपरोक्षे चार्थे वर्तमानाद्धातोः स्मशब्दे पुरादौ चोपपदे वर्तमाना विभक्तिर्भवति। इति स्मोपाध्यायः कथयति। पृच्छति स्म पुरोधसम्। वसन्तीह पुरा छात्राः।

## वाद्यतनी पुरादौ ॥५।२।१५॥

परोक्ष इति निवृत्तम्। भूतानद्यतने परोक्षेऽर्थे वर्तमानाद्धातोः पुरादावुपपदे अद्यतनी विभक्तिर्वा भवति। अपरोक्षे ह्यस्तन्याः परोक्षे तु परोक्षाया अपवादः। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः। वावचनात् पक्षे यथाप्राप्ति। भूतमात्रविवक्षायामद्यतन्याः सिद्धौ पुरादियोगे तद्वचनं स्मसमर्थेहशब्दस्य योगे सामान्यविवक्षयाऽद्यतनी न भवतीतिज्ञापनार्थम्।

## कदाकर्ह्योर्न वा ॥५।३।८॥

एतयोर्योगे वर्त्स्यदर्थे वर्तमाना वा। पक्षे भविष्यन्तीश्वस्तन्यौ वा। कदा भुङ्क्ते, भोक्ष्यते, भोक्ता वा? कर्हि भुङ्क्ते भोक्ष्यते वा भोक्ता।

## किंवृत्ते लिप्सायाम् ॥५।३।९॥

किंवृत्ते उपपदे प्रष्टुर्लिप्सायां गम्यायां वर्त्स्यदर्थे वर्तमानाद्धातोर्वर्तमाना वा भवति। पक्षे भविष्यन्तीश्वस्तन्यौ। को भवतां भिक्षां ददाति। दास्यति दाता वा।

## लिप्स्यसिद्धौ ॥५।३।१०॥

लब्धुमिष्यमाणो लिप्स्यः । तस्य सिद्धौ स्वर्गाद्यवाप्तिलक्षणायां गम्यमानायां वर्त्स्यदर्थे वर्तमानाद्धातोर्वर्तमाना वा स्यात्। पक्षे प्राग्वत्। योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा ।

## पञ्चम्यर्थहेतौ ॥५।३।११॥

पञ्चम्यर्थः प्रैषादिः, तस्य हेतुर्निमित्तं तस्मिन्नर्थे वर्त्स्यति वा वर्तमाना स्यात्। पक्षे प्राग्वत्। उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा। अथ त्वं सूत्रमधीष्व ।

## सप्तमी चोर्द्ध्वमौहूर्तिके ॥५।३।१२॥

ऊर्द्ध्वं मुहूर्तात्भव ऊर्द्ध्वमौहूर्तिकः पञ्चम्यर्थहेतौ वर्त्स्यदर्थाद्धातोः सप्तमी वर्तमाना च विभक्तिर्वा स्यात् । पक्षे प्राग्वत् । ऊर्द्ध्वंमुहूर्तादुपाध्यायश्चेदागच्छेद् आगच्छति आगमिष्यति आगन्ता वा । अथ त्वं तर्कमधीष्व ।

## सत्सामीप्ये सद्वद्वा ॥५।४।१॥

सतो वर्तमानस्य सामीप्ये भूते भविष्यति चार्थे धातोर्वर्तमानवत्प्रत्यया स्युः। सतीतिसूत्रादारभ्यापादपरिसमाप्तेर्ये विहिताः प्रत्यया भूतभविष्यतोर्वाऽतिदिश्यन्ते। कदा चैत्रागतोऽसि ? अयमागच्छामि। आगच्छन्तमेव मां विद्धि। यावचनायपाप्रासम्। अयमागमम्। एषोऽस्मि आगत । कदा चैत्र गमिष्यसि ? एष गच्छामि । गच्छन्तमेव मां विद्धि । पक्षे एष गमिष्यामि । गन्तास्मि । गमिष्यन्तमेव मां विद्धि ।

## भूतवच्चाशस्ये वा ॥५।४।२॥

अनागतस्य प्रियस्यार्थस्य आशासनं प्राप्तुमिच्छा आशंसा तद्विषय आशंस्यः, तस्मिन्नर्थे वर्तमानाद्धातोर्भूतवच्चकारात्सद्वच्च प्रत्यया वा स्युः। आशंस्यस्य भविष्यदर्थत्वादयमतिदेशः। वा ग्रहणाद्यथाप्राप्तं च। उपाध्यायश्चेदागमत् एते तर्कमधीमहे। पक्षे उपाध्यायश्चेदागमिष्यति एते तर्कमध्यगीष्महि। उपाध्यायश्चेदागतः एतैस्तर्कोऽधीतः। स चेदागच्छति एते तर्कमध्येपामहे। उपाध्यायश्चेदागन्ता एते तर्कमध्येतास्महे। सामान्यातिदेशेन विशेषस्यानतिदेशाद् ह्यस्तनी परोक्षे न स्याताम्।

## क्षिप्राशसार्थयोर्भविष्यन्तीसप्तम्यौ ॥५।४।३॥

क्षिप्रार्थे आशंसार्थे चोपपदे आशंसार्थधातोः क्रमाद्भविष्यन्तीसप्तम्यौ भवतः। उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता क्षिप्रमाशु त्वरितमरमशीघ्रमेते सिद्धान्तमध्येष्यामहे। क्षिप्रार्थेनेति वक्ष्ये भविष्यन्तीप्रथम

## नन्वोर्वा ॥५।२।१८॥

ननु इत्येतयोः शब्दयोरुपपदयोः पृष्टोक्तौ भूते वर्तमाना वा स्यात्। किमकार्षीः कटं चैत्र? न करोमि भोः। नाकार्षम्। कस्तमवोचत्। अहं नु ब्रवीमि। अहं न्ववोचम्।

## शत्रानशावेष्यति तु सस्यौ ॥५।२।२०॥

वर्तमानार्थे वर्तमानाद्धातोः शत्रानशौ स्तः, एष्यति काले तु स्यसहितौ शत्रानशौ स्तः। यान्। यान्तौ। यान्तः। शयानः। शयानौ। शयानाः। निरस्यन्। निरस्यमानः। समानविषयत्वाद्वर्तमानाऽपि। याति। यातः। यान्ति।

## तौ माङ्याक्रोशेषु ॥५।२।२१॥

माङि उपपदे आक्रोशे गम्यमाने सति शत्रानशौ स्तः। मा पचन् वृषलो ज्ञास्यति। मा पचमानोऽसौ मर्तुकामः।

## वा वेत्तेः क्वसुः ॥५।२।२२॥

वर्तमानार्थे वेत्तेः क्वसुर्वा स्यात्। तत्त्व विद्वान्। पक्षे विदन्। संविदानः।

## स्मे च वर्तमाना ॥५।२।१६॥

भूतानद्यतने परोक्षेऽपरोक्षे चार्थे वर्तमानाद्धातोः स्मशब्दे पुरादौ चोपपदे वर्तमाना विभक्तिर्भवति। इति स्मोपाध्यायः कथयति। पृच्छति स्म पुरोधसम्। वसन्तीह पुरा छात्राः।

## वाद्यतनी पुरादौ ॥५।२।१५॥

परोक्ष इति निवृत्तम्। भूतानद्यतने परोक्षेऽर्थे वर्तमानाद्धातोः पुरादावुपपदे अद्यतनी विभक्तिर्वा भवति। अपरोक्षे ह्यस्तन्याः परोक्षे तु परोक्षाया अपवादः। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः। वावचनात् पक्षे यथाप्राप्ति। भूतमात्रविवक्षाया अद्यतन्याः सिद्धौ पुरादियोगे तद्ग्रहणं स्मृत्यर्थेहशब्दस्यप्रयोगे सामान्यविवक्षयाऽद्यतनी न भवतीतिज्ञापनार्थम्।

## कदाकर्ह्योर्न वा ॥५।३।८॥

एतयोर्योगे वर्त्स्यत्यर्थे वर्तमाना वा। पक्षे भविष्यन्तीश्वस्तन्यौ वा। कदा भुङ्क्ते, भोक्ष्यते, भोक्ता वा? कर्हि भुङ्क्ते भोक्ष्यते वा भोक्ता।

## किंवृत्ते लिप्सायाम् ॥५।३।९॥

किंवृत्ते उपपदे प्रष्टुर्लिप्सायां गम्यायां वर्त्स्यत्यर्थे वर्तमानाद्धातोर्वर्तमाना वा भवति। पक्षे भविष्यन्तीश्वस्तन्यौ। को भवतां भिक्षां ददाति। दास्यति दाता वा।

## लिप्स्यसिद्धौ ॥५।३।१०॥

लब्धुमिष्यमाणो लिप्स्यः । तस्य सिद्धौ स्वर्गाद्यवाप्तिलक्षणायां गम्यमानायां भविष्यत्यर्थे वर्तमानाद्धातोर्वर्तमाना वा स्यात् । पक्षे प्राग्वत् । योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा ।

## पञ्चम्यर्थहेतौ ॥५।३।११॥

पञ्चम्यर्थः प्रैषादिः, तस्य हेतुर्निमित्तं तस्मिन्नर्थे भविष्यति वा वर्तमाना स्यात् । पक्षे प्राग्वत् । उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा । अथ त्वं सूत्रमधीष्व ।

## सप्तमी चोर्द्ध्वमौहूर्तिके ॥५।३।१२॥

ऊर्ध्वं मुहूर्ताद्भव ऊर्ध्वमौहूर्तिकः पञ्चम्यर्थहेतौ भविष्यदर्थाद्धातोः सप्तमी वर्तमाना च विभक्तिर्वा स्यात् । पक्षे प्राग्वत् । ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेद् आगच्छति आगमिष्यति आगन्ता वा । अथ त्वं तर्कमधीष्व ।

## सत्सामीप्ये सद्वद्वा ॥५।४।१॥

सतो वर्तमानस्य सामीप्ये भूते भविष्यति चार्थे धातोर्वर्तमानवत्प्रत्यया वा स्युः । वर्तमानेतिसूत्रादारभ्यापादपरिसमाप्तेर्ये विहिताः प्रत्ययाः भूतभविष्यतोर्वाऽतिदिश्यन्ते । कदा चैत्रागतोऽसि ? अयमागच्छामि । आगच्छन्तमेव मां विद्धि । पावश्चनाययामासम् । अयमागमम् । एषोऽस्मि आगतः । कदा चैत्र गमिष्यसि ? एष गच्छामि । गच्छन्तमेव मां विद्धि । पक्षे एष गमिष्यामि । गन्तास्मि । गमिष्यन्तमेव मां विद्धि ।

## भूतवच्चाशंस्ये वा ॥५।४।२॥

अनागतस्य प्रियस्यार्थस्य आशासनं प्राप्तुमिच्छा आशंसा तद्विषय आशंस्यः, तस्मिन्नर्थे वर्तमानाद्धातोर्भूतवत्कारात्मनुप्रत्यया वा स्युः । आशंस्यस्य भविष्यदर्थत्वादयमतिदेशः । वा ग्रहणाद्यथाप्राप्तं च । उपाध्यायश्चेदागमत् एते तर्कमधीमहे । पक्षे उपाध्यायश्चेदागमिष्यति एते तर्कमध्येष्यामहे । उपाध्यायश्चेदागतः एतैस्तर्कोऽधीतः । स चेदागच्छति एते तर्कमध्येयामहे । उपाध्यायश्चेदागन्ता एते तर्कमध्येतास्महे । सामान्यातिदेशेन विशेषस्यानतिदेशाद् ह्यस्तनी परोक्षे न स्याताम् ।

## क्षिप्राशंसार्थयोर्भविष्यन्तीसप्तम्यौ ॥५।४।३॥

क्षिप्रार्थे आशंसार्थे चोपपदे आशंसार्थाद्धातोः क्रमाद्भविष्यन्तीसप्तम्यौ भवतः । उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता क्षिप्रमाशु त्वरितमरंशीघ्रमेते सिद्धान्तमध्येष्यामहे । क्षिप्रार्थेनेति वचनं भविष्यन्तीवचनं

श्वस्तनी विषये भविष्यन्ती स्याद्विशेषणार्थम्। उपाध्यायश्चेच्छीघ्रमागमिष्यति एते श्वः शीघ्रमध्येष्यामहे। आशंसार्थे सत्यपि। उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता आशंसे अवक्लृप्ये सम्भावये युक्तोऽधीयीय। द्वयो रुपपदयोः सप्तम्येव परत्वात्। अहमाशंसे क्षिप्रमधीयीय।

## सम्भावने सिद्धवत् ॥५।४।४॥

हेतोः शक्तिविशेषः श्रद्धानं सम्भावनं तस्मिन्विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत्प्रत्ययाः स्युः। "समये चेत्प्रयत्नोऽभूदुदभूवन् विभूतयः। इह चेन्माघ वोऽवर्षीत्समापत्स्यत शालयः ॥ १ ॥"

## नानद्यतनः प्रबन्धासत्त्योः ॥५।४।५॥

धात्वर्थस्य क्रियायाः प्रबन्धे सातत्ये आसत्तौ सामीप्ये गम्यमाने धातोरनद्यतनविहितः प्रत्ययो न स्यात्। ह्यस्तनीश्वस्तन्योः प्रतिषेधः। यावज्जीवं भृशमन्नमदात्। यावज्जीवं भृशमन्नं दत्तवान्। यावज्जीवं भृशमन्नं दास्यति। आसत्तौ येयं पौर्णमास्यतिक्रान्ता तस्यां जिनमहः प्रावर्तिष्ट। प्रवृत्तः। येयं पौर्णमास्यागामिनी तस्यां जिनपूजामहः प्रवर्तिष्यते।

## एष्यत्यवधौ देशस्यार्वाग्भागे ॥५।४।६॥

देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वाग्भागे च एष्यदर्थस्तत्र वर्तमानाद्धातोरनद्यतनविहितः प्रत्ययो न स्यात्। योऽयमध्वा गन्तव्य आशत्रुञ्जयात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे। द्विः सक्तून् पास्यामः।

## कालस्यानहोरात्राणाम् ॥५।४।७॥

देशवत्कालस्यापि विषये विधिः परमहोरात्रवर्जम्। न चेत्सोऽर्वाग्भागोऽहोरात्रसम्बन्धी भवतीत्यर्थः। योऽयमागामिसंवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र जिनपूजां करिष्यामोऽतिथिभ्यो दानं दास्यामहे। अनहोरात्राणामिति किम्? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता द्विरध्येतास्महे।

## परे वा ॥५।४।८॥

कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्य परभागेऽनहोरात्रसम्बन्धिनि च एष्यदर्थस्तत्र धातोरनद्यतनविहितः प्रत्ययो वा स्यात्। आगामिनो वर्षस्याग्रहायण्याः परस्तात् सूत्रमध्येष्यामहे। अध्येतास्महे वा। कालस्येत्येव। आशत्रुञ्जयाद्गन्तव्येऽध्वनि कौशाम्ब्याः परस्ताद्द्विरोदनं भोक्ष्यामहे। अत्र श्वस्तनीविवक्षायामपि परत्वादयमेव विकल्पः। आगामिनः संवत्सरस्य आग्रहायण्याः परस्ताद् विचित्रं सूत्रमध्येष्यामहे।

## भूते ॥५।४।१०॥

भूतेऽर्थे वर्तमानाद्धातोः सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः स्यात्।

## सप्तम्युताप्योर्बाढे ॥५।४।२१॥

इत्यारभ्य सप्तम्यर्थेऽनेन विधानम्। ततः पूर्वं वोतात्प्रागि(५।४।११)ति विकल्पो वक्ष्यते। दृष्टो मया तव पुत्रोऽन्नार्थी चङ्क्रम्यमाणोऽपरश्च अतिथ्यर्थी यदि स तेन दृष्टोऽभविष्यत्। उताभोक्ष्यत अप्यभोक्ष्यत न तु दृष्टोऽन्येन पथा गत इति न भुक्तवान्।

## वोतात्प्राक् ॥५।४।११॥

## सप्तम्युताप्योर्बाढे ॥५।४।२१॥

इत्यत्र यदुतशब्दसङ्कीर्तनं ततः प्राक् सप्तमीनिमित्ते क्रियातिपत्तौ सत्यां क्रियातिपत्तिर्वा स्याद्भूतेऽर्थे। कथं नाम संयतः सन् अनागाढे तत्र भवानाधाय कृतमसेविष्यत धिग्गर्हामहे। पक्षे यथाप्राप्तम्। कथं सेवेत धिग्गर्हामहे।

## क्षेपेऽपिजात्वोर्वर्तमाना ॥५।४।१२॥

क्षेपो गर्हा। तस्मिन् वर्तमाने ऽपि जात्वोरुपपदयोर्वर्तमाना विभक्तिर्भवति। कालसामान्ये विधानात् कालविशेषे विहिताः सप्तम्यादयः परत्वादनेन बाध्यन्ते। अपि तत्र भवान् जन्तून् हिनस्ति। जातु तत्र भवान् भूतान् हिनस्ति। कालत्रयेऽप्ययं विधिः।

## कथमि सप्तमी च वा ॥५।४।१३॥

वाक्षेप इत्येव। कालत्रयेऽप्ययं विधिः। कथं धर्मं त्यजेः। त्यजसि वा। पक्षे कालत्रयविभक्तयः।

## किंवृत्ते सप्तमीभविष्यन्त्यौ ॥५।४।१४॥

क्षेप इत्येव। नात्र विकल्पः। सर्वविभक्त्यपवादः। किं तत्र भवाननृतं ब्रूयात् वक्ष्यति वा। भूते क्रियातिपत्तौ चान्तिमा विभक्तिरपि। किं तत्र भवाननृतमवक्ष्यत्। पक्षे ब्रूयात्। वक्ष्यति। अश्रद्धामर्षेऽन्यत्रापि॥ अश्रद्धायां न श्रद्दधे न सम्भावयामि नावकल्पयामि तत्रभवान्मामावृत्तं गृह्णीयात्। ग्रहीष्यति। एवं किंवृत्तेऽपि॥ अमर्षे न मर्षयामि न क्षमे धिग् मिथ्या नैतदस्ति तत्रभवान्मामावृत्तम् आवदीत। आवदिष्यते वा। पक्षे भूते क्रियातिपाते चाऽन्तिमा। न श्रद्दधे न मर्षयामि तत्रभवानवृत्तमग्रहीष्यत्। पक्षे गृह्णीयात्। ग्रहीष्यति।

## किं किलास्त्यर्थयोर्भविष्यन्ती ॥५।४।१६॥

अश्रद्धामर्षयोर्भविष्यन्ती स्यात् न सप्तमी। न श्रद्दधे न क्षमे किं किल

श्वस्तनी विषये भविष्यन्ती स्यादित्येवमर्थम् । उपाध्यायश्चेदेष्यति शीघ्रमागमिष्यति एते श्वः शीघ्रमध्येष्यामहे । आशंसार्थे खल्वपि । उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता आशंसे अवक्लृप्ये सम्भावये युक्तोऽधीयीय । क्षिप्रो ऽप्ययद्योऽपि स्वस्त्येव परत्वात् । अक्षमाशंसे क्षिप्रमधीयीय ।

## सम्भावने सिद्धवत् ॥५।४।४॥

हेतो शक्तिविशेषं, श्रद्धानं सम्भावनं तस्मिन्विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत्प्रत्यया स्युः । "समये चेत्प्रयत्नोऽभूदुदभूवन् विभूतयः । इषे चेन्माघ योऽपर्यास्समापतन् शालयः ॥ १ ॥"

## नानद्यतनः प्रबन्धासत्त्योः ॥५।४।५॥

धात्वर्थस्य क्रियायाः प्रबन्धे सातत्ये आसत्तौ सामीप्ये गम्यमाने धातोरनद्यतनविहितः प्रत्ययो न स्यात् । ह्यस्तनीश्वस्तन्योः प्रतिषेधः । यावज्जीवं भृशमन्नमदात् । यावज्जीवं भृशमन्नं दास्यति । यावज्जीवं भृशमन्नं दास्यति । आस न्नो येयं पौर्णमास्यतिक्रान्ता तस्यां जिनमहः प्रावर्तिष्ट । प्रवृत्तः । येयं पौर्णमास्यागामिनी तस्यां जिनपूजामहः प्रवर्तिष्यते ।

## एष्यत्यवधौ देशस्यार्वाग्भागे ॥५।४।६॥

देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वाग्भागे यः एष्यदर्थस्तत्र वर्तमानाद्धातोरनद्यतनविहितः प्रत्ययो न स्यात् । योऽयमध्वागन्तव्य आशत्रुञ्जयात् तस्य यदवरं शत्रुञ्जयात् तत्र द्विरोदनं भोक्ष्यामहे । द्विः सक्तून् पास्यामः ।

## कालस्यानहोरात्राणाम् ॥५।४।७॥

देशावधेः कालस्यापि विषये विधिः परमहोरात्रवर्जम् । न चास्त्योऽर्वाग्भागोऽहोरात्रसम्बन्धि अपतीत्यर्थं । योऽयमागामिसंवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र जिनपूजां करिष्यामो तिथिभ्यो दानं दास्यामहे । अनहोरात्राणामिति किम्? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता द्विरध्येष्यामहे ।

## परे वा ॥५।४।८॥

कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्य परभागेऽनहोरात्रसम्बन्धिनि च एष्यदर्थस्य धातोरनद्यतनविहितः प्रत्ययो वा स्यात् । आगामिनो वत्सरस्य आग्रहायण्याः परस्मात् सूत्रमध्येष्यामहे । अध्येतास्महे वा । कालस्येत्येव । आशत्रुञ्जयात्तस्याध्वनि यत्परं शत्रुञ्जयात् परस्माद्द्विरोदनं भोक्तास्महे । प्रबन्धासत्तिविषयेऽपि परत्वादयमेव विकल्पः । आगामिनः संवत्सरस्य आग्रहायण्याः परस्माद् विच्छिन्नं सूत्रमध्येष्यामहे ।

## अयदि श्रद्धा धातौ न वा ॥५।४।२३॥

सम्भावनार्थे धात्वादुपपदेऽलमर्थविषये सम्भावने गम्ये धातो' सप्तमी वा स्यात्। यच्छब्दप्रयोगेऽपि प्रयुज्यते। अवकल्पयामि भुञ्जीत भवान्। पक्षे यथा प्राप्तम्। भोक्ष्यते भवान्। अभुक्त भवान्। अयदीति किम्? सम्भावयामि यद्भुञ्जीत भवान्। भूते भविष्यति च क्रियातिपातेऽन्तिमा।

## सतीच्छार्थात् ॥५।४।२४॥

सतीतिवर्तमानार्थे वर्तमानादिच्छार्थाद्धातो' सप्तमी वा स्यात्। पक्षे तु वर्तमानैव। इच्छेत्। इच्छति वा। उद्यात् वष्टि।

## वर्त्स्यति हेतुफले ॥५।४।२५॥

हेतु' कारणं फलं कार्यम्। हेतुभूते फलभूते च वर्त्स्यत्यर्थे वर्तमानाद्धातो' सप्तमी वा स्यात्। यदि गुरूनुपासीत शास्त्रान्तं गच्छेत्। पक्षे। यदि गुरूनुपासिष्यते शास्त्रान्तं गमिष्यति।

## कामोक्तावकच्चिति ॥५।४।२६॥

कामो मे भुञ्जीत भवान् इत्यादौ सप्तमी भवत्येव। अकच्चितीति किम्? कच्चिज्जीवति मे माता। इच्छार्थे सप्तमीपञ्चम्यौ॥ नान्या विभक्तयः। इच्छामि भुञ्जीत भवान्। भुङ्क्तां भवान्। एवं कामये प्रार्थयेऽभिलषामि वष्मीत्यादय'। नाद्यान्तिमा।

## इच्छार्थे कर्मणः सप्तमी ॥५।४।८९॥

इच्छार्थे धात्वादुपपदे कर्मभूतात्तुल्यकर्तृकाद्धातो' सप्तमी भवति। भुञ्जीयेति इच्छति। कर्मण इति किम्? इच्छन् करोति। अत्र लक्षणभाव'। इच्छामि भुञ्जीत भवान्। विध्यादयोऽर्थो' सप्तम्याः प्रागुक्ता'। विधौ कटं कुर्यात् करोतु वा भवान्। श्राद्धे पूजां कृत्वा भुञ्जीत। निमन्त्रणे। त्रिसन्ध्यमावश्यक कुर्यात् करोतु वा। आमन्त्रणे। इहासीत। आस्तां वा। अधीष्टे। पुत्रमध्यापयेद्भवान्। सम्प्रश्ने। भो व्याकरणमधीयीय उत सिद्धान्तमधीयीय। अध्ये वा। प्रार्थने। भो ज्योतिषमधीयीय। अध्ययै वा। प्रैषादयोऽप्युक्तप्रकाराः। प्रैषो विधि। भवता कट' कार्यः। भवान् कटं करोतु। भवान् हि प्रेषितोऽनुज्ञात। भवतोऽवसरः कटकरणे।

## सप्तमी चोर्द्ध्वमौहूर्तिके ॥५।४।३०॥

ऊर्द्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातो' प्रैषादिषु गम्यमानेषु सप्तमी कृत्या पञ्चमी च स्यु'। ऊर्द्ध्वमुहूर्तात् कटं कुर्यात् करोतु वा भवान्। कार्यो वा कटो भवता।

---

१ इच्छा प्रश्नेऽपगम्ये सप्तमी स्यात्। ननु कश्चित् प्रयोगे–

## परिमाणार्थमितनखात्पचः ॥५।१।१०९॥

परिमाणार्थभ्यः प्रस्थादिभ्यो मितनखाभ्यां च कर्मभ्यां परात्पचः खः प्रत्ययः स्यात्। प्रस्थंपचा स्थाली। प्रस्थंपचा ग्रुमयः। मितंपचः।

## कूलाभ्रकरीषात्कषः ॥५।१।११०॥

एभ्यः कर्मभ्यः परात्कषेः खः स्यात्। कूलंकषा नदी। अभ्रंकषो गिरिः। करीषंकषा वात्या।

## सर्वात्सहश्च ॥५।१।१११॥

सर्वात् कर्मणः परात्सहेः कषेश्च खः। सर्वंसहो मुनिः। सर्वंकषः खलः।

## भृ वृ जि तृ तपदमेश्च नाम्नि ॥५।१।११२॥

एभ्यः कर्म परेभ्यः संज्ञायां खः। विश्वंभरः। पतिंवरा। शत्रुंजयः। पर्वत राजः। धनंजयः पार्थः। बहिंद्य। रथंतरं साम। शत्रुंतपो राजा। दमिरन्तर्भूतण्यर्थोऽप्यस्त्यत्र। ततश्च बलिं दाम्यति दमयति वा बलिंदमः कृष्णः। अरिंदमः। शत्रुंसहः। एतन्नामानी नृपौ।

## धारेर्धर् च ॥५।१।११३॥

कर्मणः पराद्धारयतेः संज्ञायां खः धर इत्यपवादेशः। वसुंधरा भूमिः। युगंधरः। सीमंधरः। संज्ञायामित्येव। छत्रधारः।

## पुरंदरभगदरौ निपात्यौ ॥५।१।११४॥

## वाचंयमो व्रते ॥५।१।११५॥

निपातः। व्रतादन्यत्र वाग्यामः।

## मन्याण्णिन् ॥५।१।११६॥

कर्मणः परान्मन्यतेर्णिन् स्यात्। पण्डितं मन्यते बन्धुं पण्डितमानी ब(न्धो)न्धुः।

## कर्तुः खश् ॥५।१।११७॥

प्रत्ययार्थात्कर्तुः कर्मणः परान्मन्यतेः खश् स्यात्। यदा प्रत्ययार्थः कर्ता आत्मानमेव दर्शनीयत्वादिधर्मं विशिष्टं मन्यते तदा च कर्म तदाऽयं विधिः। पण्डितंमन्यः। पटीमात्मानं मन्यते पटिमन्या। विद्वन्मन्यः। विदुषींमन्या। असारूप्यात् णिन्नपि। पण्डितमानी। पण्डितमानिनी।

## एजेः ॥५।१।११८॥

कर्मणः परादेजयतेः खश् स्यात्। अङ्गमेजयः। जनमेजयः।

## शुनीस्तनमुञ्जकूलास्यपुष्पात् धेटः ॥५।१।११९॥

एभ्यः कर्मभ्यः परात् धेटः खश् भवति । शुनिंधयः । स्तनंधयः । मुञ्जंधयः । स्तनंधयी: सर्पजातिः ।

## नाडीखरीघटीमुष्टिनासिकावा-
## ताद् ध्मश्च ॥५।१।१२०॥

एभ्यः कर्मभ्यः परात् ध्मतेर्धेटश्च खश् स्यात् । नाडीं धमति धयति वा नाडिंधमः । नाडिंधयः । घटिंधमः । घटिंधयः ।

## पाणिकरात् ॥५।१।१२१॥

आभ्यां कर्मभ्यां पराद् ध्मतेः खश् स्यात् । पाणिंधमः । करंधमः ।

## कूलादुद्रुजोद्वहः खश् ॥५।१।१२२॥

कूलमुद्रुजतीति कूलमुद्रुजो हस्ती । कूलमुद्वहा नदी ।

## वहाभ्राल्लिहः ॥५।१।१२३॥

खश् । वहं स्कन्धं लेढि वहंलिहो गौः । अभ्रंलिहं वेश्म ।

## बहुविध्वरुस्तिलात्तुदः ॥५।१।१२४॥

एभ्यः कर्मभ्यः परात् तुदेः खश् स्यात् । बहुंतुदं युगम् । विधुंतुदो राहुः । अरुंतुदः पीडाकरः । तिलंतुदः काकः ।

## ललाटवातशर्धात्तपाजहाकः ॥५।१।१२५॥

ललाटादिभ्यः परेभ्यस्तप अजहाक इत्येतेभ्यः खश् । ललाटंतपः सूर्यः । वातमजा मृगाः । शर्धंजहा माषाः । खशः शित्त्वाज्जेर्जीयादेशो न स्यात् ।

## असूर्योग्राद् दृशः ॥५।१।१२६॥

सूर्यमपि न पश्यन्तीत्यसूर्यंपश्या राजदाराः । उग्रंपश्यतीत्युग्रंपश्यः ।

## इरंमदः ॥५।१।१२७॥

कर्मण इति निवृत्तम् । इरापूर्वान्माद्यतेः खश् श्याभावश्च निपात्यते । इरा सुरा तया माद्यतीतीरंमदः ।

## नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्व्य-
## र्थेऽच्वेर्भुवः खिष्णुखुकञौ ॥५।१।१२८॥

नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यः च्व्यर्थे वर्तमानेभ्यः खिष्णु

## सूत्राद्धारणे ॥५।१।९३॥

सूत्रं कार्पासादिमयम् । लक्षणसूत्रं वा सूत्रं गृह्णातीति सूत्रग्रहः प्राज्ञः । धारण इति किम् । सूत्रग्राहः । यः केवलं सूत्रमुपादत्ते न धारयति तत्प्राणेव । आयुधशब्देनायुधविशेषाणां ग्रहणम् । दण्डादिप्रतिषेधात् ।

## आयुधादिभ्यो धृगोऽदण्डादेः ॥५।१।९४॥

दण्डादिवर्जित आयुधादिभ्यः कर्मभ्यः परात्धृगोधातोरच् स्यात् । धनुर्धरः । जलधरः । बहुवचनादन्येभ्योऽपि दण्डादेस्तु । दण्डधारः सूत्रधारः ।

## हृगोवयोऽनुद्यमे ॥५।१।९५॥

कर्मणः परादूरतेर्वयसि अनुद्यमेगम्येऽच् स्यात् । अस्थिहरः श्वशिशुः । कवचहरः । कुमारः । अनुद्यमे मनोहरः प्रासादः । वयोऽनुद्यमे तु भारहारः ।

## आङः शीले ॥५।१।९६॥

कर्मणः परादाहरतेः शीलेऽच् स्यात् । शीलं स्वाभाविकी प्रवृत्तिः । पुष्पाण्याहर्तुं शीलमस्य पुष्पाहरः ।

## दृतिनाथात् पशाविः ॥५।१।९७॥

आभ्यां कर्मभ्यां परादूरतेः पशौ कर्तरि इः स्यात् । दृतिहरिः श्वा । नाथहरिः सिंहः । अपशौ नाथहारी गजी । नाथोऽन्यथ नासारज्जुः ।

## रजःफलेमलाद्ग्रहः ॥५।१।९८॥

एभ्यः परस्य ग्रहेरिः स्यात् । रजोग्रहिः कञ्चुकः । फलेग्रहिर्वृक्षः । एत्व निर्देशादेत्वम् । मलग्रहिः कम्बलः ।

## देववातादापः ॥५।१।९९॥

आभ्यां कर्मभ्यां परादापेरिः स्यात् । देवानाप्नोति देवापिः । वातापिः ।

## शकृत्स्तम्बाद्वत्सव्रीहौ कृगः ॥५।१।१००॥

शकृत्करिर्वत्सः । स्तम्बकरिर्व्रीहिः ।

## किंयत्तद्बहोरः ॥५।१।१०१॥

किं करोतीति किंकरः । किंकरा । किंकरीति इत्याद्यो टः । यत्करः तत्करः । चौर्ये [illegible] तस्करः । बहुकरः बहुकरा । बहुकरीति संख्यापनानु रसूत्रेण टप्रत्यये ।

## संख्याहर्दिवाविभानिशाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिबिबलिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्टः ॥५।१।१०२॥

एभ्यः कर्मभ्यः परात्करोतेष्टः प्रत्ययः स्यात् । अहेत्वाद्यर्थ आरम्भः । एककरः । द्विकरः । अहस्करः । दिवाकरः । अरुष्करः । इत्यादय ।

## हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात् ॥५।१।१०३॥

हेतुः प्रतीतशक्तिकं कारणम् । तच्छीलस्तत्स्वभावः अनुकूल आराधकश्चित्तानुवर्ती । एषु कर्तृषु शब्दादिवर्जे कर्मणः परात्करोतेष्टः स्यात् । यशः करोतीति यशस्करी विद्या । शोककरी कन्या । कुलकरं धनम् । तच्छीले क्रीडाकरः । श्राद्धकरः । अनुकूले वचनकरः । शब्दादौ तु शब्दकारः । श्लोककारः ।

## भृतौ कर्मणः ॥५।१।१०४॥

कर्मशब्दात्कर्मणः परात्करोतेर्भृतौ गम्यमानायां टः स्यात् । भृतिर्वेतनं कर्ममूल्यमिति यावत् । कर्मकरः । कर्मकरी । पुनः कर्मग्रहणं शब्दरूपकर्मप्रतिपत्त्यर्थम् ।

## क्षेमप्रियमद्रभद्रात्खाण् ॥५।१।१०५॥

एभ्यः कर्मभ्यः परात्करोतेः खः अण् इत्येतौ स्याताम् । क्षेमं करोतीति क्षेमंकरः । क्षेमकारः । प्रियंकरः । प्रियकारः । हेत्वादौ तीर्थंकरः तीर्थकर इत्यपि कश्चित् । तीर्थकार इत्यपि कश्चित् । तीर्थंकर इति क्षेमादिनियमात् ।

## मेघर्तिभयाभयात् खः ॥५।१।१०६॥

एभ्यः कर्मभ्यः परात्करोतेः खः स्यात् । मेघं करोतीति मेघंकरो वायुः । ऋतिर्गतिः । सत्यता वा । ऋतिंकरः । भयंकरः । अभयंकरः शान्तिः । हेत्वादिटस्य बाधकोऽयम् ।

## प्रियवशाद्वदः ॥५।१।१०७॥

आभ्यां कर्मभ्यां परात् वदेः खः स्यात् । प्रियंवदः । वशंवदः ।

## द्विषत्परतापौ ॥५।१।१०८॥

निपात्यौ । निपातनस्येष्टविषयत्वादस्मिन्नर्थेऽनभिधानम् । द्विषतीताप । अण्यन्तस्य तपेर्न स्यात् । द्विषन्तं परं वा तपति द्विषत्तापः । परतापः ।

## परिमाणार्थमितनखात्पचः ॥५।१।१०९॥

परिमाणार्थप्रत्ययात्पचः शब्दास्तेभ्यो मितनखाभ्यां च कर्मभ्यां परात्पचः ख' प्रत्यय' स्यात् । प्रस्थंपचा स्थाली । अल्पंपचा मुनय' । मितंपच' ।

## कूलाभ्रकरीषात्कषः ॥५।१।११०॥

एभ्यः कर्मभ्यः परात्कषेः ख' स्यात् । कूलंकषा नदी । अभ्रंकषो गिरिः । करीषंकषा वात्या ।

## सर्वात्सहश्च ॥५।१।१११॥

सर्वात् कर्मणः परात्सहे' कषेश्च खः सर्वंसहो मुनि' । सर्वंकषः खल' ।

## भृ वृ जि तॄ तपदमेश्च नाम्नि ॥५।१।११२॥

एभ्य कर्म परेभ्यः सहश्च खः । विश्वंभर' । पतिंवरा । शत्रुंजयः । पर्वतराजः । धनंजयः पार्थः । वह्निश्च । रथंतर साम । शत्रुंतपो राजा । दमिरन्तर्भूत ण्यर्थोऽप्यन्तश्च । ततश्च बलिं दाम्यति दमयति वा बलिंदमः कृष्णः । अरिंदमः । शत्रुंसहः । एतन्नामानौ नृपौ ।

## धारेर्धर् च ॥५।१।११३॥

कर्मणः पराद्धारयते' सञ्ज्ञायां खः धर इत्यपमादेशः । वसुंधरा भूमिः । युगंधरः । सीमंधरः । सञ्ज्ञायामित्येव । छत्रधारः ।

## पुरंदरभगंदरौ निपातौ ॥५।१।११४॥

## वाचंयमो व्रते ॥५।१।११५॥

निपातः । व्रतादन्यत्र वाग्यमः ।

## मन्याण्णिन् ॥५।१।११६॥

कर्मणः परान्मन्यतेर्णिन् स्यात् । पण्डित मन्यते य' पुं पण्डितमानी य(न्यो)न्युः ।

## कर्तुः खश् ॥५।१।११७॥

प्रत्ययार्थात्कर्तुः कर्मणः परान्मन्यतेः खश् स्यात् । पदात्प्रत्ययार्थः कर्ता आत्मानमेव दर्शनीयत्वादिधर्म विशिष्ट मन्यते तदर्थं कर्म तत्राऽपि विधिः । पण्डितमन्यः । पट्वीमात्मानं मन्यते पट्विमन्या । विद्वन्मन्यः । विदुषिंमन्या । असारूप्यात् णिनपि । पण्डितमानी । पण्डितमानिनी ।

## एजेः ॥५।१।११८॥

कर्मणः परादेजयते' खश् स्यात् । अङ्गमेजयः । जनमेजयः ।

## शुनीस्तनमुञ्जकूलास्यपुष्पात्‌ट्धेः ॥५।१।११९॥

एभ्यः कर्मभ्यः परात् ट्धेः खश् भवति । शुनिंधयः । स्तनंधयः । मुञ्जंधयः । स्तनंधयी सर्पजातिः ।

## नाडीखरीघटीमुष्टिनासिकावातात् ध्मश्च ॥५।१।१२०॥

एभ्यः कर्मभ्यः पराद्ध्मतेर्धेश्च खश् स्यात् । नाडीं धमति धयति वा नाडिंधमः । नाडिंधयः । घटिंधमः । घटिंधयः ।

## पाणिकरात् ॥५।१।१२१॥

आभ्यां कर्मभ्यां पराद्ध्मतेः खश् स्यात् । पाणिंधमः । करंधमः ।

## कूलादुद्रुजोद्वहः खश् ॥५।१।१२२॥

कूलमुद्रुजतीति कूलमुद्रुजो हस्ती । कूलमुद्वहा नदी ।

## वहाभ्राल्लिहः ॥५।१।१२३॥

खश् । वहं स्कन्धं लेढि वहंलिहो गौः । अभ्रंलिहं चैत्यम् ।

## बहुविध्वरुस्तिलात्तुदः ॥५।१।१२४॥

एभ्यः कर्मभ्यः परात्तुदेः खश् स्यात् । बहुंतुदं युगम् । विधुंतुदो राहुः । अरुंतुदः पीडाकरः । तिलंतुदः काकः ।

## ललाटवातशर्धात्तपाजहाकः ॥५।१।१२५॥

ललाटादिभ्यः परेभ्यस्तप अजहाक इत्येतेभ्यः खश् । ललाटंतपः सूर्यः । वातमजा मृगाः । शर्धंजहा माषाः । खशः शित्त्वादजेर्वीत्यादेशो न स्यात् ।

## असूर्योग्राद्दृशः ॥५।१।१२६॥

सूर्यमपि न पश्यन्तीत्यसूर्यंपश्या राजदाराः । उग्रंपश्यतीत्युग्रंपश्यः ।

## इरमदः ॥५।१।१२७॥

कर्मण इति निवृत्तम् । इरापूर्वान्मायतेः खश् दृपाभावश्च निपात्यते । इरा सुरा तया माद्यतीतीरंमदः ।

## नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्तात्च्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञौ ॥५।१।१२८॥

नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यः च्व्यर्थे वर्तमानेभ्यः खिष्णु

सुकर्त्री स्त्री । अनाढ्यो नाम्रो भवति नम्रम्भविष्णुर्नम्रम्भावुक' । आढ्यम्भविष्णु' । आढ्यम्भावुकः ।

## कृगःखनट् करणे ॥५।१।१२९॥

नग्नादिभ्योऽच्व्यन्तेभ्यः परात्करोतेः खनट् करणे । अप्रिय' प्रिया क्रियतेऽनेनेति प्रियङ्करणं शीलम् ।

## भावे चाशिताद्भुवः खः ॥५।१।१३०॥

आशितशब्दात्परात्भवतेर्भावकरणे चाभिधेये ख' स्यात् । आशितेन तृप्तेन सम्भूयते भवता । आशितम्भवो वर्तते भवता । आशितो भवत्यनेन आशितम्भव ओदन । आशितम्भवा पञ्चपूली । असारूप्यादनडपि । आशितस्य भवनम् । न घञ् सरूपत्वात् ।

## नाम्नो गमः खड्डौच विहायसस्तु विहः ॥५।१।१३१॥

नाम्न' परात्गमे' खड् तथा ड' स्यात् तत्र विहायसस्तु विह इत्यादेशः । खडि । तुरगः । डे । तुरग' । भुजेन भुजाभ्यां वा गच्छति भुजगः । भुजग' । प्लवेन प्लुतेन वा गच्छति । प्लवग' । प्लुतगः । प्लवग' । प्लुतगः । पतो गच्छति । पतग' । पतगः । विहायसा गच्छति विहगः । विहगः । सर्वग' । सर्वत्रग' । परदारगः । अग्रग' । मध्यगः । आदिगः । संज्ञायामपि खग' । नगच्छतीत्यग' पर्वतस्तरुश्च । एव नग' । उरसा गच्छतीत्युरगः । पृषोदरादित्वात्सलोपः । अथ खः । सुतं सुते न वा गच्छति सुतगमो मुनिः । मितगमोऽश्वः । मितगमा हस्तिनी । जनगमा हस्तिनी । जनगमश्चाण्डालः । प्लवगमः कपिः । प्लवंगमो भेकः । तुरगमोऽश्व' । भुजगमः सर्प' ।

## सुगदुर्गमाधारे ॥५।१।१३२॥

डप्रत्ययान्तौ निपातौ । सुखेन दुःखेन गम्यतेऽस्मिन्निति सुग' । दुर्गो मार्गः ।

## निर्गोदेशे ॥५।१।१३३॥

निपातः । निर्गम्यतेऽस्मिन् देश इति निर्गो देशः ।

## शमो नाम्न्य. ॥५।१।१३४॥

शमित्यव्ययरूपान्नाम्नः संज्ञायाम' स्यात् । शमित्यव्ययं सुखे तत्र भवति शम्भवोऽर्हन् । शंकर' । शंगरः । शंवदः । शम्बरः । नाम्नीति किम् । शंकरी जिनदीक्षा ।

## पार्श्वादिभ्य शीङ. ॥५।१।१३५॥

अमलयः पार्श्वाभ्यां शेते पार्श्वशयः

## उर्द्ध्वादिभ्यः कर्तुः ॥५।१।१३६॥

ऊर्द्ध्वादिभ्यो नाम्न्य पराच्छीङ अः स्यात् । ऊर्द्ध्वं शेते ऊर्द्ध्वशयः ।

## आधारात् ॥५।१।१३७॥

खेशेते खशयः गिरिश इति तद्धिते लोमादित्वाच्छः । क्रियार्थत्वेतु गिरिशय इति ।

## चरेष्टः ॥५।१।१३८॥

आधारवाचिनो नाम्नः पराच्चरेष्टः प्रत्ययः स्यात् । कुरुषु चरतीति कुरुचरः । वनेचरः ।

## भिक्षासेनादायात् ॥५।१।१३९॥

एभ्यः पराच्चरेष्टः स्यात् । भिक्षां चरति भिक्षाचरी । सेनां चरति परीक्षते यः सेनाचरस्तापसम्पक्षनः । सेनया वा चरति सेनाचरः । आदाय गृहीत्वा चरतीत्यादायचरः ।

## पुरोऽग्रतोऽग्रे सर्तेः ॥५।१।१४०॥

टः । पुरः सरतीति पुर सरः । पुरःसरी । अग्रतः सरति अग्रतःसरः । अग्रे सरति अग्रेसरः । सप्तम्यलुप् । एकारान्तमव्ययं वा सूत्रनिपातात्रा एकारः ।

## पूर्वात्कर्तुः ॥५।१।१४१॥

कर्तृवाचिभ्यः पूर्वशब्दात् परात्सर्तेष्टः स्यात् । पूर्वं सरतीति पूर्वसरः । पूर्वो भूत्वा सरतीत्यर्थः । कर्तुरितिकिम् । पूर्वेण सरति पूर्वसारः ।

## शोकापनुदतुंदपरिमृजस्तम्बेरमकर्णेजप प्रियालसहस्तिसूचके ॥५।१।१४३॥

शोकापनुदादयः शब्दा यथासंख्य प्रियादिष्वर्थेषु कप्रत्ययान्ता निपाताः । शोकमपनुदति शोकापनुदः प्रियः पुत्रादि । तुंदं परिमार्ष्टि तुंदपरिमृजोऽलसः । स्तम्बेरमो गजः । कर्णेजपः सूचकः ।

## मूलविभुजादयः ॥५।१।१४४॥

अत्र निपाताः कप्रत्ययान्ता नियतार्थधातूपपदा यथायोगं ज्ञेयाः । मूलं विभुजति मूलविभुजो रथः । उर्वीरुहो वृक्षः ।

## दुहेर्दुघः ॥५।१।१४५॥

नाम्नः पराद्दुहेर्दुघः प्रत्ययः स्यात् । कामान् दुग्धे पूरयति कामदुघा । असारूप्यात् क्विप् । कामधुक् । धर्मधुक् । डकारोऽन्त्यस्वरादिलोपार्थः ।

## भजोविण् ॥५।१।१४६॥

नाम्नः पराद्भजेर्विण् स्यात् । अर्धं भजतेऽर्धभाक् । विभाक् । णो वृद्ध्यर्थः इकार उच्चारणाय । वकारो विण् किपो' सारूप्यार्थः तेन विण्विषये न किप् ।

## मन्वन्क्वनिप्विच् क्वचित् ॥५।१।१४७॥

नाम्न' पराद्धातोरेते स्युः । क्वचिद्यथालक्ष्यम् । इन्द्रं शृणातीन्द्रशर्मा । सुशर्मा । क्वचिद्ग्रहणात्केवलादपि । शर्म हेम दामा पामा । वन् । भूरिदावा । घृतपावा । अग्रेगावा । विजावा ।

## वन्याङ् पचमस्य ॥४।२।६५॥

वनिपरे पंचमस्याङ् स्यात्विसास्वम् । क्वनिप् प्रातरित्वा । प्रातरित्वानौ । सुधीवा । केवलादपि कृत्वा । कृत्वानो । धीवा । पीवा । विच् । कीलालपाः । शुभंयाः । "पापमान रेडति पाप्मरेट्" । केवलादपि । रेट् । रोट् । वेट् । जागः । ककारपकारी कित्पित्कार्यार्थौ ।

## क्विप् ॥५।१।१४८॥

नाम्नः पराद्धातो' क्विप् प्रत्ययः स्यात् । क्वचित् । उख्येन उख्या वा स्रस्यते उखास्रत् । वाहाभ्रश्यति वाहाभ्रट् । धन्युपसर्गस्य बहुलं ॥३।२।८६॥ मिति बहुलग्रहणादुलवहयोर्दीर्घः । पर्णानि ध्वंसते । पर्णध्वत् ।

## गमा क्वौ ॥४।२।५८॥

गमादीनां यथावर्णमन्त्यस्य लुग्भवति । जगं गच्छतीति जगत् । शकान् हृयतीति शकहृ' । (दीर्घमवोन्त्य ।४।१।१०३। मिति दीर्घः) । परिक्ष्यतीति परिखी' यवक्षुः । ग्रलूः । अक्षधूः । मिथम्' । कटचिकीः । केवलादपि पाः । वाः । कीः । गीः । लुः । त्रुः । त्रुट् । पक् । सचिस्रु त्रिप भुव युव युज भिद भिद च्छिदजिनीराजिभ्यश्च । त्रिवि सीव्यतीति त्रिविपत् । ससम्या अलुप् । भीरुष्ठाना द्विस्वात् पासम् । शुसत् । समासत् । प्रसत् । उपसत् । अवस्' । यातखाः । भस्रः ।

## छदेरिस्मन्त्रट् क्वौ ॥४।२।३३॥

छदेरिसमन्" त्रिप्परं णौ ह्रस्वो भवति । इसि । वसि' । मनि । छद्म । त्रटि । छद्मम् छद्मी । क्विपि । उपच्छत् । धामच्छत् । यद् इति किम् । छात्रः ।

## स्पृशोऽनुदकात् ॥५।१।१४९॥

उदकवर्जितानाम्न' परात्स्पृशः' क्विप् स्यात् । घृतं स्पृशति घृतस्पृक् । मन्त्रस्पृक् । उदके तु उदकस्पर्शः । अनुदक इति पर्युदासामाश्रयणात् । उदकसदृशमनुपसर्गं नाम गृह्यते ।

## अदोऽनन्नात् ॥५।१।१५०॥

अन्नवर्जे नाम्नः परादद्रेः क्विप् स्यात्। शस्यमत्ति शस्यात्। अन्नवर्जेनादनात्। माधुलकास्करणात्। पिप्पलादः।

## क्रव्यात्क्रव्यादावामपक्वादौ ॥५।१।१५१॥

एतौ शब्दौ यथासङ्ख्यं क्विबणन्तौ साधू स्तः। यदि आमोऽपक्वाद्यभिधेयौ स्तः। क्रव्यमत्ति क्रव्यात्। आममांसभक्षः। क्रव्यादस्तु पक्वमांसभक्षः।

## त्यदाद्यन्यसमानादुपमानाद्व्याप्ये दृशष्टक्सकौ च ॥५।१।१५२॥

त्यदादेरन्यशब्दात्समानशब्दाच्चोपमानभूताद्व्याप्ये कर्मणि वर्तमानाद्दृशो व्याप्य एव टक्सकौ क्विप् च प्रत्ययाः स्युः। स इव दृश्यते तादृशः। तादृक्षः। तादृक्। तादृशी। अन्यादृशः। अन्यादृक्षः। अन्यादृक्। अन्यादृशी। सदृशः। सदृक्षः। सदृक्। सदृशी। मतान्तरे सक्ङित् तेन सदृक्षीत्यपि।

## अन्यत्यदादेराः ॥३।२।१५२॥

अन्यस्य त्यदादेश्च दृक् दृश् दृक्षेषु आकारोऽन्तादेशः स्यात्। अन्य इव दृश्यते अन्यादृक्। अन्यादृशः। अन्यादृक्षः। एवं तादृक् ३। मादृक् ३। त्वादृक् ३। मादृक् ३।

## इदंकिमीत्की ॥३।२।१५३॥

इदम ई किमः की स्यात्। अयमिव दृश्यते ईदृक् ३। क इव दृश्यते कीदृक् ३।

## कर्तुर्णिन् ॥५।१।१५३॥

कर्त्रर्थादुपमानात्पराद्धातोर्णिन् स्यात्। सिंहनादी।

## अजातेः शीले ॥५।१।१५४॥

अजातिवाचिनो नाम्नः पराद्धातोः शीलेऽर्थे णिन् स्यात्। उष्णभोजी। शीतभोजी। केचित्तु अनुपसर्गादिच्छन्ति। तदसत्। भाष्यविरोधात् सधमूषोपजीविमामिति प्रयोगाच्च।

## साधौ ॥५।१।१५५॥

नाम्नः पराद्धातोः साध्वर्थे णिन् स्यात्। साधुकारी। चारुवर्ती।

## ब्रह्मणो वदः ॥५।१।१५६॥

ब्रह्मवादी।

व्रताभीक्ष्ण्ये ॥५।१।१५७॥

अलवणभोजी ।

करणाद्यजोभूते ॥५।१।१५८॥

अग्निष्टोमयाजी ।

निन्द्ये व्याप्यादिन्विक्रियः ॥५।१।१५९॥

निन्द्ये इति किम् । घृतविक्रायः । द्विजो घृतविक्रयी निन्द्यः ।

हनोणिन् ॥५।१।१६०॥

पितृव्यघाती । असरूपत्वादणपि । पितृव्यघातः ।

ब्रह्मभ्रूणवृत्रात्क्विप् ॥५।१।१६१॥

एभ्यो भूतेऽर्थे हन्तेः क्विप् । ब्रह्म हतवान् ब्रह्महा ।

कृगः सुपुण्यपापकर्ममन्त्रपदात् ॥५।१।१६२॥

सोऽत्रपा पुण्यपापे कर्मणः परात्कृते कृगः क्विप् । सुष्ठु कृतवान् सुकृत् । पुण्यकृत् ।

सोमात्सुगः ॥५।१।१६३॥

भूते । सोमं सुतवान् सोमसुत् ।

अग्नेश्चेः ॥५।१।१६४॥

अग्निचित् ।

कर्मण्यग्न्यर्थे ॥५।१।१६५॥

दृशः क्वनिप् ॥५।१।१६६॥

व्याप्यात्पराद्दृशो भूतेऽर्थे क्वनिप् । बहुदृश्वा । णस्वरे ।२।४।४ ति ङीप्रत्यये बहुदृश्वरी ।

सहराजभ्यां कृग् युधेः ॥५।१।१६७॥

सह कृतवान् सहकृत्वा । सह युद्धवान् सहयुध्वा ।

अनोर्जनेर्डः ॥५।१।१६८॥

भूते पुमान्सममनुजातः पुमनुजः ।

सप्तम्याः ॥५।१।१६९॥

अप्सु जातम् । अप्जम् ।

## अजातेः पंचम्याः ॥५।१।१७०॥

मुद्रेर्जातं मुद्रिजः।

## क्वचित् ॥५।१।१७१॥

यथा लक्ष्यम्। किं जातेन किंजं। केन जातः किंजः। अलं जातेन अलंजं। द्विर्जातो द्विजः। न जातोऽजं।

## सुयजोर्ङ्वनिप् ॥५।१।१७२॥

सुनोतेर्यजतेश्च भूतेऽर्थे ङ्वनिप्। सुनोति स्म सुत्वा। सुत्वानौ। यज्वानौ।

## जृषोऽतृः ॥५।१।१७३॥

जीर्यतेर्भूतेऽतृः। जीर्यते स्म जरन् जरती। इति कर्तृकर्मोपपदाधिकारः।

## क्तक्तवतू ॥५।१।१७४॥

भूतेऽर्थे वर्तमानाद्धातोरेतौ प्रत्ययौ स्तः। क्रियते स्म कृतः कटः। करोति स्म कृतवानन्य भाष्यं। क्त कर्मणि भावे। क्तवतुः कर्तरि।

## श्लिषशीङ्स्थासवसजनरुहजृभजेः क्तः ॥५।१।९॥

कर्तरि वा स्यात्। आश्लिष्टः स्त्रीं नरः आश्लिष्टा वा स्त्री नरेण। अतिशयितो गुरुं शिष्यः। अतिशयितो वा गुरुः शिष्येण। आरम्भे अभिसर्पे क्तो वा कर्तरि। प्रकृतः कटं भवान्। कृतः कटो भवता। प्रकृतं भवता।

## गत्यर्थाकर्मकपिबभुजेः ॥५।१।११॥

एभ्यः कर्तरि क्तो वा स्यात्। गतोऽसौ ग्रामं गतो ग्रामोऽमुना। आसितोऽय मासितमनेन। पयः पीता गावः पीतं पयो गोभिः। सकर्मका अप्यविवक्षित कर्माणोऽकर्मकास्तेन पचितो भवान्। एवं चिचितं प्रवयातं।

## अद्यर्थाच्चाधारे ॥५।१।१२॥

अद्यर्थाद्धातोर्भूते यः क्तः स आधारे वा स्यात्। इदमेषां जग्धमिदं तैर्जग्धम्।

## क्त्वातुमम्भावे ॥५।१।१३॥

## भीमादयोऽपादाने ॥५।१।१४॥

भीमः। भीष्मः। भयानकः।

## सम्प्रदानाच्चान्यत्रोणादयः ॥५।१।१५॥

सम्प्रदानाच्चान्यत्र कारके भावे चोणादय प्रत्यया स्यु ।

## ज्ञानेच्छार्चार्थञीत्शील्यादिभ्यः क्तः ॥५।२।९२॥

सत्यर्थे स्यात् । राज्ञां ज्ञात । राज्ञामिष्टः । राज्ञामर्चित । ञीत् । मिन्न । भिन्नः शीलितो रक्षितः ।

## ऋल्वादेरेषा तो नोऽप्रः ॥४।२।६८॥

पूवर्जितदन्तात् ऋल्वादिभ्य परेषां त्किक्तक्तवतूनां तो न स्यात् । तीर्णिः । तीर्णः । तीर्णवान् । लून । लूनवान् । अप्र इति किम् । पूर्तः । पूर्तवान् ।

## रदादमूर्च्छमदः क्तयोर्दस्यच ॥४।२।६९॥

मूर्च्छमदवर्जाद्रदान्तात्परयो क्तयोस्तस्य न तद्योगे धातोर्दस्य च न स्यात् । पूर्णः । पूर्णवान् । भिन्न । भिन्नवान् ।

## सूयत्याद्योदितः ॥४।२।७०॥

सूयत्यादिभ्योनवभ्यओदिद्भ्यश्च परयो क्तयोस्तोन स्यात् । सून । सूनवान् । दून । दूनवान् । लग्न । लग्नवान् ।

## व्यञ्जनान्तस्थातोऽख्याध्यः ॥४।२।७१॥

व्यञ्जनात्परा या अन्तस्था तस्या परो य आकारस्तदन्तात् ख्याध्या वर्जि तधातोर्विहितयोः क्तयोस्तस्य नः स्यात् । स्त्यानः । स्त्यानवान् । निद्राणः । निद्राणवान् । म्लानः । म्लानवान् । अख्याध्यइतिकिम् । ख्यातः । ध्यातः ।

## क्षेः क्षी चाध्यार्थे ॥४।२।७४॥

ध्यणोरर्थो भावकर्मणी ततोऽन्यस्मिन्नर्थे विहितयोः क्तयोस्तकारस्य क्षिक्षय इत्येतस्मात्परस्य नकारः स्यात् । तद्योगे क्षेःक्षीश्च । क्षीण २ । अध्यार्थ इति किम् । क्षितमस्य । भावे क्तः ।

## ऋह्रीघ्राघ्रात्रोन्दनुदविन्तेर्वा ॥४।२।७६॥

एभ्यः परयो क्तयोस्तस्य नो वा स्यात् । ऋणम् । ऋतम् । ह्रीण । ह्रीणवान् । ह्रीतः । ह्रीतवान् । घ्राणः २ । समुन्न २ । नुन्नः २ । विन्दिंप् विचारणे । विन्नः २ । वित्तः । वित्तः अनिर्देशाद्वियतेर्विन्तेश्च नित्यं नकारः । विन्नः २ ।

## क्षैशुषिपचोमकवम् ॥४।२।७८॥

एभ्यः क्रमात् क्तयोर्मकवाः स्युः । क्षामः । क्षामवान् । शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ।

## निर्वाणमवाते ॥४।२।७९॥

निपातोऽयं निर्वाणो मुनिः । वातेनुकर्त्तरि निर्वातोवातः ।

## दुगोरूच ॥४।२।७७॥

दुगु आभ्यां परयो क्तयोस्तस्य न तत्सन्नियोगेऽनयोरूदन्तादेशः । दूनः । दूनवान् । गूनः । गूनवान् ।

## अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसफुल्लाः ॥४।२।८०॥

निपातः ।

## भित्तं शकलम् ॥४।२।८१॥

## वित्तं धनप्रतीतम् ॥४।२।८२॥

## क्षुधवसस्तेषाम् ॥४।४।४३॥

आभ्यां परेषां क्तक्तवतुक्त्वानामिट् स्यात् । क्षुधितः २ । उषितः २ ।

## लुभ्यञ्चेर्विमोहार्चे ॥४।४।४४॥

आभ्यां मोहपूजार्थाभ्यां प्रागुक्तानामादिरिट् स्यात् । विलुभितः २ । अञ्चितः २ ।

## ऋवर्णश्र्युर्णुगः कितः ॥४।४।५७॥

ऋवर्णान्तादेकस्वराद्धातोः श्रेरूर्णुगश्च परस्य कित इट् न स्यात् । वृतः । श्रितः । ऊर्णुतः । अनेकस्वरेतु । जागरितः । कितः किं । वरिता । ऋवर्णात् मान्यत् । युतः । स्तुतः ।

## पूङ्क्लिशिभ्यो नवा ॥४।४।४५॥

आभ्यां परेषां क्त्वादीनामादिरिड्वा स्यात् । पूतः । पवितः । क्लिष्टः । क्लिशितः ।

## डीयश्व्यैदितः क्तयोः ॥४।४।६१॥

डीयतेः श्वयतेरैदितश्च धातुभ्य परयोः क्तयोर्न आदि रिट् । डीनः २ । शूनः २ । त्रस्तः ।

## वेटोऽपतः ॥४।४।६२॥

पतिवर्जं विकल्पितेटो धातोरेकस्वरात्परयोः क्तयोर्नादिरिट् । रद्धः २ । अक्तः २ । गूढः २ । शान्तः २ । अस्तः । पतेस्तु पतितः २ । अनेक स्वरेतु दरिद्रितः ।

## न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः ॥४।३।२७॥

एभ्यः परौ सेटौ क्तौ किद्वत् स्याताम्। शयित २। डीङ् गतौ भौवादिकः। डीयतेस्तु डीनः १।

## उतिशवर्हाद्वधः क्तौ भावारम्भे ॥४।३।२६॥

उकार उपान्त्ये सति शवर्हेभ्योऽवादिभ्यश्च परौ भावारम्भे क्तक्तवत् सेटौ किद्वा स्याताम्। रुचितं रोचितं वा मुदितं मोदितं वा द्युतितं द्योतितं वा।

## आदितः ॥४।४।७१॥

आकारेतोधातोः परयोः क्तयोरिट् न स्यात्। मिन्नः २।

## नवा भावारम्भे ॥४।४।७२॥

भावारम्भयोः क्तयोर्वा इट्। मिन्नं मेदितं वा।

## श्वसजपवमरुपत्वरसंघुषास्वनामः ॥४।४।७५॥

एषामष्टानां क्तयोरिड्वा स्यात्। श्वस्तः। श्वसितः। जप्तः। जपितः। अद्‌न्वंचमस्येतिदीर्घे [४।१।१०७] वान्तः। वमितः। रुष्टः। रुषितः। तूर्णः। त्वरितः। संघुष्टः। संघुषितः। आस्वान्तः। आस्वनितः। अभ्यान्तः। अभ्यमितः।

## आः खनिसनिजनः ॥४।२।६०॥

खातः। सातः। जातः।

## णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम् ॥४।४।७४॥

एते णौ क्तान्ता वा निपात्यन्ते। दान्तः। दमितः। शान्तः। शमितः। पूर्णः। पूरितः। दस्तः। दासितः।

## स्फायः स्फीर्वा ॥४।१।९४॥

क्तयोः परतः। स्फातः स्फीतः १।

## क्तयोरनुपसर्गस्य ॥४।१।९२॥

प्यायः पीः क्तयोः परतः। पीनं पीनवत् मुखमुपसर्गेतु प्रप्यानो मेघः।

## प्राद्दागस्तआरम्भे क्ते ॥४।४।७॥

आरम्भार्थस्य प्रपूर्वस्य दागः तपरे त इति त्यआदेशो वा स्यात्। प्रत्तः। प्रदत्तः।

## निविस्वन्ववात् ॥४।४।८॥

एभ्यो दागः क तो वा स्यात्। दत्तिदो धत्ताविस्त्रसिन् परे आम्यनतस्यो

पसर्गस्य दीर्घः स्यात्। नीत्तम्। निदत्तम्। वीर्त्तं विदत्तम्। सूर्त्तं सुदत्तम्। अनु-त्तमनुदत्तम्। अवत्तमवदत्तम्।

## स्वरादुपसर्गाद्दस्ति कित्यधः ॥४।४।९॥

स्वरान्तादुपसर्गात्परस्य धावर्जस्य दासंज्ञस्य तादौ किति त् इति नित्य स्यात्। प्रत्तम्।

## दत् ॥४।४।१०॥

अधो दासंज्ञस्य तादौ किति दत् स्यात्। दत्ता।

## दोसोमास्थइः ॥४।४।११॥

एषां तादौ किति इः स्यात्। निर्दित २। सित २। मित २। स्थितः।

## छाशोर्वा ॥४।४।१२॥

अवच्छितः। अवच्छातः। निशितः। निशातः।

## धागः ॥४।४।१५॥

तादौ किति हिः स्यात्। विहितः। अपिहितः।

## यपिचादोजग्ध् ॥४।४।१६॥

तादौ किति यपि चादो जग्ध् स्यात्। जग्ध। घजादिविधे ।४।१।७९। रिति प्लुति। इष्टम्। उप्तम्। ऊढम्। उषितम्। आहूतः। उतः।

## स्वपेर्यङ्‌ङे च ॥४।१।८०॥

सुप्तः।

## तत्र क्वसुकानौ तद्वत् ॥५।२।२॥

परोक्षामात्रविषये धातोः क्वसुकानौ स्तः। तौ च परोक्षावत्। चकृवान्। चक्राणः।

## घसेकस्वरातः क्वसोः ॥४।४।८२॥

घसेरेकस्वरादादन्ताच्च धातोः परस्य क्वसोरादिरिट् स्यात्। जक्षिवान्। आदिवान्। पपिवान्। पेचिवान्। पेचानः।

## गमहनविदविशदशो वा ॥४।४।८३॥

एषां क्वसोरिड्वा स्यात्। जग्मिवान्।

### पक्षे मोनोम्वोश्च ॥२।१।६७॥

अगम्वान् । अग्मिवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशि वान् । विविश्वान् । ददृशिवान् । ददृश्वान् ।

### वेयिवदनाश्वदनूचानम् ॥५।२।३॥

एते कर्तरि क्वसुकानान्ता निपाताः । इयिवान् । अनाश्वान् । अनूचानः ।

### शत्रानः शावेष्यति तु सस्यौ ॥५।२।२०॥

पचन् । पठन् । पक्ष्यन् । पठिष्यन् । भविष्यन् ।

### अतोम आने ॥४।४।११४॥

धातोर्विहित आने परेऽकारस्यमोऽन्तः स्यात् । पचमानः । पक्ष्यमाणः । अत इति किम् । शयानः ।

### आसीनः ॥४।४।११५॥

निपातोऽयम् । आस्तेः परस्यामस्यादे रीत्वे कृते । आसीनः । उपासीनः । अवर्णाद्भसोतोवातु ।२।१।११५। रिण्यादिमा अतुः अन्तकरणे तुदन्ती । तुदती । भाती भान्ती स्त्री कुलेवा ।

### श्यशवः ॥२।१।११६॥

निजमन्त् । दिव्यन्ती । भवन्ती । वधूः कुले वा । अवर्णादित्येव । अदती । अस इति किम् । लुनती ।

### तौमाङ्ख्याक्रोशेषु ॥५।२।२१॥

मापचन् जाल्मो ज्ञास्यति । मापचमानोऽय गन्तुकामः ।

### पूङ्यज.शानः ॥५।२।२३॥

वर्तमाने । यजति-ते वा यजमानः ।

### वय. शक्तिशीले ॥५।२।२४॥

सत्यर्थे धातोर्वयः शक्ति शीलेषु गम्येषु शानः स्यात् । कतीह शिखण्डं वहमाना याता इत्यर्थः । कतीह हस्तिम निघ्नानाः । कतीह पराभिन्दमानाः ।

### धारीडोऽकृच्छ्रेऽतृश् ॥५।२।२५॥

सुखसाध्ये सत्यर्थे धारे रिङश्च परोऽतृन् स्यात् । धारयन्नाचाराङ्गम् । अधीयन्द्रुमपुष्पीयम् । असम्यकेऽपि न स्यात् ।

## सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये ॥५।२।२६॥

सत्यर्थे वर्तमानात्सुनोतेर्द्विष अर्हतश्चैतो अस्मात् सत्रिणि शत्रौ स्तुत्ये च कर्तरि अतृश् स्यात् । सत्री यजमान । सर्वे सुन्वन्तः । यज्ञस्वामिन इत्यर्थः । चौरं चौरस्य द्विषन् । शत्रुरित्यर्थ । पूजामर्हन् । प्रशस्य इत्यर्थः ।

## तृन् शीलधर्मसाधुषु ॥५।२।२७॥

शीलादिषु सदर्थाद्धातोस्तृन् स्यात् । कर्ता कटम् । वदिता जनापवादान् । शीलादि सदर्थोऽधिकारमस्वृति यावत् ।

## भ्राज्यलङ्कृग्निराकृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः ॥५।२।२८॥

एभ्य शीलादौ सदर्थे इष्णुः स्यात् । भ्राजते इत्येवंशीलः भ्राजिष्णु ।

## उदः पचिपतिपदिमदेः ।५।२।२९।

उत्पचिष्णुः । उत्पतिष्णुः ।

## भूजेः ष्णुक् ॥५।२।३०॥

कित्वान्न गुणः । भूष्णुः । जिष्णुः ।

## स्थाग्लाम्लापचिपरिमृजिक्षेः स्नुः ॥५।२।३१॥

स्थास्नु । ग्लास्नु । पक्ष्णु । परिमार्ष्णु । क्षेष्णु ।

## त्रसिगृधिधृषिक्षिपः क्नुः ॥५।२।३२॥

त्रस्नु । गृध्नु । धृष्णु । क्षिप्नु ।

## सन्भिक्षाशंसेरुः ॥५।२।३३॥

सन्नन्तात्भिक्षे शासश्च उ स्यात् । लिप्सु । भिक्षुः । आशंसु ।

## विन्द्विच्छू ॥५।२।३४॥

वेत्तेरिच्छतेश्च उ स्यात् । यथाक्रम नकारोपान्त्यता छकारान्तादेशश्च निपात्यते । वेदनशीलो विन्दु । एषणशील इच्छु । अयं विन्दुरित्यत्र विन्दुरपि पाणिनीयोणादिक उ ।

## शृवन्देरारुः ॥५।२।३५॥

शिरारुः । वन्दारु ।

## दाधेसिशदसदो रुः ॥५।२।३६॥

ददाति दयते यच्छति द्यति दाति दायति वेति दारुः । धारयतेस्तोगम् । धीयते धारु' । सिनोति सेरु । सीदते सद्रु' ।

## शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहे-
## रालुः ॥५।२।३७॥

शयालुः । आमन्ताणि (४।३।८५) अयादेशो । पतयालु' । स्पृहयालुः ।

## ङौ सासहिवावहिचाचलिपापतिः ॥५।२।३८॥
## सस्त्रिचक्रिदधियज्ञिनेमिः ॥५।२।३९॥

एते ङयन्ता निपात्यन्ते किरपि चानेन सूत्रेणैव । सासह्यत इत्येवंशीलः सासहिः वावह्यते वावहिः । पनीपद्यते पापति' । सरतीति सस्त्रि' । दधातीति दधि' । करोतीति चक्रिः । जायते जानाति वा जज्ञिः । नमति नेमिः । द्वित्वाभाव एत्वं च निपातनात् ।

## शृकमगमहनवृषभूस्थ उकण् ॥५।२।४०॥
## लषपतपदः ॥५।२।४१॥

तथा । शारुक' । कामुकः ।

## भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चानः ॥५।२।४२॥

भूषयतीति भूषण' । क्रोधनः । कोपनः । जवति' सौत्रः । जवनः । सरण' । चलशब्दार्थादकर्मकात् । चलनः । चलतीत्येवंशीलश्चलनः । कम्पन' । शब्दनः । रवणः ।

## इङितो व्यञ्जनाद्यन्तात् ॥५।२।४४॥

इकारानुबन्धात् ङकारानुबन्धात् व्यञ्जनमाद्यन्ते च व्यञ्जनाद्यन्तात्तस्मा द्धातोः शीलादौ सदर्थे । अन' स्यात् । इदित् स्पर्धनः इति । ङित् वर्त्तनः । णेर त्र विषय एव लोपे व्यञ्जनाद्यन्तत्वाच्चेतनः । जुगुप्सनः ।

## न णिङ्यसूददीपदीक्ष ॥५।२।४५॥

णिङन्तेभ्यो यान्तेभ्यः सूदादिभ्य' शीलादौ न अनः स्यात् । भावयिता । हस्तयिता वस्तुच्छयिता क्ष्मायिता । सूदिता । दीपिता ।

## द्रमक्रमो यङः ॥५।२।४६॥

यङन्ताभ्यामाभ्यामनः स्यात्। कुटिलं द्रमति क्रामतीति दंद्रमणः। चंक्रमणः। सकर्मकार्थं वचनम्।

## यजिजपिदंशिवदादूकः ॥५।२।४७॥

एभ्यो यङन्तेभ्य ऊकः स्यात्। यायजूकः। वावदूकः।

## जागुः ॥५।२।४८॥

प्राग्वत्। जागरूकः।

## शमष्टकाद् घिनण् ॥५।२।४९॥

शीलादौ शाम्यतीत्येवंशीलः। शमी। दमी। तमी। श्रमी। भ्रमी। क्षमी। प्रमादी। उन्मादी। क्लमी।

## युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहा-भ्याहनः ॥५।२।५०॥

योगी। भोगी। भागी। क्तेऽनिट इति गत्वम्।

## आङः क्रीडमुषः ॥५।२।५१॥

घिनण् स्यात्। आक्रीडी। आमोषी।

## प्राच्च यमयसः ॥५।२।५२॥

प्रादाङश्च पराभ्यामाभ्यां घिनण् स्यात्। प्रयामी। आयामी। प्रयासी। आयासी।

## मथलपः ॥५।२।५३॥

प्रात्पराभ्यामाभ्यां घिनण् स्यात्। प्रमाथी।

## वेश्च द्रोः ॥५।२।५४॥

विद्रावी। प्रद्रावी।

## विपरिप्रात्सर्तेः ॥५।२।५५॥

विसारी। प्रसारी।

## समः पृचैप्ज्वरेः ॥५।२।५६॥

सम्पर्की। संज्वरी।

संवेः सृजः ॥५।२।५७॥

संसर्गी। विसर्गी।

संपरिव्यनुप्राद्वदः ॥५।२।५८॥

संवादी। प्रवादी।

वेर्विचकत्थस्रम्भकषकसलसहनः ॥५।२।५९॥

विविनक्ति विवेकी। विकासी।

व्यपाभेर्लषः ॥५।२।६०॥

विलापी।

सम्प्राद्वसात् ॥५।२।६१॥

संवासी। प्रवासी।

समत्यपाभिव्यमेश्चरः ॥५।२।६२॥

संचारी। व्यभिचारी।

समनुव्यवाद्रुधः ॥५।२।६३॥

संरोधी।

वेर्दहः ॥५।२।६४॥

विदाही।

परेर्देविमुहश्च ॥५।२।६५॥

देवृधातुपर्यन्तः। परिदेवते परिदेवयति वा परिदेवी। परिमोही। परिवाही।

क्षिपरटः ॥५।२।६६॥

परिक्षेपी। परिराटी।

वादेश्च णकः ॥५।२।६७॥

परिपूर्वाच्छीलादौ सदर्थे वर्तमानाद्वदते' क्षिपरटिभ्यां च णकः स्यात्। परिवादकः।

निन्दहिंसक्लिशखादविनाशिव्याभाषासूयाऽने-
कस्वरात् ॥५।२।६८॥

णकः शीलादौ निन्दकः। हिंसकः।

## उपसर्गाद्देवृदेविक्रुशः ॥५।२।६९॥

परिदेवकः । आक्रोशकः ।

## वृङ्भिक्षिलुण्टिजल्पिकुट्टादाकः ॥५।२।७०॥

वराकः । भिक्षाकः ।

## प्रात्सूजोरिन् ॥५।२।७१॥

सुवतेर्जवतेश्च इन् शीलादौ । प्रसवी । प्रजवी ।

## जीणृदृक्षिविश्रिपरिभूवमाभ्यमाव्यथः ॥५।२।७२॥

एभ्य इन् स्याच्छीलादौ । जयी अत्ययी आदरी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ।

## सृघस्यदोमरक् ॥५।२।७३॥

सृमरः । घस्मरः ।

## भजिभासिमिदो घुरः ॥५।२।७४॥

भंगुरं काष्ठम् । भासुरं वपुः । मेद्यति मेदति वा मेदुरः ।

## वेत्तिच्छिदभिदः कित् ॥५।२।७५॥

छुरः । विदुरः । भिदुरः । च्छिदुरः ।

## मियोरुरुकलुकम् ॥५।२।७६॥

भीरुः । भीरुकः । भीलुकः ।

## सृजीणृनशष्ट्वरप् ॥५।२।७७॥

सृत्वरः । सृत्वरी । जित्वरः । इत्वरः । नश्वरः । नश्वरी ।

## गत्वरः ॥५।२।७८॥

निपातोऽयम् ।

## स्म्यजसहिंसदीपकम्पकमनमोरः ॥५।२।७९॥

स्मेरं मुखम् । नञ् पूर्वजसुच् क्षेपणे न जस्यत्यजस्रं भक्षणम् । अभ्ययमपि हिंस्रः । दीप्रः । कम्रः । नम्रः ।

## तृषि धृषि स्वपो नजिङ् ॥५।२।८०॥

एभ्यो नजिङ् स्यात् । तृष्यतीत्येवंशीलस्तृष्णक् । स्वप्नक् ।

## स्थेशभासपिसकसो वरः ॥५।२।८१॥

स्थावर'। ईश्वरः। भास्वर'। स्त्रियां स्थावरा। ईश्वरा। ईश्वरीति त्वौणादिके वरटि अश्नोतेः।

## यायावरः ॥५।२।८२॥

निपातोऽयम्। यङन्ताद्याते कुटिलं यात्येवंशीलः।

## दिद्युद्दृज्जगज्जुहूवाक्प्राड्धीश्रीद्रूस्रूज्वायतस्तू-
## कटप्रूपरिव्राड्भ्राजादयः क्विप् ॥५।२।८३॥

क्विपः। एते निपाताः क्विपन्ताः शीलादौ। द्योतते इत्येवंशीलो विद्युत्। कटप्रूः। कामरूपी। दधाति ध्यायति वा धीः। श्रयति श्रीः। बाहुलकात्स्वयम्भूः। हम्भूः। व्यसनसहाय इत्यादयः।

## शंसंस्वयंविप्राद् भुवो डुः ॥५।२।८४॥

सत्यर्थे। शं सुखं तत्र भवति शम्भु'। शंकर'। सम्भूर्जनिता। स्वयम्भूः। विभुर्व्यापक'। प्रभुः स्वामी।

## पुव इत्रो दैवते ॥५।२।८५॥

पवते' पुनातेर्वा देवतायां कर्तरि सत्यर्थे इत्रः स्यात्। पवित्रोऽर्हन्।

## ऋषिनाम्नोः करणे ॥५।२।८६॥

पूयतेऽनेन पवित्र ऋषिर्मन्त्र।

## लूधूसूखनिचरसहार्ते' ॥५।२।८७॥

एभ्यः सत्यर्थे करणे इत्र' स्यात्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। चरित्रम्। सहित्रम्। अरित्रम्।

## नीदाव्शसयुयुजस्तुतुदसिसिचमिहपतपान-
## हस्त्रट् ॥५।२।८८॥

एभ्यः सत्यर्थे करणे त्रट् स्यात्। नयत्यनेन नेत्रम्। दात्यनेन दात्रम्। शस्त्रम्। योत्रम्। स्तोत्रम्।

## हलक्रोडास्ये पुवः ॥५।२।८९॥

धातोः सत्यर्थे क्रोडास्य हलास्ये च करणे त्रट् स्यात्। पुनाति पवते वाऽनेन पोत्रं हलस्य सूकरस्य मुखम्।

## दंशेस्त्रः ॥५।२।९०॥

दशत्यनया दंष्ट्रा ।

## धात्री ॥५।२।९१॥

दृधेर्धातेर्वा निपातः । इति शीलाद्यर्थाधिकारः ।

## उणादयः ॥५।२।९३॥

सत्यर्थाद्धातोरुणादयो बहुलं स्युः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्यानुबन्धोपपदं विज्ञातव्यमुणादिषु ।१। साध्नोति साधयति वा साधुः । श्रयति श्रीः । हरति मनो हीरः रप्रत्ययः । सुवति सन्देहं सूरिः । रिक्प्रत्ययः । कमति दीप्यते कमकः । अकप्रत्ययः । शीलोऽस्य शीलः । कामयति कमलम् । अलप्रत्यये सिद्धिः । चरेर्णसे णित्वम् । चरणं । पृणाति धर्मं गुरुः । कृपोरुः । कल्पते । कृपेर्ऋः । रेफस्य लकारे कृपा । अवतीति उमक्प्रत्ययः । श्रीहीरकमकशालालङ्कृतकमलाद्गुरुपमा यौवैः ॥ भगः सिद्धिं श्रीमच्चारित्र गुरुकृपया श्री । इत्युणादयः समाप्ताः—

## क्रियाया क्रियार्थाया तुम् णकच् भविष्यन्ती ॥५।३।१३॥

यस्माद्धातोस्तुमादिर्विहितस्तद्वाच्या क्रिया अर्थः प्रयोजनं यस्यास्तस्यां क्रियायामुपपदे सत्यर्थवर्धाद्धातोस्तुम् णकच् भविष्यन्ती एते प्रत्ययाः स्युः । कर्तुं कारकः करिष्यामीति याति ।

## तुमश्च मनःकामे ॥३।२।१४०॥

तुमस्समो मनसि कामे च परे मकारस्य लुक् स्यात् । भोक्तुमनाः । गन्तुकामः ।

## क्त्वातुमम्भावे ॥५।१।१३॥

एते भावार्थमात्रे स्युः ।

## शकधृषज्ञारभलभसहार्हग्लाघटास्तिसमर्था- र्थे च तुम् ॥५।४।९०॥

शक्याद्यर्थेषु इच्छार्थेषु धातुषु समर्थार्थेषु नामसूपपदेषु कर्मभूताद्धातोस्तुम् स्यात् । शक्नोति पारयति वा भोक्तुमिच्छति पठितुं समर्थो भवितुम् ।

## पदरुजविशस्पृशो घञ् ॥५।३।१६॥

एभ्यो घञ् स्यात्कर्तरि । पद्यते पत्स्यते अपादि पेदे वा पादः ।

## सर्तेः स्थिरव्याधिबलमत्स्ये ॥५।३।१७॥

सर्तेरेषु कर्तृषु घञ् । सरतीति सारः स्थिरोऽर्थः । अतीसारः । सारो बलम् । विसारो मत्स्यः ।

## भावाकर्त्रोः ॥५।३।१८॥

भावे कर्तृवर्जिते च कारके धातोर्घञ् स्यात् । पाकः । त्यागः । रागः । दायः । धायः । भावः ।

## भूश्र्यदोऽल् ॥५।३।२३॥

भूश्र्यद्भ्यः सोपसर्गेभ्यो भावाकर्त्रोरल् स्यात् । प्रभवः । संश्रयः । विघसः ।

## न्यादो न वा ॥५।३।२४॥

न्यादः । निघसः ।

## संनिव्युपाद्यमः ॥५।३।२५॥

अल्वा । संयमः । संयामः ।

## नेर्नदगदपठस्वनक्वणः ॥५।३।२६॥

अल्वा । निनदः । निनादः । निपठः । निपाठः ।

## वैणे क्वणः ॥५।३।२७॥

प्राग्वत् प्रक्वणः प्रक्वाणः । वीणाशब्दः । अन्यत्र प्रक्वाण एव ।

## युवर्णवृदृवशरणगमृद्ग्रहः ॥५।३।२८॥

इवर्णोवर्णान्तेभ्यो वृदृवशरणगमृद्ग्रहिभ्यश्च भावाकर्त्रोरल् स्यात् । चयः । जयः । रवः । लवः । वरः । आदरः ।

## वर्षादयः क्लीबे ॥५।३।२९॥

अलन्ता निपाताः ।

## समुदोऽजः पशौ ॥५।३।३०॥

अल् भावाकर्त्रोः । समजः । पशुसमूहः । उदजः । पशुप्रेरणम् ।

## सृग्लहः प्रजनाक्षे ॥५।३।३१॥

प्रजनो गर्भग्रहणं तत्र उपसरः । अक्षाणां ग्लहः । ग्रहेर्लत्वं निपातनात् ।

## पणेर्माने ॥५।३।३२॥

शाकपणः ।

## सम्मदप्रमदौ हर्षे ॥५।३।३३॥

## हनोन्तर्घनान्तर्घणौ देशे ॥५।३।३४॥

निपातौ।

## प्रघणप्रघाणौ गृहांशे ॥५।३।३५॥

## निघोद्घसंघोद्घनापघनोपघ्नं निमितप्रशस्तगणा-त्याधानाङ्गासन्नम् ॥५।३।३६॥

निमितं तुल्यारोहपरिणाहम्। निघम् वृक्षम्। उद्घः प्रशस्तः संघो गणः। उद्घनो लोहपरिकर्मस्थानम्। अपघनमङ्गम्। अत्याधानं काष्ठछेदनस्थानम्। उद्घन एव उपघ्नः आसन्नः एते निपाताः।

## मूर्तिनिचिताभ्रे घनः ॥५।३।३७॥

मूर्तिः काठिन्यम्। निचितं निरन्तरम्। अभ्रो मेघः। एष्वर्थेषु हन्तेरल्। घनादेशश्च। घनः। केशा घनाः। घनो मेघः।

## वेरशब्दे प्रथने ॥५।३।६९॥

प्रथनं विस्तीर्णता वेः परात्स्तृणातेरशब्दे विषये प्रथने घञ्। विस्तारः। शब्दे तु विस्तरः।

## ट्वितोऽथुः ॥५।३।८३॥

ट्वितोर्भावाकर्त्रोरथुः स्यात्। मवथुः वमथुः वेपथुः।

## ड्वितस्त्रिमक् तत्कृतम् ॥५।३।८४॥

ड्वित् यस्य तस्माद्धातोर्भावाकर्त्रोस्त्रिमक् स्यात्। तेन चास्वार्थेन निर्वृत्त मित्यर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। कृत्रिमम्। उप्त्रिमम्। वागोवत्स्ति। इति तादेशो। परिभिमम्।

## युपुद्रोर्घञ् ॥५।३।५४॥

उत्पूर्वेभ्य एभ्यो भावाकर्त्रोर्घञ् स्यात्। अलोपवादः। उद्यावः। उत्पावः। उद्द्रावः।

## ग्रहः ॥५।३।५५॥

प्राग्वत्। उद्ग्राहः।

## न्यवाच्छापे ॥५।३।५६॥

शापे आक्रोशे गम्ये न्यवाभ्यां ग्रहेर्घञ् । निर्ग्राहो ते वृषल भूयात् । अवग्राहस्ते मूढ भूयात् ।

## प्राल्लिप्सायाम् ॥५।३।५७॥

ग्रहेर्घञ् भावाकर्त्रोः । पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी ।

## समो मुष्टौ ॥५।३।५८॥

ग्रहेर्घञ् स्यात् । मुष्टिरङ्गुलिसन्निवेशो न परिमाणम् । संग्राहो मल्लमुष्टेः । दार्ढ्यमित्यर्थः ।

## युदुद्रोः ॥५।३।५९॥

संपूर्वेभ्य एभ्यो घञ् स्यात् । संयावः । संदावः । संद्रावः ।

## नियश्चानुपसर्गाद्वा ॥५।३।६०॥

नयतेर्युदुद्रोश्च भावाकर्त्रोर्घञ् वा स्यात् । नयः । नायः । यवः । यावः । दवः । दावः । द्रवः । द्रावः ।

## वोदः ॥५।३।६१॥

उत्पूर्वान्नयतेर्वा घञ् । उन्नायः । उन्नयः ।

## अवात् ॥५।३।६२॥

अवपूर्वान्नयतेर्नित्यं घञ् स्यात् । अवनायः ।

## परे र्द्यूते ॥५।३।६३॥

परिणायेन शारीन् हन्ति ।

## भुवोऽवज्ञाने वा ॥५।३।६४॥

अवज्ञानमसत्कारपूर्वोऽधिक्षेपः । परिभवः । परिभावः ।

## यज्ञे ग्रहः ॥५।३।६५॥

पूर्वपरिग्राहः । अयज्ञे परिग्रहः ।

## सस्तो. ॥५।३।६६॥

संपूर्वात्स्तौतेर्घञ् भावकर्त्रोः । संस्तुवन्त्यत्र संस्तावः । देशः उच्यते । अन्यत्र संस्तवः ।

## प्रात्स्रुद्रुस्तोः ॥५।३।६७॥

घञ्। प्रस्रावः। प्रद्राव'। प्रस्ताव ।

## अयज्ञे स्त्रः ॥५।३।६८॥

प्रपूर्वात्स्त्र इत्यस्मात् घञ्। अयज्ञे प्रस्तारः। यज्ञे तु प्रस्तरः। बर्हिष्प्रस्तरः।

## छन्दो नाम्नि ॥५।३।७०॥

छन्दः पद्यो वर्णविन्यासः। विपूर्वात्स्तृणाते छन्दोविषये घञ् स्यात्। विष्टारः। आस्तारः। पंक्ति ।

## क्षुश्रोः ॥५।३।७१॥

क्षौते' शृणोतेश्च विपूर्वात् घञ्। विक्षाव । विश्राव'।

## न्युदो ग्रः ॥५।३।७२॥

नि० उद्० पराद् गिरतेर्गृणातेर्वा घञ् भावाकर्त्रोः। निगारः। उद्गार ।

## किरो धान्ये ॥५।३।७३॥

न्युत्पूर्वात्किरतेर्धान्यविषये धात्वर्थे वर्तमानात् घञ् स्यात्। धान्यस्य निकारः उत्कारो वा राशिरित्यर्थ'।

## नेर्वृः ॥५।३।७४॥

निपूर्वाद्वृञ् वृणातेर्वृणोतेर्वा धान्यविशेषे धान्ये घञ्। नीवारः।

## घञ्युपसर्गस्य बहुलम् ॥३।२।८६॥

घञन्त उत्तरपदे परे उपसर्गस्य बहुल दीर्घः स्यात्। नीक्षारः। प्रतीहारः। प्रावारः। क्वचिन्न विहार। प्रभावः। प्रतापः। क्वचिद्विभाषा। परिणामः। परीणामः। प्रतिबोधः। प्रतीबोध'।

## इणोऽभ्रेषे ॥५।३।७५॥

स्थितेरचलनमभ्रेषः। निपूर्वादिणोऽभ्रेष घञ्। भावाकर्त्रोः। शास्त्रलोक प्रसिद्ध्यादिना निपतमयन न्याय'।

## परे. क्रमे ॥५।३।७६॥

क्रम' परिपाटी तदर्थं इणो घञ्। तवपर्यायो मोगृमक्रमे पर्ययः।

## व्युपाच्छीङः ॥५।३।७७॥

घञ्। तवैव तव राजविशाय'। मम उपशाय'। क्रममाप्त कार्यमित्यर्थः। अक्रमे तु विशयः। उपशय'।

## हस्तप्राप्ये चेरस्तेये ॥५।३।७८॥

तद्विषयार्थाच्चिनोतेर्घञ् स्यात् । अचौर्ये । पुष्पप्रचायः । अपचायः ।

## चितिदेहावासोपसमाधानेकश्चादेः ॥५।३।७९॥

एष्वर्थेषु चिनोतेर्घञ् तत्सन्नियोगे चादेः कादेशः । आकाय यज्ञेऽग्निं चिन्वीत । कायो देहः । आवासे निकायः । उपसमाधाने गोमयनिकायः ।

## संघेऽनूर्ध्वे ॥५।३।८०॥

अनूर्ध्वसंघे चिनोतेर्घञ् । नास्ति कुतोऽप्यूर्ध्वमुपरि किंचिद्यस्मिन्सोऽनूर्ध्वः धर्मि । चादेः कः । वैयाकरणनिकायः ।

## माने ॥५।३।८१॥

माने गम्ये धातोस्तथैव घञ् । मानमियत्तासंख्यापरिमाणम् । एको निष्पावः । एकस्तण्डुलापचायः । एकस्तण्डुलनिश्चायः । एकः कारः । द्वौ कारौ । त्रयः काराः । निष्पावः समित्समाहारः ।

## स्थादिभ्यः कः ॥५।३।८२॥

भावाकर्त्रोः । आखूनामुत्थानमाखूत्थो वर्तते । प्रतिष्ठितमस्मिन्प्रस्थः । व्यवतिष्ठन्तेऽनया व्यवस्था । प्रभात्यस्मिन् प्रभः । प्रपिबन्त्यस्यां प्रपा । विध्यत्यनेन विधः । विहन्यतेऽनेनास्मिन्वा विघ्नः । आधीयते इत्याधिः । नितरां धीयते निधिः । विधिः ।

## व्याप्यादाधारे ॥५।३।८८॥

व्याप्यपूर्वाद्धासञ्ज्ञादाधारे किः स्यात् । जलधिः ।

## अन्तर्द्धिः ॥५।३।८९॥

## स्त्रियां क्तिः ॥५।३।९१॥

भावाकर्त्रोः । स्त्रियां क्तिः स्यात् । कृतिः । भस्यादे ।४।१।९८। रिति भक्ते कूभिः पचि च ।४।४।१६। ति जग्धादेशो जग्धिः ।

## सातिहेतियूतिजूतिज्ञप्तिकीर्त्ति॰ ॥५।३।९४॥

एते क्त्यन्ता निपात्यन्ते । सुनोतेः सिनोतेः स्यतेर्वा आत्वं निपातनात् । सातिः । हिनोतेर्गुणे हन्तेर्घोन्त्यस्वरादेरत्वं हेतिः । यौतेर्यूतिः । जवतेर्जूतिः । उभयोर्दीर्घः ।

## आसटिव्रज्यजः क्यप् ॥५।३।९७॥

एभ्यो भावे स्त्रियां क्यप् स्यात् । आस्या । अट्या । व्रज्या । इज्या ।

## कृगः श च वा ॥५।३।१००॥

भावाकर्त्रोः स्त्रियां पक्षे क्यप् । कृत्या ।

## मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धान्तर्द्धा ॥५।३।१०१॥

एते निपाताः ।

## परेः सृचरेर्यः ॥५।३।१०२॥

आभ्यां परिपूर्वाभ्यां यः स्यात् । परिसर्या । परिचर्या ।

## वाऽटाट्यात् ॥५।३।१०३॥

अटाट्या । पक्षे अप्रत्ययः । अटाटा ।

## जागुरश्च ॥५।३।१०४॥

जागर्या । जागरा ।

## शंसि प्रत्ययात् ॥५।३।१०५॥

शंसेः प्रत्ययान्तेभ्यश्च भावाकर्त्रोः स्त्रियामः स्यात् । प्रशंसा । चिकीर्षा ।

## क्तेटो गुरोर्व्यञ्जनात् ॥५।३।१०६॥

क्तेयट्सहितस्तस्माद्गुरुमतो व्यञ्जनान्ताद्भावाकर्त्रोः स्त्रियामः स्यात् । ईहा । ऊहा । ईक्षा ।

## पितोऽङ् ॥५।३।१०७॥

पितो धातोर्भावाकर्त्रोरङ् स्यात् । पचा ।

## भिदादयः ॥५।३।१०८॥

एते भिदादयोऽङन्ता निपाताः । भिदा । विदा विदारणा । छिदा द्वैधीकरणम् । मृजा शरीरसंस्कारः । क्षिपा प्रेरणम् । कृपा अनुकम्पा । रुजा रोगः । धुरा । तृष्णा ।

## नञोऽनिः शापे ॥५।३।११७॥

नञ्पूर्वाद्धातोः शापे गम्ये भावाकर्त्रोः स्त्रियामनिः स्यात् । अजननिस्ते वृषल । भूयात् । अकरणिः ।

## ग्लाहाज्यः ॥५।३।११८॥

एभ्यः स्त्रियां भावाकर्त्रोरनिः स्यात् । ग्लानिः । हानिः । ज्यानिः ।

## प्रश्नाख्याने वेञ् ॥५।३।११९॥

प्रश्ने आख्याने गम्ये स्त्रियां भावाकर्त्रोरिञ् वा स्यात्। कां त्वं कारि मकार्षीः। कां कारिकां क्रियां कां कृत्यां कां कृतिं वा वचनात्। पचामासम्।

## पर्यायार्हर्णोत्पत्तौ च णकः ॥५।३।१२०॥

पृच्छर्थेषु प्रश्ने आख्याने गम्ये धातोर्णकः स्यात्। स्त्रियां भावाकर्त्रोः क्तयादेरपवादः। पर्यायः क्रमः। परिपाटीति यावत्। भवत आसिका भवत आसितुं क्रम इत्यर्थः। अर्हणं मर्हं योग्यता। अर्हति भवानिक्षुभक्षिकाम्। ऋणं यत्परस्मै धार्यते। इक्षुभक्षिकां मे धारयसि। उत्पत्तिर्जन्म। इक्षुभक्षिका मे उदपादि। प्रश्ने कां त्व कारिकामकार्षीः। आख्याने सर्वां कारिकामकार्षमिति भावे धात्वर्थनिर्देशे धातोर्णकः स्यात्। आसिका। शायिका। जीविका।

## क्लीबे क्तः ॥५।३।१२३॥

नपुंसके भावे क्तः स्यात्। तव हसितम्।

## अनट् ॥५।३।१२४॥

क्लीबे भावेऽर्थे धातोरनट् स्यात्। गमनम्। भोजनम्। हसनम्।

## करणाधारे ॥५।३।१२९॥

अनयोरर्थयोर्धातोरनट् स्यात्। घञाद्यपवादः। लेखनी। कर्त्तनी। गोदोहनी। पचनी स्थाली।

## रम्यादिभ्यः कर्तरि ॥५।३।१२६॥

अनट्। रमणी। कमनी। भक्षणी।

## पुन्नाम्नि घ ॥५।३।१३०॥

करणाधारयोः धातोर्घः स्यात्। पुंसि दन्तच्छदः।

## एकोपसर्गस्य च घे ॥४।२।३४॥

उत्तिष्ठः। आकरः।

## न्यायावायाध्यायोद्यावसंहारावहाराधारदार-जारम् ॥५।३।१३४॥

एते घञन्ता निपाताः।

## इकिश्तिवृस्वरूपार्थे ॥५।३।१३८॥

धातोः स्वरूपे वाच्ये चैते स्युः । भक्षि । कृषि । वेत्तिः । पचतिः । परिसृपि ।

## दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात्खल् ॥५।३।१३९॥

कष्टार्थाद्दुर' अकष्टार्थाभ्यां स्वीषद्भ्यां च परात्धातो' खल् स्यात् । भावे क र्मणि च । कृत्याद्यपवाद' । दु'खेन शाप्यते दु'शय स्वया दुष्कर' कट' । सुशयं सुकर' । ईषच्छय ईषत्करः ।

## शासि युधि दृशि धृषि मृषातोऽनः ॥५।३।१४१॥

दु'स्वीषत्पूर्वेभ्य एभ्यः पचभ्य । आदन्ताच धातोरन' स्यात् । दुर्योधनः । दु'शासन' । ईषच्छासम' । दुरुत्थानम् ।

## प्राक्काले ॥५।४।४७॥

परकालेन भावयेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद्धातोः सम्बन्धे क्त्वा वा स्यात्। अव्ययकृतो भाव इति पाणिमिना (ये) क्त्वाप्रत्ययो भावे। भुक्त्वा व्रजति। आसित्वा भुङ्क्ते।

## हाकोहिः क्त्व ॥४।४।१४॥

हित्वा । उवर्णादि ।४।४।५८। तीङ्क्रिषेधे भूत्वा ।

## जृव्रश्चःक्त्वः ॥४।४।४१॥

भाभ्यां परस्य क्त्वाप्रत्ययस्यादिरिट् स्यात्। जरीत्वा। व्यादिरय विकार्येस्तु सानुबन्धस्य जीर्त्वा व्रश्चित्वा ।

## उदितो वा ॥४।४।४२॥

क्त्वाप्रत्ययस्यादिरिट् वा । दान्त्वा । दमित्वा । शमित्वा । भूत्वा । देवित्वा। द्युत्वा । क्षुधवस इतीटि क्षुधित्वा । उषित्वा । लुभ्यञ्चेरिति लुभित्वा । घिमो ऽर्थे विना लुब्ध्वा । पूजायामञ्चित्वा । गतौ । अक्त्वा । पूङ्क्लिशिभ्योन वा ।४।४। ४५। इतीट् । पूत्वा पवित्वा । क्लिष्ट्वा । क्लिशित्वा ।

## क्त्वा ॥४।३।२९॥

धातोः सेट् क्त्वा किद्वन्न स्यात्। देवित्वा । वर्तित्वा ।

## स्कन्दस्यन्दः ॥४।३।३०॥

भाभ्यां परः क्त्वा किद्वन्न स्यात्। स्कन्त्वा । स्यन्त्वा ।

## क्षुधक्लिशकुषगुधमृडमृदवदवसः ॥४।३।३१॥

एभ्यः परः क्त्वा सेट् किद्वत्। मृडित्वा। उदित्वा। रुदविदेति कित्त्वे रुदित्वा मुषित्वा सुप्त्वा। पृष्ट्वा।

## जनशो न्युपान्त्ये तादिः क्त्वा ॥४।३।२३॥

जान्ताद्धातोर्नशेश्च नकारे उपान्त्ये सति तकारादिः क्त्वा किद्वा स्यात्। रक्त्वा। रङ्क्त्वा। नंष्ट्वा। नष्ट्वा। नीति किम्। युक्त्वा। सृष्ट्वा।

## ऋत्तृषमृषकृशवञ्चलुञ्चथफः सेट् ॥४।३।२४॥

न्युपान्त्ये सति एभ्यः सेट् क्त्वा किद्वा स्यात्। यथासम्भवम्। ऋतित्वा। अर्तित्वा। तृषित्वा। तर्षित्वा। मृषित्वा। मर्षित्वा। लुचित्वा। लुञ्चित्वा। ग्रथित्वा। ग्रन्थित्वा। गुफित्वा। गुम्फित्वा। न्युपान्त्येति विशेषणम्। थकारफकारान्तानां नान्येषाम्। सम्भवव्यभिचाराभावात्।

## अनञः क्त्वो यप् ॥३।२।१५४॥

नञ्वर्जिताव्ययात्पूर्वपदात् परं यदुत्तरपदं तदवयवस्य क्त्वाप्रत्ययस्य यबादेशः स्यात्। प्रणत्य। प्रणम्य। प्रकृत्य। प्रदाय। अनञ् इति किम्। अकृत्वा।

## लघोर्यपि ॥४।३।८६॥

लघोः परस्य णेर्यपि परोऽय् स्यात्। प्रशमय्य।

## वाप्नोः ॥४।३।८७॥

आप्नोतेः परस्य णेर्यपि अय् वा स्यात्। प्रापय्य। प्राप्य।

## मेङो वा मित् ॥४।३।८८॥

यपि। अपमित्य। अपमाय।

## क्षेः क्षी ॥४।३।८९॥

यपि। प्रक्षीय। अदोजग्ध् "इति जग्धादेशे" प्रजग्ध्य।

## यपि ॥४।२।५६॥

यम्यादीनां यपि लुक् स्यात्। प्रहत्य।

## वा मः ॥४।२।५७॥

यम्यादीनां मान्तानां यपि वा लुक्। प्रयम्य। प्रयत्य।

## निमील्यादिमेङस्तुल्यकर्तृके ॥५।४।४६॥

तुल्यो धात्वर्थान्तरेण कर्ता यस्य तद्वृत्तिभ्यो निमील्यादिभ्यो मेङश्च धातोः सम्बन्धे क्त्वा वा स्यात्। अक्षिणी निमील्य हसति। मुखं व्यादाय स्वपिति।

## निषेधेऽलंखल्वोः क्त्वा ॥५।४।४४॥

निषेधार्थयोरलंखल्वोरुपपदयोर्धातोः क्त्वा वा स्यात्। अलंकृत्वा न कर्तव्यमित्यर्थः। खलुकृत्वा। ( खलुमाङर्थ इत्यर्थः )

## परावरे ॥५।४।४५॥

अस्मिन्नपि क्त्वा वा स्यात्। अतीत्य नदीं गिरिः। नद्याः पर इत्यर्थः।

## णमुल् चाभीक्ष्ण्ये ॥५।४।४८॥

परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे णमुल् क्त्वा वा स्यात्। भोजं भोजं याति। भुक्त्वा भुक्त्वा याति।

## भृशाभीक्ष्ण्याविच्छेदे द्विः प्राक्तमबादेः ॥७।४।७३॥

क्रियायाः साकल्यं भृशार्थः। पौनःपुन्यमाभीक्ष्ण्यं। क्रियान्तरेणाव्यवधानमविच्छेदः। एषु द्योत्येषु यत्पदं वाक्यं वा स्यात् तद्द्विरुच्यते तमबादेः प्रागेव। घटादिरिति वा दीर्घे घाटं घाटं घटं घटम्।

## अन्यथैवंकथमित्थंसु कृञोऽनर्थकात् ॥५।४।५०॥

एभ्यः परस्मात्करोतेस्तुल्यकर्तृकार्थवृत्तेरनर्थकाद्धातोः सम्बन्धे णमुल् स्यात्। अन्यथाकारं भुङ्क्ते। एवंकारम्। इत्थंकारम् नमति। आनर्थक्यं करोतेरन्यथा विध्यं पृथगर्थाभावात्।

## दंशेस्तृतीयया ॥५।४।७३॥

तृतीयान्तेन योगे उपपूर्वाद्दंशेस्तुल्यकर्तृकेऽर्थे वर्तमानात् णमुल् वा स्यात्। अन्यस्य धातोः सम्बन्धे सति। मूलकेनोपदंशं भुङ्क्ते मूलकोपदंशं वा भुङ्क्ते।

## स्वाद्वर्थाददीर्घात् ॥५।४।५३॥

स्वाद्वोरर्थे वर्तमानाददीर्घान्ताद्व्याप्यात् परस्मात्तुल्यकर्तृकात् कृञो धातोः सम्बन्धे णमुल् वा स्यात्। स्वादुंकारं मिष्टंकारं भुङ्क्ते। पक्षे स्वादु कृत्वा।

## विद्दृग्भ्यः कार्त्स्न्ये णम् ॥५।४।५४॥

अतिथिवेदं भोजयति। कन्यादर्शं वरयति।

## व्याप्याच्चेवात् ॥५।४।७१॥

व्याप्यात्कर्मणश्चकारात्कर्तुश्च इवार्थादुपमानाद्धातोः सम्बन्धे णम् वा स्यात् । सुवर्णनिधायं निहितः । ओदनपाकं पक्वः । कर्तुरुपमाने काकनाशं नष्टः ।

## यावतो विन्दजीवः ॥५।४।५५॥

कार्त्स्न्यविशिष्टाद्व्याप्याद्यावच्छब्दात्पराभ्यां विन्दजीवाभ्यामेककर्तृके वर्तमानाभ्यां धातोः सम्बन्धे णम् वा स्यात् । विन्दतेश्चानिर्देशात् । लाभार्थस्य ग्रहणम् यावद्वेदं देवप्रतिमाः पूजयतः । सफलकमलाः स्फुरन्ति । यावल्लाभमभिलषतः । यावद्वेदं देवगुरुधर्माः । यावज्जीवमभीष्टसिद्धिश्च ।

## वर्णाव्ययात्स्वरूपेकारः ॥७।२।१५६॥

वर्णेभ्योऽव्ययेभ्यश्च स्वरूपे स्वार्थे कारः प्रत्ययः स्यात् । ॐकारः । ह्रींकारः । श्रींकारः ।

## रादेफः ॥७।२।१५७॥

रेफः । रकारः । प्रायोऽनुवृत्तेरन्यत्रापि । अत एव नमस्कारः श्रेयसे । श्रीसिद्धहैमचन्द्रशाब्दिकतीर्थैः प्रगुणीकृता । चन्द्रप्रभातरा सम्यक् सुखायैषा मया शुभा ॥१॥ इति श्रीसिद्धहैमचन्द्रविरचितायां बृहत्प्रक्रियायां चन्द्रप्रभाख्यायां कृदन्तप्रक्रिया सम्पूर्णा । श्रीशङ्खेश्वरपार्श्वप्रभुध्यानावधानार्थवान् बालोऽप्युद्यत्सकलकीर्तिकान्तिपटलैर्जैनैश्च शुभाम्बरः ॥ भानोः प्रेरणया प्रपन्नविनयो वृत्तिं द्वितीयां व्यधात् श्रीमेघाद्विजयाह्वयावाचकवरश्चन्द्रप्रभाख्यामिमाम् ।

इति श्रीमन्मेघविजयोपाध्यायविरचिता चन्द्रप्रभा (हैमकौमुदी) समाप्ता ॥

अध्येतृणामध्यापकानां च शुभं भूयात् ॥



५६ ष्टुभ अपनयने
५७ अर्च पूजायाम्
५८ अञ्चु गतौ च
५९ वञ्चु चञ्चु तञ्चु त्वञ्चु मञ्चु
म्लुञ्चु म्रुचु म्लुचु ग्रुचु ग्लुचु
ग्लुञ्चु षस्ज गतौ
६० ग्रुचु ग्लुचु स्तेये
६१ म्लेच्छ अव्यक्तायां वाचि
६२ लछ लाछि लक्षणे
६३ वाछि इच्छायाम्
६४ आछि आयामे
६५ ह्रीछ लज्जायाम्
६६ हुर्छा कौटिल्ये
६७ मुर्छा मोहसमुच्छ्राययोः
६८ स्फुर्छा स्मुर्छा विस्मृतौ
६९ युछ प्रमादे
७० धृज धृञ्ज ध्वज ध्वञ्ज ध्रज ध्रञ्ज वज
व्रज षस्ज गतौ
७१ अज क्षेपणे च
७२ कुजु खुजु स्तेये
७३ अर्ज षर्ज अर्जने
७४ कर्ज व्यथने
७५ खर्ज मार्जने च
७६ खज मन्थे
७७ खजि गतिवैकल्ये
७८ एजृ कम्पने
७९ ट्वोस्फूर्जा वज्रनिर्घोषे
८० क्षीज कूज गुज गुञ्ज अव्यक्ते शब्दे
८१ लज लञ्ज तर्ज भर्त्सने
८२ लाज लाञ्ज भर्जने च
८३ जज जञ्ज युद्धे
८४ तुज हिंसायाम्
८५ तुञ्ज पालने च
८६ गज गञ्ज गृज गृञ्ज मुज मुञ्ज मृज
मृञ्ज मज शब्दे

८७ गज मदने च
८८ त्यज हानौ
८९ षज सङ्गे
९० कटे वर्षावरणयोः
९१ शट रुजाविशरणगत्य-
वसादनेषु
९२ वट वेष्टने
९३ किट खिट त्रासे
९४ शिट षिट अनादरे
९५ जट झट सङ्घाते
९६ पिट शब्दे च
९७ भट भृतौ
९८ तट उच्छ्राये
९९ खट काङ्क्षे
१०० णट नृत्तौ
१०१ हट दीप्तौ
१०२ षट अवयवे
१०३ लुट विलोटने
१०४ चिट प्रैष्ये
१०५ विट शब्दे
१०६ हेठ विबाधायाम्
१०७ अट पट इट किट
कट कटु कटी गतौ
१०८ कुडि वैकल्ये
१०९ मुड प्रमर्दने
११० चुट चुड्ड अल्पीभावे
१११ वडि विभाजने
११२ रुडि लुडि स्तेये
११३ स्फुट स्फुटि विशरणे
११४ लट बाल्ये
११५ रट रठ च परिभाषणे
११६ पठ व्यक्तायाम् वाचि
११७ वठ स्थौल्ये
११८ मठ मदनिवासयोश्च
११९ कठ कृच्छ्रजीवने

| | | |
|---|---|---|
| १२० | हठ | बलात्कारे |
| १२१ | उठ रुठ लुठ | उपघाते |
| १२२ | पिठ | हिंसासंक्लेशयो॰ |
| १२३ | शठ | कैतवे च |
| १२४ | शुठ | गतिप्रतिघाते |
| १२५ | कुठु लुठु | आलस्ये च |
| १२६ | शुठु | शोषणे |
| १२७ | अठ रुठु | गतौ |
| १२८ | पुड | प्रमर्दने |
| १२९ | मुड | खण्डने च |
| १३० | मडु | भूषायाम् |
| १३१ | गडु | वदनैकदेशे |
| १३२ | शौडृ | गर्वे |
| १३३ | कौडृ | सम्बन्धे |
| १३४ | मेडृ म्रेडृ म्लेडृ लोडृ लौडृ उन्मादे | |
| १३५ | रोडृ रौडृ तौडृ | अनादरे |
| १३६ | क्रीडृ | विहारे |
| १३७ | तुडृ तूडृ जौडृ | तोडने |
| १३८ | हुडृ हूडृ हूडु होडृ गतौ | |
| १३९ | लोडृ | प्रतिघाते |
| १४० | चिड | आक्रोशे |
| १४१ | अड | उद्यमे |
| १४२ | लड | विलासे |
| १४३ | कडु | मदे |
| १४४ | कडु | कार्कश्ये |
| १४५ | मडु | अभियोगे |
| १४६ | उडु | हावकरणे |
| १४७ | भण रण वण भ्रण धण भण भ्रण मण धण ध्वण भ्रण कण क्वण चण शब्दे | |
| १४८ | ओणृ | अपनयने |
| १४९ | शोणृ | वर्णगत्योः |
| १५० | श्रोणृ श्लोणृ | सघाते |
| १५१ | पैणृ | गतिप्रेरणश्लेषणेषु |
| १५२ | चिते | संज्ञाने |
| १५३ | अत | सातत्यगमने |
| १५४ | च्युतृ | आसेचने |
| १५५ | श्चुतृ श्चुतृ श्च्युतृ क्षरणे | |
| १५६ | श्वुतृ | भासने |
| १५७ | अतु | बन्धने |
| १५८ | चित | निवासे |
| १५९ | चात | घृणागतिस्पर्द्धेषु |
| १६० | कुथु पुथु लुथु मथु मन्थ मान्थ हिंसासंक्लेशयोः | |
| १६१ | खाद | भक्षणे |
| १६२ | षद | स्थैर्ये |
| १६३ | खद | हिंसायाम् च |
| १६४ | गद | व्यक्तायाम् वाचि |
| १६५ | रद | विलेखने |
| १६६ | णद शिक्विदा | अव्यक्ते शब्दे |
| १६७ | अर्द | गतियाचनयोः |
| १६८ | नर्द गर्द गर्द | शब्दे |
| १६९ | तर्द | हिंसायाम् |
| १७० | कर्द | कुत्सिते शब्दे |
| १७१ | खर्द | दृशाने |
| १७२ | अदु | बन्धने |
| १७३ | इदु | परमैश्वर्ये |
| १७४ | विदु | अवयवे |
| १७५ | णिदु | कुत्सायाम् |
| १७६ | उनदु | स्मृतौ |
| १७७ | चदु | दीप्त्याल्हादनयोः |
| १७८ | त्रदु | चेष्टायाम् |
| १७९ | कदु क्रदु क्लदु | रोदनाह्वानयोः |
| १८० | क्लिदु | परिदेवने |
| १८१ | स्कदृ | गतिशोषणयोः |
| १८२ | षिधु | गत्याम् |
| १८३ | षिधौ | शास्त्रमाङ्गल्ययोः |
| १८४ | शुन्ध | शुद्धौ |
| १८५ | स्तन धन ध्वन चन स्वन वन शब्दे | |
| १८६ | षन वन | संभक्तौ |

